# उपसर्गार्थचन्द्रिका

(A THESAURUS
OF
SANSKRIT PREPOSITIONAL VERBS)

सेयं

वाक्यपदीयस्य सँस्कर्त्री श्रीगान्धिचरिताऽनुवादकला-प्रस्ताव-
तरङ्गिणी-शब्दापशब्दविवेक-वाक्यमुक्तावली-व्याकरण-
चन्द्रोदय-वाग्व्यवहारादर्शादीनामनेकेषां ग्रन्थानां
निर्मात्रा व्याकरणमहाभाष्यस्य विवरीत्रा
श्रीरामकृष्णतनुजनुषा
श्रीचारुदेवशास्त्रिणा प्रणीता

तत्रायं चतुर्थः खण्डः
(अधि—परि)

स एष
भारतीय विद्या प्रकाशनस्य
देहली-वाराणसीस्थस्याऽ-
ध्यक्षेणाभिरूपेण रूपेण प्राकाश्यं नीतः ।

प्रकाशक:
**भारतीय विद्या प्रकाशन**
१-यू० बी० बंगलो रोड, जवाहर नगर,
दिल्ली-११०००७

(२) पो० बा० १०८, कचौड़ी गली
वाराणसी-२२१००१

द्वितीय संस्करणम् : चतुर्थः खण्ड १९९७ वत्सरे

मूल्यम् : अस्य खण्डस्यः ६०.००

मुद्रक: — तरुण आफसेट प्रिन्टर्स, दिल्ली-53
दूरभाष 2260794

# निवेदना

अद्य मासचतुष्टयोत्तरं वर्षद्वयं तृतीयस्य खण्डस्य प्राकाश्यं गतस्य । चतुर्थस्य प्रकाशने कस्मादियान्व्याक्षेपोऽभूदिति समस्य विन्यस्यते—नहि ग्रन्थप्रणयने मान्थर्यं तत्र कारणतामयान्न च ग्रन्थान्तरप्रणयने प्रसङ्गः । चतुर्थस्य खण्डस्य प्रणीतस्य सतोऽभ्यर्धः संवत्सरो व्यगाद्यदा मुद्रणप्रक्रमोऽभूत् । प्रकाशनोत्कोऽपि प्रकाशकः साधनविकल इति नापपारन्मुद्रणं प्रवर्तयितुम् । कालात्ययमसहमानो विस्रसां च स्वां विवर्धमानां वीक्षमाणोऽहं स्वेनैवार्थेन विनियुक्तेन प्रावर्तिषि । प्रवृत्तं च मुद्रणं तथा कूर्मगत्या प्रावृतद्यथा पुरः प्रत्तेऽपि प्रदेयेऽर्थे मासनवकेन पर्यवसितमभूत् । एतावन्तमनेहसं प्रत्यपीपलन्नुन्मनसः प्रिया मे पठकाः पाठकाश्चेति तानुदारचरितान्विनीतवत्क्षमयामि, प्रत्येमि च त एतत्खण्डप्रतिपाद्यमपीतरैः सममास्वादिष्यन्ते बह्वादेयं चेहादास्यन्त इति कथितकथ्य इहैव वाचमवसाययाम्यहं विदां विधेयश्चारुदेवः शास्त्री ॥

## PREFACE

It is now two years and four months since the third Fasciculus was published. The reason why the publication of the fourth Fasciculus was delayed so long may be briefly stated – It is not that I have been slow in compiling it or that I have been engaged in writing some other work. The fourth Fasciculus in manuscript form lay with me for a year and a half before it went to the press. The Publisher, thougth very keen to publish it could not undertake its publication for lack of the necessary wherewithals. Unable to endure the passage of time any more and perceiving the growing decreptitude of my body, I invested my own money in the undertaking and sent the ms. to the Press. The Press, though paid in advance proceeded at a snail's pace and took nine months to complete the printing. My friends, the the students and the teachers who waited anxiously all this time would kindly excuse me with their large-heartedness. I hope they would relish this fourth Fasciculus as they have done the first three and profit by it a deal. I have said all I had to say; hence conclude.

Surabhi, 3/54,
Roop Nagar, Delhi-7
5th October, 1981

CHARUDEVA SHASTRI

ओं नमः परमात्मने ।

नमो भगवते पाणिनये ।

नमः शिष्टेभ्यः । नमः पूर्वेभ्यः पथिकृद्भ्यः ।

उपसर्गा निषिञ्चन्ति वाच्यपूर्वां मनोज्ञताम् ।
इत्युपसर्गवाल्लभ्यमृषीणां सम्प्रसिध्यति ॥१॥

अतो वाचो विवेक्तारो वक्तारो वाग्मिनः किल ।
धातूपसर्गयोगेण तं तमर्थं प्रचक्षते ॥२॥

संहितासु सभाष्यासु निषत्सूपनिषत्सु च ।
भारते चादिकाव्ये च कल्पेषु स्मरणेषु च ॥३॥

यः प्रायो ह्युपसर्गाणां काव्यनाटकयोस्तु सः ।
गद्ये समासभूयिष्ठेऽथो विमृग्यक्रिये कुतः ॥४॥

आसंहितं समाहारं समाहारमुदाहृतीः ।
आकाव्यनाटकं चायमुपसर्गार्थसङ्ग्रहः ॥५॥

प्राक्तनान्नूतनाच्चापि वाङ्मयात्सम्प्रणीयते ।
शिष्टप्रयुक्तिपद्यायाः प्रव्यक्तं प्रतिपत्तये ॥६॥

उपसर्गा द्योतकाः केचिद्वाचकाश्चाप्यमी स्मृताः ।
अनर्थकाश्च लक्ष्यन्ते केचिद् वस्तुस्वभावतः ॥७॥

धातूपसर्गयोरैक्यं वादिनः केचिदास्थिताः ।
सम्भूयाप्यर्थवाचित्वं ते नः सूक्ष्मदृशो मताः ॥८॥

इतीदं पक्षनानात्वं सम्प्रधार्यावधारितम् ।
संख्यया पश्चिमः पक्षो गुणैरेष ह्यपश्चिमः ॥९॥

कृत्यामास्वादमास्वादमेतस्यां वर्तनीं नवाम् ।
नवार्थस्यातिसन्तृप्ताः सम्प्रेष्यन्ते विपश्चितः ॥१०॥

अनिशं भासमानां ते चकोराः शब्दवित्तमाः ।
प्रत्यग्रां चन्द्रिकां चेमां निपेष्यन्ते समुत्सुकाः ॥११॥

काम्यो हि वेदाधिगमः (मनु० २।२)। वेदाधिगमो वेदस्वीकरणं वेदाध्यायः। दुरधिगमः परभागः (पञ्चत० ५।३४)। दुराप इत्यर्थः। परभागः प्रकर्षः।

—गुप् (गुपू रक्षणे)। ब्रह्माधिगुप्तः (आश्व० गृ० २।४)। ब्रह्मणा कृतरक्षः, ब्रह्मणा विहितावेक्षः।

—चर् (चर गतिभक्षणयोः)। अधि यदयां स्नुभिश्चराव (ऋ० ७।८८।३)। अधिरुपर्यर्थे। उपरिष्टाच्चलेवेत्यर्थः। स्वधिचरणे त इयमस्तु यामुपरिष्टादधिचरसि (श० ब्रा० १।९।१।८)। उक्तोऽर्थः। अनर्थकोऽधिः। तदर्थस्योपरिष्टादित्यनेनोक्तत्वात्। असौ मे मुख्यो भार्यां स्नुषां भगिनीं दुहितरं वाऽधिचरति (कौ० अ० ११।१।४५)। बलात्स्वीकृत्योपभुङ्क्त इत्यर्थः। परिगृहीतां दासीमाहितिकां वा संरुद्धिकामधिचरतः पूर्वः साहसदण्डः (कौ० अ० ४।९।२३)। अधिचरतो गच्छतः प्रकुर्वाणस्य।

—जन् (जनी प्रादुर्भावे)। यं दन्तमधिजायते नाडी तं दन्तमुद्धरेत् (सुश्रुते)। दन्तमधिजायते दन्तस्योपरि जायते। ब्राह्मणो जायमानो हि पृथिव्यामधिजायते (मनु० १।९९)। अधिको जायते, सर्व-लोकस्योपरि भवतीति मेधातिथिः। अङ्गादङ्गात्संभवसि हृदयादधिजायसे (पा० गृ०)। आत्मनो वा एतमधिजनयति (श० ब्रा० ७।४।१।१)। अधिजनयति समुत्पादयति। मातुरग्रेऽधिजननं द्वितीयं मौञ्जिबन्धने (मनु० २।१६९)। अधिजननं जननं जनिः।

—ज्ञा (ज्ञा अवबोधने)। आशङ्के नाधिजाने त्वं यतस्तूर्णमुपागतः (रा० ३।३१।३८)। नाधिजाने न निश्चिनोमि।

—तन् (तनु विस्तारे)। अथ धनुरधितनोति (श० ब्रा० ५।३।५।२७)। सज्यं कृत्वा कर्षतीत्यर्थः। हेमच्छन्नैरधिततान (गजान्) (रा० ५।१२।३३)। अधिततान आववार आच्छादयामास।

—दिव् (दिवु क्रीडाविजिगीषाद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु)। अधिदेवनम्। अधि उपरि दीव्यते यत्र, द्यूतफलकम्।

—द्रु (द्रु गतौ)। वृषा योषामधि द्रवति (श० ब्रा० १।७।२।१२, ३।८।५।७) आरोहतीत्यर्थः।

—धा (डुधाञ् धारणपोषणयोः)। प्रवाच्यं तद् वृषणा कृतं वां नार्षदाय श्रवो अध्यधत्तम् (ऋ० १।११७।८)। अध्यधत्तम् अधिकं दत्तवन्तावित्यर्थः। चरुमधिदधाति (कौ० सू० २।७)। अधिश्रयतीत्यर्थः। अधि द्वयोरदधा उक्थ्ये

वचः (ऋ० १।८३।३)। अध्यदधाः=अददाः। व्यतारीः। प्रादिक्षः। विश्वा अधि श्रियो दधे (ऋ० २।८।५)। अधिदधे आत्मनि दधार, स्वतन्त्वामाविर्भावयामास। दिवे दिवे अधि नामा दधाना (ऋ० १।१२३।४)। अधिदधाना अधिकं दधाना परिगृह्णाना। पाप्माऽधिधीयमाना (ब्रह्मगवी) (अथर्व० १२।५।३०)। अधिधीयमानाऽऽक्रम्यमाणा।

—धृ (धृञ् धारणे)। इहैवाग्ने अधि धारया रयिम् (वा० सं० २७।४)। अधिधारय अधिकं धेहि। अहं सप्त स्रवतो धारयं वृषा द्रवित्न्वः पृथिव्यां सीरा अधि (ऋ० १०।४९।९)। अध्यधारयमध्यकरवं स्वायत्ता अकरवम्। सायणस्त्वधिशब्दं सप्तम्यर्थानुवादीति मन्यते। पृथिव्यामधीत्येवं योजयति।

—नम् (णम प्रह्वत्वे शब्दे च)। भूषन्न योधि बभ्रूषु नम्नते (ऋ० १।१४०।६)। अधिनम्नते=अधिनम्नमीति उपरि निर्भरं नमति, नम्रो भवति।

—नह् (णह बन्धने)। उपानदधिनहन० (नि० २।१।११ इत्यत्र दुर्गः)। अधिनहनमुपरिनहनम्।

—नी (णीञ् प्रापणे)। मा नः पथः पित्र्यान्मानवादधि दूरं नैष्ट (ऋ० ८।३०।३)। मा दूरमपगमयत, मा स्म दूरमवक्षिपतेत्याह। यदस्य मन्युरधिनीयमानः शृणाति वीळु रुजति स्थिराणि (ऋ० १०।८९।६)। अधिनीयमानो वृद्धिमुपनीयमानः।

—नृत् (नृती गात्रविक्षेपे)। ग्रावा त्वैषोऽधि नृत्यतु (अथर्व० १०।९।२)। अघ्न्यामुद्दिश्य वचनम्।

—ब्रू (ब्रूञ् व्यक्तायां वाचि)। भूमिरधि ब्रवीतु मे (अथर्व० १२।१।५९)। अधिब्रवीतु पक्षपातेन ब्रवीतु। अधिवचनं प्रशंसावचनं भवति। रक्षा च नो अधि च ब्रूहि देव (ऋ० १।३५।११)। यद् ब्राह्मणायाध्याहाऽऽत्मने तदाह (तै० सं० २।५।११।९)। अधिब्रूहि मा (अथर्व० ८।२।७)। पक्षपातेन वचनमधिवचनम्। मदीयोऽयमिति वदेति सायणः। ते नोधिब्रूत (अथर्व० ३।२६।१)। उक्तोऽर्थः। सोऽस्मभ्यमधिब्रवत् (अथर्व० १।१६।१) कस्तोकाय क इभायोत रायेऽधि ब्रवत् तन्वे को जनाय (ऋ० १।८४।१७)। उक्तोऽर्थः। यद् ब्राह्मणश्च चाब्राह्मणश्च प्रश्नमेयातां ब्राह्मणायाधि ब्रूयात् (तै० सं० २।५।११।९)। अनन्तरोदित एवार्थः। धिगस्तु क्षत्तारमधिब्रुवाणः (भा० सभा० ६७।१)। अधिकं निर्मर्यादं ब्रुवाणः। इति शब्दोऽध्याहार्यः। इति ब्रुवाण इति पाठान्तरम्।

—बाध् (बाधृ विलोडने)। न चैकः स (विदुरः) समर्थोऽस्मान्पाण्डवार्थेऽधिबाधितुम् (भा० आदि० १४२।२२)। अधिबाधितुम् उपपीडयितुं कदर्थयितुं विप्रकर्तुम्।

—भू (सत्तायाम्)। स यत्कुमारं जन्मनोऽग्रेऽधिभावयति (ऐ० उ० २। १)। अधिरानन्तर्यमाह। भावयति संस्करोति।

—भ्रंश् (भ्रंशु अधःपतने)। विशस्त्वा सर्वा वाञ्छन्तु मा त्वद्राष्ट्रमधि भ्रशत् (अथर्व० ६।८७।१, वा० सं० १२।१)। माऽधिभ्रशत् माऽवपप्तत्, मा नशत्।

—मन्थ् (मन्थ विलोडने)। उत्पाटचत इवात्यर्थं नेत्रं निर्मथ्यते तथा। शिरसोऽर्धं तु तं विद्यादधिमन्थं स्वलक्षणैः (सुश्रुते)॥

—यत् (यती प्रयत्ने)। वक्षस्सु रुक्मां अधि येतिरे शुभे (ऋ० १।६४।४)। अधिशब्दः सप्तम्यर्थानुवादी। येतिरे रचयामासुः, न्यासुः।

—यम् (यम उपरमे)। या वः शर्म शशमानाय सन्ति दाशुषे यच्छताधि (ऋ० १।८५।१२)। अधियच्छत विस्तारयत। देवेषु मे अधि कामा अयंसत (ऋ० १०।६४।२)। अध्ययंसत उद्यताः।

—या (या प्रापणे)। कुतोऽधियास्यसि क्रूर निहतस्तेन पत्त्रिभिः (भट्टि० ८।९०)। केन प्रकारेण निःसरिष्यसीत्यर्थः।

—युज् (युजिर् योगे)। भवतादधि युक्ता त्वम् (भट्टि० २०।१३)। अधियोगो ज्योतिषप्रसिद्धो यात्रिकशुभयोगः। योगे क्षेममथाधियोगगमने क्षेमं रिपूणां वध इति मुहूर्तचिन्तामणिः।

—रक्ष् (रक्ष पालने)। त्रैलोक्यं योधिरक्षति (हरि० १५८११)। अधिस्थाता सन्गोपायतीत्यर्थः।

—रुह् (रुह बीजजन्मनि)। पुत्रो मातरं स्वसारं चाधिरोहति (ऐ० ब्रा० ७।१३)। मैथुनायारोहतीत्यर्थः। अधिरोहन्ति यं नित्यं पिशाचाः पुरुषं प्रति (भा० वन० २३०।५२)। पादाहतं यदुत्थाय मूर्धानमधिरोहति (शिशु० २।४६)। अधिरोहति उपरिगच्छति। पुराऽधिरूढः शयनं महाधनम् (कि० १।३८)। शयनमधिरूढः अधिशयान इत्यर्थः। कार्मुकं च बलिनाधिरोपितम् (रघु० ११।८१)। अधिरोपितमारोपितज्यम्। उदारक इति प्रीतलोकाधिरोपितापरश्लाघ्यनामनि (दशकु० ५०)। अधिरोपितं हितम्, कृतम्। प्रतिज्ञां चाधिरोहस्व (भा० शां० ५९।१०६)। समये स्थिरो भवेत्याह।

**—वच्** (**वच परिभाषणे**)। अधि वोचा नु सुन्वते (ऋ० १।१३२।१)। **पक्षपातेन ब्रूहि।** विश्वाहेन्द्रो अधिवक्ता नो अस्तु (ऋ० १।१०२।११)। अध्यवोचदधिवक्ता प्रथमो दैव्यो भिषक् (वा० सं० १६।५) **उक्तोऽर्थः।** नमस्ते अधिवाकाय परादाकाय ते नमः (अथर्व० ६।१३।२)। अधिवाकाय **अधिवचनं** पक्षपातेन वचनं कुर्वते। तमिद्धनेषु हितेष्वधिवाकाय हवन्ते (ऋ० ८।१६।५)। **अधिवाकाय पक्षपातेन वचनाय।** तस्माच्छ्वोऽध्युच्यते (अथर्व० ११।८।३४)। **अधिरर्थे नान्तरं करोति। उच्यत इत्येवार्थः।**

**—वद्** (**वद व्यक्तायां वाचि**)। इमामगृभ्णन् रशनामृतस्येत्यधिवदति (तै० ब्रा० ३।८।३।२)।

**—वप्** (**डुवप बीजसन्ताने।** बीजसन्तानं क्षेत्रे विकिरणं गर्भाधानं च)। अथ हविरधिवपति (श० ब्रा० १।२।१।१८)। **अधिवपति अधिप्रक्षिपति।** अग्नये जुष्टमधिवपामि (आप० श्रौ० १।६।२१।५)। **उक्तोऽर्थः।**

**—वस्** (**वस निवासे**)। गिरिमधिवसेस्तत्र विश्रामहेतोः (मेघ० २५)। **गिरौ वसेस्तिष्ठेः।** बाल्यात्परामिव दशां मदनोऽध्युवास (रघु० ५।६३)। **परस्यां दशायामुवासेत्यर्थः।** उदितेऽनुदिते चैव समयाध्युषिते तथा। सर्वथा वर्तते यज्ञ इतीयं वैदिकी श्रुतिः (मनु० २।१५)॥ **सूर्यनक्षत्रवर्जितः कालः समयाध्युषितशब्देनोच्यत इति कुल्लूकः।** उवाच राजन्सङ्ग्रामेऽध्युषिते पर्युपस्थिते (भा० कर्ण० ३६।४)। **अध्युषिते प्रातः काले।** तस्यापि स एव गिरिरधिवासः (काद० १३७)। **अधिवासो वसतिः।** वसन्ति मन्नियोगेन अधिवासं च राक्षसाः (रा० ३।३६।४)। **अधिवासः संवसथः। यागारम्भादर्वाङ् पूर्तेः संस्कारोऽप्यधिवास उच्यते। अधिवासः प्रायोपवेशनमप्याह। तच्च कस्य चिद् गृहस्य पुरस्तात् तावद्भवति यावत्स प्रार्थितार्थवितरणविरोधं न परिहरति। जन्मभूरप्यधिवास उच्यते।** तथा च भारते प्रयोगः—जातिश्रेण्यधिवासानां कुलधर्मांश्च सर्वतः। वर्जयन्ति ये धर्मं तेषां धर्मो न विद्यते (शां० ३६।१९)॥ अथैनावधिवासेन सम्प्रोर्णुवन्ति (श० ब्रा० १३।५।२।२)। **अधिवास उपरिष्टादाच्छादनक्षमं वासः, बृहतिका प्रावरणं वा।** अधीवासेन प्रच्छादयति स्वर्गे लोक इति (का० श्रौ० २०।६।१४)। **उक्तोऽर्थः।** स दीर्घकालाध्युषितं पूर्ववैरमनुस्मरन् (भा० द्रोण० १७६।४)। (**वैरं**) **दीर्घकालाध्युषितं चिरोषितं चिरन्तनम्। यमनुशय इत्याहुः।**

**—वह्** (**वह प्रापणे**)। अध्युह्य धुरं युञ्जन्ति (श० ब्रा० १।४।४।१३)। तस्मादृच्यध्यूढं साम गीयते (छा० उ० १।६।१)। **अध्यूढमधिगतमुपरिभावेन**

स्थितम्। कृतसापत्निकाऽध्यूढाधिविन्ना (अमरः)। अध्यूढायाश्च यद् दुःखं साक्षिभिर्विहितस्य च (भा० सभा० ६८।८३)। उक्तोऽर्थः। अध्यूढ इति शिवनामस्वन्यतमम्। अनूढाया आपन्नसत्त्वाया यदपत्यं तदप्यध्यूढशब्दवाच्यं भवति। तथा च भारते प्रयोगः—तथा दत्तकृतौ पुत्रावध्यूढस्तथाऽपरः (अनु० ४९।४)।

—वास् (वास उपसेवायाम्)। तद्वनं सर्वं स्वगन्धेनाध्यवासयत् (भा० पु० १०।६५।१९)। सौरभ्ययुक्तमकरोत्। तस्मै पर्णमयं दिव्यं दिव्यपुष्पाधिवासितम् (भा० शां० १७०।८)। उक्तोऽर्थः। मन्दारपुष्पैरधिवासितायाम् (विक्रम० ४।६४)। अधिवास्यात्मनाऽत्मानं विधिदृष्टेन कर्मणा (हरि० ५९९४)।

—विद् (विद्लृ लाभे)। कीर्ति श्रिया प्रणयिनीं लब्धयाधिविवेद सः (राज० ५।१३५)। जीवन्त्यामूढपूर्वायां स्त्रियां द्वितीयस्या वेदनमधिवेदनं भवति। अधिवेत्ता पुरुषो भवति, तत्र प्रथमा। द्वितीयायां करणे तृतीया प्रयुज्यते पूर्वस्यां तु द्वितीयेति प्रतिष्ठितो व्यवहारः। कालिदासस्त्व् इमं व्यवहारमन्यथयति। तदस्य निरङ्कुशत्वमात्रं न व्यवहारविकल्पः—अधिविविदुरमात्यैराहृतास्तस्य यूनः। प्रथमपरिगृहीते श्रीभुवौ राजकन्याः (रघु० १८।५२)॥ अत्र द्वितीयपरिग्रहभूतानां राजकन्यानाम् अधिवेदनक्रियायां कर्तृत्वं प्रथमान्तत्वं च व्यवहारं भनक्ति। इत्थम्भूतप्रयोगे धात्वर्थासङ्गतिश्चाभिव्यक्तेति व्यक्तम्। प्रियवादिनीं मधुरभाषिणीं यस्त्यजति अधिविन्दति (याज्ञ० १।७६ मिताक्षरायाम्)। अधिविन्ना तु या नारी निर्गच्छेद्रुषिता गृहात् (मनु० ९।८३)। अधिविन्ना कृताधिवेदना। बन्ध्याऽष्टमेऽधिवेत्तव्या (मनु० ९।८१)। उक्तोऽर्थः।

—वृज् (वृजी वर्जने)। अधिवृणक्त्येवैष पुरोडाशम् (श० ब्रा० १।२।२।४)। अधिवृणक्ति अग्नावधिश्रयति।

—वृत् (वृतु वर्तने)। त्रीण्युलूखलान्यधि वर्तयति द्वे दृषदौ (भा० श्रौ० ६।१६।८)। अधिवर्तयति निदधाति, रचयति प्रयुनक्ति।

—शी (शीङ् स्वप्ने)। लङ्कावनं सिंहसमोऽधिशेते (भट्टि० १०।३६)। लङ्कावने शेत इत्यर्थः। अथाधिशिश्ये प्रयतः प्रदोषे रथम् (रघु० ५।२८)। उपविवेशेत्यर्थः। या (आहुतयः) हुता अधिशेरते किं ताभिर्जयति (श० ब्रा० १४।६।१।१०)। अधिशेरते नीचैस्तिष्ठन्ति। वचसि यमधिशय्य स्यन्दते वाचकश्रीः (का० सू० वृ० १।२।२१ इत्यत्रोद्धृतः श्लोकः)।

कर्तुमुद्युक्थाः । साहसं मा व्यवसासीरित्यर्थः । नेदवसितानध्यवस्यानीति (श० ब्रा० ७।१।१) । अवस्थितानामुपरि वसानीत्याह । अथारणी पाणौ कृत्वा शालामध्यवस्यति (श० ब्रा० ३।१।१।११) । अध्यवस्यति जुषते । कथमिदानीं दुर्जनवचनादेवमध्यवसितमार्येण (उत्तर० १) । अध्यवसितमवधारितं निश्चितम् । भर्तुः संनाहसदृशः शूरोऽध्यवसितः सुतः (बृ० श्लो० सं० ५।६५) । अध्यवसित उद्युक्तः । ग्रामेणाध्यवसिते (श्मशाने) क्षेत्रेण वा नानध्यायः (आप० ध० १।३।६।७) । ग्रामतया स्वीकृत इति हरदत्तः । ग्रामेण निगीर्णे इति तु वयम् । व्रतं दुष्करमध्यवसितम् (हितोप० १) । व्यवसितं परिगृहीतम् । अध्यवसायो बुद्धिः (सां० त० कौ०) । संभावनं क्रियासु योग्यताध्यवसाय इति बोपदेवः । अध्यवसाय उत्प्रेक्षणम् । न स्वल्पमप्यध्यवसायभीरोः करोति विज्ञाननिधिर्गुणं हि (हितोप० १) । अध्यवसाय उद्योगो यत्नः साहसम् । बुद्धिरध्यवसानाय साक्षी क्षेत्रज्ञ उच्यते (भा० शां० २८५।१७) । अध्यवसानाय व्यवसायार्थाय, निश्चयाय । संभावनं क्रियासु योग्यताऽध्यवसानं शक्तिश्रद्धानम् (३।३।१५४ सूत्रे वृत्तिः) । निगीर्याध्यवसानं तु प्रकृतस्य परेण यत् (का० प्र० १०) । अध्यवसानं तादात्म्यापादनम् । अकार्यं कार्यवदध्यवस्य (=अध्यवसाय) (दशकु० ८६) । अभिमत्य, चिन्तयित्वा । धर्माश्रमेऽध्यवसिनां ब्राह्मणानां युधिष्ठिरः (भा० शां० ६४।६) । अध्यवसिनां व्रसोपेतानाम् ।

—हन् (हन हिंसागत्योः) । पूर्वविघातेन विनुषीकरणेपि पुनरवघातोऽध्यवहननम् ।

### अध्याङ् (अधि+आङ्)

—क्रम् (क्रमु पादविक्षेपे) । अध्याक्रान्ता वसतिरमुनाप्याश्रमे सर्वभोग्ये (शा० २।१४) । अध्याक्रान्ताऽङ्गीकृता । अध्याक्रम्य पशूंश्चापि घ्नन्ति वै भक्षयन्ति च (भा० वन० १३८२७) । अध्याक्रम्य उपरि पतित्वा ।

—चर् (चर गतिभक्षणयोः) । शय्यासनेऽध्याचरिते श्रेयसा न समाविशेत् (मनु० २।११९) । अध्याचरिते श्रेयसा विद्याधिकेनान्येन सह साधारण्येन गुरुणा स्वीकृते शय्यासनेपि नोपविशेत् इत्युक्तं भवति । शय्या चासनं चेति शय्यासनम् । समाहारद्वन्द्वः ।

—धा (डुधाञ् धारणपोषणयोः) । अंसौ को अस्य तद् देवः कुसिन्धे अध्यादधौ (अथर्व० १०।२५) । अध्यादधौ अध्याहितवान् । अध्यारोपितवान् । ग्रीवासु मुखमध्याहितम् (ऐ० ब्रा० १।२५,३।४१) । स्कम्भेऽध्यृतमाहितम्

(अथर्व० १०।७।२६)। अध्याहितकलां यस्य कालशक्तिमुपाश्रिताः (वा० प० १।२)। अध्याहिता आरोपिता अध्यस्ताः।

—भू (भू सत्तायाम्)। प्राड्विवाकमध्याभवेत् (गौ० ध० २।४।२७)। अधिरुपरिभाव ऐश्वर्ये वा। आङागमने। प्राड्विवाकमुपर्यासीनमधः स्थितशिवरं वा गुणभूतः सन्नागच्छेत्कार्यार्थीति हरदत्तो मिताक्षरायाम्।

—रुह् (रुह बीजजन्मनि)। वसुधा विष्णुपदं द्वितीयमध्यारुरोहेव रजदछलेन (रघु० १६।२८)। अध्यारुरोह आरुरोह आरूढवती। बुद्धिहीनोप्युच्छ्रितोपि भूभृत् परै रध्यारुह्यमाणमात्मनं न चेतयते (दशकु० १५४)। अध्यारुह्यमाणः परवान् क्रियमाणः परवत्तां नीयमानः। दोषानपि गुणपक्षमध्यारोपयद्भिः (काद० १०८)। मिथ्या गुणरूपतां प्रापयद्भिः। ततोऽध्यारूढानां पदमसुजनद्वेषजननम् (मुद्रा० ५।१२)। अध्यारूढानामुच्चैरधिकारं गतानाम्। आयुधपरिग्रहं यावदध्यारूढो दुर्योगः (उत्तर० ६)। अध्यारूढो वृद्धिं गतः। अध्यारूढा खारी द्रोणेन (पा० ५।२।७३ सूत्रे वृत्तौ)। खारी द्रोणान्न्यूनेत्यर्थः। वस्तुन्यवस्तुत्वारोपोऽध्यारोपः (वे० सा०)।

— वप् (डुवप बीजसन्ताने)। अनेकस्यैकत्राध्यावापः समाहारः (स्वामी)। अध्यावापः कृतवापं क्षेत्रम्। अधिकरणे घञ्।

—वस् (वस निवासे)। यथा हि शून्यां पथिकः सभामध्यावसेत् (रा० १।७०।२)। आवसेत्। अनर्थकोऽधिः। गार्हस्थ्यमध्यावसते यथावत् (भा० शां० ६१।१६)। अध्याङोरेकतरेणैवार्थसमर्पणादपरोऽपार्थः। अध्यावसत्ततोऽयोध्यामयोध्यां द्विषतां प्रभुः (भा० वन० १४८।१५)।

—वह् (वह प्रापणे)। यत्पुनर्लभते नारी नीयमाना तु पैतृकात्। अध्यावाहनिकं नाम स्त्रीधनं परिकीर्तितम्॥ निगदव्याख्यातम्।

—शी (शीङ् स्वप्ने)। अध्याशयो वा स्फुटपुण्डरीकं पुराधिराजं तदलञ्चकार (बुद्ध० १।९)। अध्याशयः कर्णिका।

—हृ (हृञ् हरणे)। अपूर्णस्य वाक्यार्थस्यापेक्षितैः पदैः पूरणमध्याहारः। असतो दोषस्याध्याहारोऽभिशापः। अध्याहारस्तर्क ऊह इत्यमरः।

## अध्युप (अधि+उप)

—विश् (विश प्रवेशने)। विष्टरमास्तीर्याध्युपविशेत् (गो० गृ० ४।१०।४)। उपर्यासीतेत्यर्थः।

## अधिनि

—धा (डुधाञ् धारणपोषणयोः)। अथ छदिरधिनिदधाति (श० ब्रा०

३।६।१।२२)। छदिः कुथां कटं वा। आस्तृणातीत्याह। द्वयोर्ह्येतत् तृतीयं छदिरधिनिधीयते (श० ब्रा० ३।५।३।६)। कुरीरमस्य शीर्षण्यधिनिदध्मसि (अथर्व० ६।१३८।२)। नीचैर्न्यस्याम इत्याह। अस्मे सोम श्रियमधिनिधेहि (ऋ० १।४३।७)। अधिकं देहीत्यर्थः। प्रजां त्वष्टरधिनिधेह्यस्मै (अथर्व० २।२६।२)। उक्तोऽर्थः।

### अधिनिर्

—वद् (वद व्यक्तायां वाचि)। यज्जिह्वया वदति तदुरसोऽधिनिर्वदति (तै० सं० ६।३।१०)। ऊर्ध्वं निष्कास्य वदतीत्यर्थः।

### अधिवि

—क्रम् (क्रमु पादविक्षेपे)। देव विष्ण उर्वद्यास्मिन्यज्ञे यजमानायाधिविक्रमस्व (का० श्रौ० २३।३।१)। दीर्घेण क्रमेण निष्कामेत्याह।

—धा (डुधाञ् धारणपोषणयोः)। चित्ते ह्यस्मिन् होत्रा अधिविधीयन्ते (श० ब्रा० ६।३।१।१६)। अधिविधीयन्ते विभागशो नियुज्यन्ते। एतदधिविधाय (तै० उ० १।७)। अनर्थकोऽधिः। विधायेत्येवार्थः।

—श्रि (श्रिञ् सेवायाम्)। तृतीये नाके अधिविश्रयस्व (अथर्व० ६।५।८)। सुप्रतिष्ठितो भवेत्यर्थः।

## अपि

—अस् (अस भुवि)। अप्सरास्वपि गन्धर्व आसीत् (अथर्व० २।२।३)। अप्यासीत् अन्तरासीत्। सर्वा ता ते अपि देवेष्वस्तु (ऋ० १।१६२।८)। अप्यस्तु भागोऽस्तु। सर्वस्मिन्नुक्तेऽर्थे भागी स्या इत्यर्थः। अस्मे स (रयिः) इन्द्रावरुणाव् अपिष्यात् (ऋ० १।६०।६)। उक्तोऽर्थः। युष्मे देवा अपि ष्मसि युध्यन्त इव वर्मसु (ऋ० ८।४७।८)। अपि ष्मसि=अपिष्याम=युष्माकं नेदिष्ठिनः स्याम, अत्यन्तं निजाः स्यामेत्याह।

—इ (इण् गतौ)। यदाप उच्छुष्यन्ति वायुमेवापियन्ति (छां० उ० ४।३।२)। अपियन्ति समाविशन्ति। तं यथा समुद्रं स्रोत्या एवं सर्वे यज्ञक्रतवोऽपियन्ति (ऐ० ब्रा० ३।३६)। अपियन्ति अन्तर्भवन्ति। तदन्तकोप्येति विनाशकाले (भा० उ० ४४।२६)। तद् ब्रह्म (द्वितीयान्तम्)। अन्तकः कालः। अप्येति लीयते ब्रह्मणि। उशिक् त्वं देव सोमाग्नेः प्रियं पाथोऽपीहि (श० ब्रा० ११।५।६।

१२)। प्रियमन्तं प्रविशेत्याह। स्वां योनिमपीतन (अथर्व० १०।५।२३)। स्वस्यां योनौ लीयध्वम् इत्याह। पञ्च नद्यः सरस्वतीमपियन्ति सस्रोतसः (वा० सं० ३४।११)। तत्र लीना भवन्ति, तादात्म्यमापद्यन्त इत्यर्थः। दृषद्वती शतद्रूश्चन्द्रभागा विपाशेरावतीत्यादिकाः पञ्च नद्यः। याः काश्चेष्टयस्ताः सर्वा अग्निष्टोममपियन्ति (ऐ० ब्रा० ३।४०)। अग्निष्टोमेऽन्तर्भवन्तीत्याह। यदा सूर्योऽस्तमेति वायुमेवाप्येति (छां० उ० ४।३।१)। उक्तोऽर्थः। स एवं विद्वांश्छन्दोमयो देवतामयो ब्रह्ममयोऽमृतमयः सम्भूय देवता अप्येति (ऐ० ब्रा० २।४०)। अप्येति प्राप्नोति। वृषेव वाजी शिशुमतीरपीत्या (ऋ० २।४३।२)। अपीत्य, अभिगत्य, अन्तः प्रविश्य। सांहितिको दीर्घः। य एतद् विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापियन्ति (बृ० उ० ४।४।१४)। अपियन्ति प्राप्नुवन्ति निगच्छन्ति। शुचयः शुचिमपि यन्ति लोकम् (अथर्व० ४।३४।२)। उक्तोऽर्थः। अश्वो न देवाँ अप्येति यज्ञियः (ऋ० ६।७१।६)। अप्येति अभिगच्छति। मा शिश्नदेवा अपि गु ऋतं नः (ऋ० ६।२२।५) माऽपिगुः = माऽऽगमन्, मोपगमन्, मा निविक्षन्त। अपिराङर्थ उपार्थे वा। आगादुदगादयं जीवानां व्रातमप्यगात् (अथर्व० २।६।२)। जीवानां व्रातेन समुदयेन मिश्रोऽभूदित्यर्थः। वशा पर्जन्यपत्नी देवाँ अप्येति ब्रह्मणा (अथर्व० १०।१०।६)। अप्येति प्राप्नोति। जरामृत्युं पुनरेवापियन्ति (मुण्ड० १।२।७)। मा त्वा तपत् प्रिय आत्माऽपियन्तम् (ऋ० १।१६२।२०)। अपियन्तं लोकान्तरं प्रयन्तं म्रियमाणमित्यर्थः। स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षते (छां० उ० ६।७।१)। स्वमपीत आत्मनैकीभूत इत्याह। लोकानपीतान् ददृशे स्वदेहे (भा० पु० ३।८।१०)। अपीतान् लीनान् लयं गतान्। एवं ह्येते तदापीता भवन्ति (श० ब्रा० १०।५।२।१५)। अपीताः समाविष्टाः। प्रभवाप्ययौ हि (ब्र० सू० )। अप्ययो लयः, प्रलयः। अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् (ब्र० सू० २।१।८)। अपीतिः = अप्ययः।

—इष् (इष गतौ)। अस्य व्रतेष्वपि सोम इष्यते (ऋ० ९।६६।१)। अपीष्यतेऽन्विष्यते, मृग्यते, तत्प्राप्तौ प्रयत्यते।

—ईक्ष् (ईक्ष दर्शने)। दीर्घकालमपीक्षेत निहन्यादेव शात्रवान् (भा० शां० १०३।१८)। अपीक्षेत प्रतीक्षेत।

—ऊह् (ऊह वितर्के)। मोघं वा देवाँ अप्यूहे (ऋ० ७।१०४।१४)। अप्यूहे अवजगाम अवागमम्। लिट्युत्तमैकवचने रूपम्। अमन्त्र इति पर्युदासादाममावः। वर्णाकारप्रतिध्वाननेत्रगात्रविकारतः। अप्यूहन्ति मनस्तज्ज्ञाः (हितोप० ३।३३)। अप्यूहन्ति उन्नयन्ति। तर्कयन्ति।

—कृत् (कृती छेदने)। इदमहं रक्षसो ग्रीवा अपिकृन्तामि (तै० सं०

१।२।५)। अपिकृन्तामि अपकृन्तामि। वागपि गच्छतु (अथर्व० २।१२।८)। अपिगच्छतु अप्येतु।

—गम् (गम्लृ गतौ)। अपि पन्थामगन्महि स्वस्तिगामनेहसम् (ऋ० ६।५१।१६)। अप्यगन्महि आतिष्ठेम। असुं वागपि गच्छतु (अथर्व० २।१२। ८)। अपिगच्छतु अप्येतु।

—ग्रह् (ग्रह उपादाने)। कुणपगन्धान्नापि गृह्णीत सोमस्य हैष राज्ञो गन्धः (श० ब्रा० ४।१।३।८)। नासिकां हस्तेन नापिदधीतेत्यर्थः। यदि स्मयेतापि गृह्यस्मयेत (आप० ध० १।२।७।७)! अपिगृह्य मुखं हस्तेनापिधाय। कर्णावपिगृह्य निनदमिव नदथुरिवाग्नेरिव ज्वलत उपशृणोति (छां० उ० ३।१३।७)। प्राणो ह वै हिङ्कारस्तस्मादपिगृह्य नासिके न हिङ्कर्तुं शक्नोति (श० ब्रा० १।४।१।२)। उक्तोऽर्थः।

—दृभ् (दृभी ग्रन्थे)। परेत्ययममुं लोकं पिदृम्मः (शां० ब्रा० २।६)। अपिदृम्मः = अपिदृभामः, दृढमाशंसामहे।

—दो (दो अवखण्डने)। भिनद्मि मुष्कावपि द्यामि शेपः (अथर्व० ४।३७। ७)। अपिद्यामि अवद्यामि विशसामि।

—धा (डुधाञ् धारणपोषणयोः)। वैश्वानरस्य दंष्ट्रयोरग्नेरपिदधामि तम् (अथर्व० ४।३६।२)। अपिदधामि प्रक्षिपामि प्रास्यामि। तांस्ते अग्ने पिदधाम्यास्ये (वा० सं० ११।८०)। उक्तोऽर्थः। तस्मा एतदन्नाद्यमपिदधाति यथा कुमाराय वा जाताय वत्साय वा स्तनमपिदध्यात् (श० ब्रा० २।२।१।१)। अपिदध्यात् मुखे निदधीत। तस्मै दद्यात्। अश्मना बिलमप्यधाम् (अथर्व० ७।३३।२)। आच्छादयमित्यर्थः। धनेनाधर्मलब्धेन यच्छिद्रमपिधीयते (भा० उ० ३५।७०)। संव्रियत इत्यर्थः। क्रव्यादो वृष्ट्वापि धत्स्वासन् (अथर्व० ८।३। २)। आसन् आसनि आस्य ओष्ठाभ्यामाच्छादयेत्युक्तं भवति। चक्षूंष्यपिधध्वं वो विधास्ये क्षेममञ्जसा (भा० पु० १०।३०।२२)। अपिधध्वं संवृणुध्वं निमीलयध्वम्। सर्वाण्येवापिधीयन्ते पदजातानि कौञ्जरे (भा० अनु० ११४।६)। आच्छाद्यन्ते। सर्वे पादा हस्तिपादे निमग्ना इति सुभावितार्थ एवात्रानूदितः। अयमेवार्थः (शां० २४५।१८) इत्यत्राप्युक्तः। अथो अप्येवैनं दध्यात्। अमुष्य त्वा प्राणमपिदधामीति (श० ब्रा० ४।१।१।१८)। अपिदध्यात् अवपीडयेद् हस्तेनेत्याह। मृत्यव आत्मानमपिदध्यात् (श० ब्रा० १३।३।५।२)। अपिदध्याद् अर्पयेत्। रुद्राय पशूनपिदध्याद् (तै० ब्रा० १।१।५।६)। उक्तोऽर्थः। जातायैवास्मा अन्नमपिदधाति (तै० सं० ५।३।४।१)। उक्तपूर्व एवार्थः। तुच्छेनाभ्वपिहितं यदासीत् (ऋ० १०।

१२६।३)। अपिहितमावृतम्। अपिहितपाणिः (शां० गृ० ४।२।१२)। बद्धमुष्टिरित्यर्थः। ध्वजेन पिहिताः सर्वा दिशो न प्रतिभान्ति मे (भा० वि० ४६।१८)। आच्छादिता इत्यर्थः। आनुडहेन चर्मणापिहितः (बाणः) (लाटचा० श्रौ० ४।१।१)। अपिहितः परिवृतः परिहितः। अर्थो गिरामपिहितः विहितश्च किञ्चित्। सत्यं चकास्ति मरहट्टवधूस्तनाभः॥ (सुभाषितम्)। अपहितोऽसंवृतः। पिहितः संवृतः। शङ्कापिहितचारित्रः (बौ० ध० १।५।१४।८)। शङ्कोपरुद्धानुष्ठान इत्यर्थः। ऋच एव हि प्रायेणातितरामपिहितार्थाः (नि० ७।१।१ इत्यत्र दुर्गः)। अपिहितार्थाः संवृतार्थाः। जातरूपेणापिधाप्य (कौ० सू० १३।२६)। पिधानं कारयित्वा। अमृतापिधानमसि (तै० आ० १०।३५।२)। अपिधानमाच्छादनम्। नैकजलदच्छत्रापिधानं जगत् (मृच्छ० ५।२४)। उक्तोऽर्थः। उत्तरेणापिधान्याम् (आप० ध० २।४।८)। अपिधानी कवाटम्। तदर्गलमित्यन्य इति हरदत्तः। गव्यं चिदूर्वमपिधानवन्तम् (ऋ० ५।२६।१२)। प्रियाँ अपिधीर्वनिषीष्ट मेधिरः (ऋ० १।१२७।७)। अपिधिरन्नावधिश्रितं हव्यम्।

—नह् (णह बन्धने)। मन्दारमाला हरिणा पिनद्धा (शा० ७।२)। पिनद्धा बद्धा। पिनद्धां धूमजालेन प्रभामिव विभावसोः (रा० ५।१८।४)। पिनद्धां परिवेष्टितां रुद्धाम्। कवचं पिनह्य (भट्टि० ३।४७)। अपेरल्लोपः प्रायिकः। पिनह्य तानि पुष्पाणि केशेषु वरवर्णिनी (भा० अनु० ४२।६)। पिनह्य बद्ध्वा ग्रथित्वा।

—नी (णीञ् प्रापणे)। वाचैव तद्यज्ञं पन्थानपि नयति (ऐ० ब्रा० १।८)। अपिनयति प्रापयति। स एवैनमपथात् पन्थानमपिनयति (तै० सं० २।२।२१)। अपिनयति अभिवर्तयति प्रापयति। यदि ह वा अपिनीत इव यजमानो भवति (ऐ० ब्रा० २।२)। अपिनीतोऽपनीतो लोकान्तरं सङ्क्रमितः। उपरत इति यावत्।

—पद् (पद गतौ)। प्राणो वातमपिपद्यते (श० ब्रा० ३।४।२।६)। अपिपद्यते ऽप्येति अभिसंविशति, समाविशति।

—भू (भू सत्तायाम्)। अप्यभूर्भद्रे सुकृतस्य लोके (अथर्व० २।१०।७)। तस्य वयं हेडसि मापि भूम (अथर्व० ७।२०।३)। तस्य क्रोधविषये मा पप्तामेत्यर्थः। अप्यभूः = अन्तरभूः। अयमग्ने जरिता त्वे अभूदपि (ऋ० १०।१४२।१)। त्वेप्यभूत् त्वयि भाग्यभूदित्यर्थः। अपीन्द्रः सोमपीथेऽभवत् (ऐ० ब्रा० ७।२८)। सोमपाने भाग्यभूत्, सोमस्यापिबदित्यर्थः।

—या (या प्रापणे)। भिनद्मि मुष्कावपि यामि शेपः (अथर्व० ४।३७।७)। अपियामि अपिगतं निरुद्धं करोमि।

—याच् (टुयाचृ याच्ञायाम्)। अप्यस्य पुत्रान्पौत्रांश्च याचयते बृहस्पतिः (अथर्व० १२।४।३८)। अपिस्तिङन्तेन न सम्बध्यत इति सायीयो दर्शनम्। न ह्यपियाचिर्याचेर्भिन्नमर्थमाह। याचयते याच्यान् करोतीत्यर्थः।

—रुह् (रुह बीजजन्मनि)। पृथिव्यै खातमपि रोहति (तै० सं० २।५।१।३)। अपिरोहति उद्भवति।

—वह् (वह प्रापणे)। मोघं वा देवाँ अप्यूहे अग्ने (ऋ० ७।१०४।१४)। अप्यूहे तर्कयामि चिन्तयामि।

—वृ (वृञ् वरणे)। अपीव योषा जनिमानि वव्रे (ऋ० ३।३८।८)। अपिवव्रे वृणुते कामयते।

—वृज् (वृजी वर्जने)। मयि देवासोऽवृजन्नपि क्रतुम् (ऋ० १०।४८।३)। अपिवृजन् अपावर्जयन्, अभिमुखमकुर्वन्, मां प्रापयन्।

—वृत् (वृतु वर्तने)। प्रास्य पारं नवतिं नाव्यानामपि कर्तमवर्तयोऽयज्यून् (ऋ० १।१२१।१३)। कर्तमप्यवर्तयः=गर्तेऽन्तरपातयः।

—व्ये (व्येञ् संवरणे)। अक्ष्यावपि व्ययामसि (अथर्व० १।२७।१)। अक्षिणी अभिनह्यामः संवृण्म इत्यर्थः।

—व्रश्च् (ओव्रश्चू छेदने)। शीर्षाणि हरसापि वृश्च (ऋ० १०।८७।१६)। अपिवृश्च छिन्धि।

—सृज् (सृज विसर्गे)। यस्मिन्नेनमपिसृज्य रक्षन्ति (श० ब्रा० १३।४।२।५)। अपिसृज्य विसृज्य। गार्हपत्येऽङ्गारानपिसृज्य (भा० श्रौ० ६।१०।१२)। अपिसृज्य अतिसृज्य।

—स्था (ष्ठा गतिनिवृत्तौ)। मा मे सख्युः स्तामानमपि ष्ठात (अथर्व० ५।१३।५)। मापिष्ठात मोपगात मोपसृपत। यदीं गच्छन्त्युशतीरपिष्ठितम् (ऋ० १।१४५।४)। अपिष्ठितमुपसृप्तमुपेतम्।

—ह्नु (ह्नुङ् अपनयने)। न देवानामपि ह्नुतः सुमतिं न जुगुक्षतः (ऋ० ८।३१।७)। अपिह्नुतः प्रत्याचक्षाते।

### अप्यति (अपि+अति)

—अर्ज् (अर्ज षर्ज अर्जने)। यज्ञ एतद्यमप्यत्यर्जन्ति (ऐ० ब्रा० ७।६)। अप्यत्यर्जन्ति संयुञ्जन्ति।

### अपिपरि

—क्लिश् (क्लिशू विबाधने)। अपि चापिपरिक्लिष्टं चिराद् दारैः समागतम्। आत्मकार्यगरीयस्त्वाद् वक्तुं नेच्छामि वानरम् (रा० ४।२८।६१)। अपिपर्योरेकतरः शक्यः परिहर्तुम्, अन्यतरेण विवक्षितार्थस्य समर्पणात्।

## अति

—अर्ज् (अर्ज षर्ज अर्जने, अर्ज प्रतियत्ने)। स्वस्ति हैनमत्यर्जन्ति स्वर्गं लोकमभि (ऐ० ब्रा० १।११)। अत्यर्जन्ति गमयन्ति प्रापयन्ति। अतिः सौष्ठव इति षड्गुरु०। अतिशब्दः क्षिप्रार्थ इति गोविन्दस्वामी। अति नोर्जस्याकाशं नः कुर्विति ( )। अवकाशं नः प्रापयेत्याह।

—अश् (अश भोजने)। अहं पतीन्नातिशये नात्यश्ने नातिभूषये (भा० वन० २३३।३८)। नात्यश्ने=नात्यश्नामि नातिक्रम्याश्नामीत्याह। यावन्मे पतयो भुक्ता भवन्ति तावदेव भुञ्जे, न ततः प्राग् इति भावः। यद्यु अश्नाति देवानत्यश्नाति (श० ब्रा० १।१।१।६)। उक्तोऽर्थः।

—अस् (अस भुवि)। श्रिया समानाँ अति सर्वान्त्स्याम (अथर्व० ११।१।१२)। अतिष्याम अभिभवेमेत्यर्थः।

—अस् (असु क्षेपणे)। बहुभिश्चैकमत्यस्यन्नेकेन च बहूञ्जनान्। विनिर्योक्ष्याम्यहं बाणान्नृवाजिगजमर्मसु (रा० २।२३।३७)॥ अत्यस्यन् पराभावयन्, पराघ्नन्। तुहिनात्यस्तः (पा० २।१।२४ सूत्रवृत्तौ)। हिममतिक्रमित इत्यर्थः। द्व्यहात्यासं गाः पाययति (पा० ३।४।५७ सूत्रे वृत्तौ)। अत्यसनेनातिक्रमणेन गवां पानक्रियां विच्छिनत्ति। अद्य पाययित्वा द्व्यहमतिक्रम्य पुनः पाययतीत्यर्थः।

—आप् (आप्लृ व्याप्तौ)। राद्धिः प्राप्तिः समाप्तिर्व्याप्तिर्मह एधतुः। अत्याप्तिरुच्छिष्टे (अथर्व० ११।७।२२)। अतिक्रान्ताऽऽप्तिरत्याप्तिः।

—इ (इण् गतौ)। अत्येति रजनी या तु सा न प्रतिनिवर्तते (रा० २।१०५।१९)। अत्येति अतिक्रामति विगच्छति। एतद्‌द्रावसं तेन परो मूजवतोऽतीहि (वा० सं० ३।६१)। अतीहि अतिक्राम। अवसं भोजनम्। अवश्यकरणीये च मा त्वां कालोऽत्यगादयम् (भा० आदि० १५६।१६)। अकृतार्थं त्वा मातिक्रमीत्, मा हासीत्। अत्यन्याँ अगां नान्याँ उपागाम् (वा० सं० ५।४२)।

अत्यगां पर्यहार्षमुपैक्षिषि। अत्यगान्मायां देवानाम् (भा० पु० ६।२०।२७)। आत्मानं देवानां मायायाः पर्यहार्षीत्, अरक्षीदित्यर्थः। प्राप्तकालमिदं मन्ये मा त्वं दुर्योधनात्यगाः (भा० उ० १२५।२६)। मातिहासीरित्यर्थः। न चैनमत्यगाद् वह्निर्वेलामिव महोदधिः (भा० सभा० ३१।५३)। एनं सहदेवं (सैन्यस्याभिमुखे स्थितम्) अतिक्रम्य सैन्यं न ददाहेत्यर्थ इति नील०। एवं मे वसतो राजन्नेष कालोऽत्यगाद् दिवि (अर्जुन० ४।६२)। अत्यगात् अत्यक्रमीत्, व्यगात्। नात्येति कालो यज्ञस्य यथाऽयं मम राघव (रा० १।१६।१८)। नात्येति नातिक्रामति, नातियाति। अथ या अष्टाविष्टका अतियन्ति (श० ब्रा० ८।५।३। ७)। अतिरिक्ता भवन्तीत्याह। नदं न भिन्नममुया शयानं मनो रुहाणा अति यन्त्यापः (ऋ० १।३२।८)। अतियन्ति उपरि प्लवन्ते। अतीयात्सागरो वेलां न प्रतिज्ञामहं पितुः (रा० २।११२।१८)। अतीयात् अतिलङ्घेत। वेलां मर्यादां भिन्द्यादित्यर्थः। केनात्यगाद्राजा व्याधिना (रा० २।७२।२६)। अत्यगात् अमृत, मृतिमापत्। मा मे वाङ् नाभिमतिगाः (का० श्रौ० ६।१२।४)। सुपर्ण इव वेगेन पक्षिराडत्यगाच्चमूम् (भा० द्रोण० १२८।१०)। अत्यगात् अतिक्रम्यागात्। स्थातव्यं ते नयनविषयं यावदत्येति भानुः (मेघ० ३६)। नयनगोचरतां नातिक्रामतीत्यर्थः। स हि देवोऽत्यगात् देवांस्तपसा विक्रमेण च (भा० सौ० ६।३४)। अत्यगात् अत्यशेत। तद्धि (अग्निहोत्रम्) पवित्रं नात्येति (भा० श्रौ० ६।८।१८)। पवित्रं नक्तकः। अग्निहोत्रपयो नक्तकान्न बहिः स्रवतीत्यर्थः। अद्वारेण च नातीयाद् ग्रामं वा वेश्म वा वृतम् (मनु० ४।७३)। नातीयात् न प्रविशेत्। असन्निवृत्त्यै तदतीतमेव (शा० ६।१०)। अतीतमतिक्रान्तम्। सब्रह्मचारि[illegible]मतीते क्षपणं स्मृतम् (मनु० ५।७१)। अतीते मृते। क्षपणं लङ्घनम्। अप्रजायामतीतायां भर्तुरेव तदिष्यते (मनु० ६।१९६)। अतीतायां मृतायामुपरतायाम्। ततस्तु पृषतेऽतीते स राजा द्रुपदोऽभवत् (भा० आदि० १६६।८)। अतीतमाज्ञाय तु पार्थिवर्षभम् (रा० २।६५।२६)। उक्तोऽर्थः। कैर्लिङ्गैस्त्रीन्गुणानेतानतीतो भवति प्रभो (गीता० १४।२१)। सोऽन्तः पुरमतीत्यैव स्त्रियस्ता वाक्यमब्रवीत् (रा० २।३४।११)। अतीत्यैव अतिवेगेन प्राप्यैव। न दिष्टमर्थमत्येतुमीशो मर्त्यः कथंचन (भा० वन० १३५।५५)। अत्येतुं परिहर्तुम्। स्रोतोवहां पथि निकामजलामतीत्य (शा० ८।१६)। अतीत्य अतिक्रम्य विहाय। अतीत्य हि गुणान्सर्वान् स्वभावो मूर्ध्नि (हितोप० १।१८)। अतीत्य = अतिशय्य। तपात्यये (कु० ४।४४)। [illegible]र्थः। प्राणानामेव चात्यये (मनु० ५।२७)। अत्ययः संशयः। [illegible]स्या नाशमाह। गौण्या तु तत्कारणे संकट उपचर्यते।

प्राणात्यये च सम्प्राप्ते (याज्ञ० १।१७६)। न नर्मयुक्तमनृतं हिनस्ति न स्त्रीषु राजन्न विवाहकाले। प्राणात्यये सर्वधनापहारे पञ्चानृतान्याहुरपातकानि(भा० आदि० ८२।१६)॥ उक्तोऽर्थः। क्षत्रियस्यात्यये दण्डो भागाद् दशगुणो भवेत् (मनु० ८।२४३)। अत्ययोऽपराधः। दाप्योऽष्टगुणमत्ययम् (मनु० ८।४००)। अत्ययो दण्डः। साहसस्तेयपारुष्यगोभिशापात्यये (याज्ञ० २।१२)। अत्ययः प्राणधनातिपातः। पितुरत्ययात् (दशकु० ६४)। अत्ययो मृत्युः। नानात्ययानां वृक्षाणां रसान् समवहारमेकतां रसं गमयन्ति (छां० उ० ६।६।१)। अत्ययो गतिः स्वभावः। बहव इमेस्मिन्पुरुषे कामा नानात्ययाः (छां० उ० ४।१०।३)। नानात्यया नानानर्थावहा इत्यर्थः। वारणं (शङ्कुम्) पश्चादघं ये वारयाता इति वृत्रशङ्कुं दक्षिणतोऽघस्यैवानत्ययाय (श० ब्रा० १३।८।४।१)। अत्ययो वृद्धिः। यथा नातः परं वर्धेत तथेत्यर्थः। क्षुरस्य धारा निशिता दुरत्यया (कठ० उ० १।३।१४)। अत्यय उपरिपादन्यासः। दुःखोत्ययो यस्याः सा। बुद्धिश्च ते लोकैरपि दुरत्यया (रा०)। दुरत्यया, दुरवगमा, दुरासदा।

—ऊह् (ऊह वितर्के)। अधोऽधोक्षं प्रत्यञ्चं द्रोणकलशमत्युह्य (का० श्रौ० ६।२।१६)। अत्युह्य (प्रतीच्यां) प्रेर्य।

—एष् (एषृ गतौ)। शरभो न चत्तोति दुर्गाण्येषः (अथर्व० ६।५।६)। अत्येषः=अत्यैषः=अत्यतारीः।

—कल् (कल गतौ संख्याने च, कल विल क्षेपे)। यज्ञे यज्ञे यथाकालं दक्षिणा अत्यकालयत् (भा० द्रोण० ५७।५)। अत्यकालयत्=अददात्। अपोदहरदिति शब्दार्थः। ईजानो वितते यज्ञे दक्षिणामत्यकालयत् (भा० शां० २६।३३)। उक्तोऽर्थः।

—कुप् (कुप क्रोधे)। तेन चैवातिकोपेन स यज्ञः सन्धितस्तदा (भा० द्रोण० २०२।६३)। अतिकोपोऽतीतकोपः, शान्तसंरम्भः।

—कृ (डुकृञ् करणे)। सर्वत्रातिकृतं भद्रे व्यसनायोपकल्पते (रा० ५।२५।२१)। अतिकृतमतिमात्रमाचरितम्।

—कृष् (कृष विलेखने)। फालमतिकर्षति (कौ० सू० २०)।

—क्रम् (क्रमु पादविक्षेपे)। अयि वात्सल्यादतिक्रामति प्रसङ्गः (मालती० ६)। अतिक्रान्तमर्यादो जायते, औचित्यसीमानं लङ्घते। अतिचक्राम सुमहान्कालः (भा० आदि० १५७।७)। अतिचक्राम व्यतीयाय। अत्यक्रामदविज्ञातः कालः परमदुस्तरः (भा० पु० १।१३।१६)। सा निशाऽतिचक्राम (पञ्चत० १)। यथा यथा यौवनमतिचक्राम (काद० )। अति विश्वाः

परिष्ठा: स्तेन इव व्रजमक्रमु: (ऋ० १०।९७।१०) । व्रजमत्यक्रमु:=व्रजमावस्कन्दु:, अधस्पदं चक्रु: । अत्यक्रामम् इमान् मासांस्तद्वधं परिचिन्तयन् (रा० ६।८८।२०) । अत्यक्रामम् अयापयम्, अक्षपयम् । अनैषम् । कुसीदवृद्धि: ......धान्ये सदे लवे वाह्ये नातिक्रामति पञ्चताम् (मनु० ८।१५१) । पञ्चगुणतामतीत्य न वर्तते इत्यर्थ: । नैव देवा (प्रजापतेराज्ञाम्) अतिक्रामन्ति न पितरो न पशवो मनुष्या एवैकेऽतिक्रामन्ति (श० ब्रा० २।४।२।६) । अतिक्रामन्ति प्रतिघ्नन्ति, लङ्घन्ते । अतिक्रामेत् प्रमत्तं या मत्तं रोगार्तमेव वा (मनु० ९।७८) । अतिक्रामेत् शुश्रूषणाद्यकरणेनावजानीयात्, उपेक्षेत वा । पितु: स नित्यसन्तुष्टो नातिचक्राम चाश्रमात् (रा० १।१०।८) । आश्रमाद् दूरं न निरगादित्याह । तस्मादतिक्रमाम्येव भवादस्मात् सुदारुणात् (भा० अनु० ११७।१३) । अतिक्रमामि=अतिक्रामामि=अपक्रामामि, अपसर्पामि । स हि स्वाम्यादतिक्रामेद् ऋतूनां प्रतिरोधनात् (मनु० ९।९३) । अतिक्रामेत्=हीयेत । आप्नुहि श्रेयांसमति समं क्राम (अथर्व० २।११।१) । अतिक्राम अतिशेष्व विशेषय । ये शूरा निहता युद्धे स्वर्याता रणगृद्धिन: । सर्वे ते विबुधश्रेष्ठ नातिक्रामन्ति भूमिदम् (भा० अनु० ६२।५७) ॥ नातिक्रामन्ति नातिशेरते (कर्मविपाकेन) इत्यर्थ: । यौ तौ दैवासुरे युद्धे वरौ दशरथोऽददात् । तौ स्मारय महाभागे सोऽर्थो मा त्वामतिक्रमेत् (रा० २।९।२८) ॥ सोऽर्थस्त्वां मातिक्रमीत्, अन्तर्गतो मा भूत्, मा स्मैनं विस्मार्षीरित्याह । अभिमन्युवधं वीर: सोऽत्यक्रामन्महामति: । अप्रियं वसुदेवस्य मा भूदिति महामति: (भा० आश्व० ६१।२) ॥ अत्यक्रामद् अलङ्घयत् । अन्तरितमकरोदित्यर्थ: । प्रत्यासन्नमधीयानं ब्राह्मणं यस्त्वतिक्रमेत् । भोजनाच्चैव दानाच्च दहत्यासप्तमं कुलम् (बौ० ध० १।१०।२७ इत्यत्र विवरणे सङ्गृहीतं शातातपवचनम्) ॥ दानभोजनाभ्यां वर्जयेदित्याह । अचिरात्तं वृथामन्त्रमतिक्रामन्ति विद्विष: (का० नी० सा० १२।३२) । अतीत्यातिसन्धाय तद्राज्यमाक्रम्य गृह्णन्तीत्युपाध्यायनिरपेक्षा । इरावतीमतिक्रामन्ती भव (माल०) । अतिक्रामन्ती=अतिशयाना, पश्चात्कुर्वती, पृष्ठत: कुर्वाणा । नष्टं मृतमतिक्रान्तं नानुशोचन्ति पण्डिता: (पञ्चत० १) । अतिक्रान्तम् अतीतम् । ग्रत्कथयितुं प्रवृत्तस्तत्परित्यज्यातिदूरमतिक्रान्तोऽस्मि । (काद० ३४६) । बह्वप्रस्तुतं प्रस्तोतुमारब्धो स्मीत्यर्थ: । अतिक्रान्तं भगवती कथयति (माल० ५) । अतीतकालाधिकरणकमित्यर्थ: । अतिक्रान्तावस्थो गजपतिरिदं स्थावरचरम् । जगत्सर्वं हन्तुं समभिलषति क्रोधकलुष: (मा० ली० ९।१७) ॥ अतिक्रान्ता षष्ठी मदावस्था । न कुप्यवेतनी कश्चिन्न चातिक्रान्तवेतनी (भा० वन० १५।२२)। अतिक्रान्तवेतनी विलम्बित-

वेतनः, अदत्तभक्तो वा। अतिरिक्तनिर्वेशो वा। कथं ज्येष्ठानतिक्रम्य यवीयान्राज्यमर्हति (भा० आदि० ८५।२२)। अतिक्रम्य वर्जयित्वा। प्रथित-यशसां भाससौमिल्लक-कविपुत्रादीनां प्रबन्धानतिक्रम्य वर्तमानकवेः कालिदासस्य क्रियायां कोऽतिबहुमानः (माल० १)। अतिक्रम्य उपेक्ष्य। किं वा देव्या परिजनमतिक्रम्य भवान् सन्दिष्टः (माल० ४)। अतिक्रम्य= अतिहाय। व्यालद्विप इवास्माभिरतिक्रम्यैव दम्यते (महावीर० ३।३१)। अतिक्रम्य=अभिभूय, धर्षयित्वा। जनकाग्रजन्मनोः शासनमतिक्रम्य (दशकु० २)। अतिक्रम्यातिलङ्घ्य, अवमान्य, अननुवृत्य। अतिक्रम्य तांस्तान् विशेषान्। तेशां परस्ताद् गत्वेत्यर्थः। जम्बुद्वीपमतिक्रम्य शिशिरो नाम पर्वतः (रा० ४।४०।३४)। जम्बुद्वीपात्परेणेत्यर्थः। इदं कदलीगृहमतिक्रम्य दृश्यते। कदलीगृहात्परेण। अक्षद्यूते समाह्वानं नियोगात्स्थविरस्य च। जानन्नपि क्षयकरं नातिक्रमितुमुत्सहे (भा० सभा० ७६।४)॥ अतिक्रमितुमतिलङ्घितु-मुपेक्षितुम् अननुमन्तुम्। न ह्यतिक्रमितुं शक्तस्तव वाक्यं महीपतिः (रा० २। ६।२६)। उक्तोऽर्थः। अनतिक्रमणीयं मे सुहृद्वाक्यम् (शा० २)। अनति-क्रमणीयमशक्यलङ्घनम्। अनतिक्रमणीया दिवस्पतेराज्ञा (शा० ७)। तेन ह्यनतिक्रमणीयानि श्रेयांसि (शा०)। व्यतिक्रमानर्हाणीत्यर्थः। अहो अतिक्रमः (मालती० ७)। समुदाचारातिचरणम्। भोजनवेलातिक्रमे चिकित्सका दोषमुदाहरन्ति (माल०)। भोजनकालातिपाते। केवलमुपचारा-तिक्रमं प्रमार्ष्टुमस्माकमयमारम्भः (माल० ४)। अतिक्रमो लङ्घनम्। दिशत्यपायं हि सतामतिक्रमः (कि० १४।६)। अतिक्रमोऽपराधः। अनेक-संवत्सरातिक्रमे (उत्तर० ४)। अतिक्रमोऽत्ययो व्यपायः। स्वभावो दुरतिक्रमः। दुर्जय इत्यर्थः।

—क्षर् (क्षर संचलने)। सुता इन्द्राय वज्रिणे सोमासो दध्याशिरः। पवित्रमत्यक्षरन् (ऋ० ९।६३।१५)। पवित्रस्योपरि प्रास्यन्दन्त।

—ख्या (ख्या प्रकथने)। वशा समुद्रमत्यख्यत् (अथर्व० १०।१०।१५)। समुद्रं सुदूरम् प्रैक्षत। मा नो गव्येभिरश्व्यैः सहस्रेभिरतिख्यतम् (ऋ० ८। ७३।१५)। माऽतिख्यतम् मोपेक्षिषाथाम्। मा नो अतिख्य आगहि (ऋ० १। ४।३)। दर्शनपथान्मा यीयव इत्युक्तं भवति। मा नो मर्ताय रिपवे वाजिनी-वसू परो रुद्रावतिख्यतम् (ऋ० ८।२२।१४)। मापिपतम् इत्याह, मा परिदा इति वा। माऽस्माञ्छत्रोराभिषं वोचतम् इति त्वक्षरार्थः।

—गम् (गम्लृ गतौ)। ततो दशाहेऽतिगते (रा० २।७७।१)। अतिक्रान्त इत्यर्थः।

—गाह् (गाहू विलोडने)। विश्वा उत त्वया वयं धारा उदन्या इव। अति गाहेमहि द्विषः (ऋ० २।७।३)। अतिगाहेमहि अतिक्रामेम। उपप्लवेमहि। इन्दुः पुनानो अतिगाहते मृधः (ऋ० ९।८६।२६)। उक्तोऽर्थः।

—गुर् (गुरी उद्यमने)। मृगो नाश्नो अति यज्जुगुर्यात् (ऋ० १।१७३। २)। अतिजुगुर्यात्, आक्रोशेत् (हृष्टः सन्)।

—ग्रह् (ग्रह उपादाने)। वृत्ततोऽतिगृह्यते (पा० ५।४।४६ सूत्रे वृत्तौ)। सुष्ठुवृत्तवानन्याननतिक्रम्य वृत्तेन गृह्यते इत्यर्थः। त एतानतिग्राह्यान् ददृशुस्तानत्यगृह्णत तद्यदेनानत्यगृह्णत तस्मादतिग्राह्या नाम (श० ब्रा० ४।५।४। २)। संख्यामतीत्याददतेत्यर्थः। बभूवुरनतिग्राह्या योषितश्छन्दतः किल (भा० सभा० ३१।३७)। अत्यन्तं सुग्रहा न बभूवुरित्याह। अतिग्रहाव्यथनक्षेपेष्वकर्तरि तृतीयायाः (पा० ५।४।४६)। अतिक्रम्य ग्रहोऽतिग्रह इति वृत्तिः।

—चर् (चर गतिभक्षणयोः)। तत्र विराधदनुकबन्धप्रभृतयः केप्यतिचरन्तीति श्रुतम् (महावीर० २)। अभिचरन्ति अतिशयेनाटन्ति। पुत्राः पितॄनत्यचरन् नार्यश्चात्यचरन्पतीन् (भा० शां० २।२८।५५)। अत्यचरन् वचने नातिष्ठन्, अनुव्रता अनुरक्ता नाभूवन्नित्यर्थः। नातिचरेद्भर्तारम् (गौ० ध० २।९।२)। न व्यभिचरेत्। सुवृत्ता वृत्तशौटीर्यं न त्वामत्यच्चरच्छुभा (रा० ६।११८।६)। उक्तोऽर्थः। स्वं स्वमाचारमत्यचारिषुः (दशकु० १६२)। अत्यचारिषुः=उदलङ्घिषत। ऋत्विगाचार्यौ नातिचरितव्यौ (मी० शा० भा० १०।२।१६।४६)। नातिक्रमणीयौ। स्त्री यातिचारिणी (गौ० ध० ३।४।३५)। पतिमतिचरतीत्येवंशीला, स्वैरिणीत्यर्थः। अतिक्रम्य स्वस्थानं सरोऽन्तरं गच्छति अतिचरा सञ्चारिणी स्थलपद्मिनी। मनसा भर्तुरतिचारे (व० ध० २१।६)। अतिचारोऽतिक्रमः। अतिचारः कुजादिपञ्चग्रहाणां स्वस्वाक्रान्तराशिषु भोगकालमुल्लङ्घ्य राश्यन्तरगमनम्।

—छिद् (छिदिर् द्वैधीकरणे)। अतिच्छेदातिवादाभ्यां स्मयोऽयं समुपागतः (भा० अनु० १२०।९)। अतिच्छेदोऽत्यन्तमन्तरम् मशकेन समुद्रशोषणमिवेति नील०। स्मयो विस्मयः।

—जन् (जनी प्रादुर्भावे)। अतिजातः (सुतः)। यः पितॄनतिक्रामति गुणैः (पञ्चत०)।

—जि (जि जये, जि अभिभवे)। लोकं ह्यतिजितं कृत्वा ह्यावां हन्तुमिहेच्छति (रा० ३।७०।५)। अतिजितमतिपराभूतम्।

—जीव् (जीव प्राणधारणे)। अतिजीवेत्स सर्वेषु लोकेष्वपि पुरन्दरात्

(रा० ३।३४।१६)। अतिजीवेत् ततोऽधिकं जीवेत्, चिरजीविततरः स्यात्। गुरूनमात्यांश्च नातिजीवेत् (आप० ध० २।१०।२५।१०)। भक्ष्यभोज्याच्छादनादिषु तान् नातिशयीतेत्याह। ततोप्युत्कृष्टमुल्बणतरं न जीवेदिति भावः। अत्यजीवदमरालकेश्वरौ (रघु० १९।१५)। उक्तोऽर्थः।

—डी (डीङ् विहायसा गतौ)। प्रचण्डमतिडीनकम् (भा० कर्ण० ४१। २७)।

—तप् (तप सन्तापे)। अविषह्यांशुरादित्यो यावन्नातितपत्यसौ (रा० ३।१२।८)। अतितपति प्रचण्डं दीप्यते। रोहितोऽत्यतपद् दिवम् (अथर्व० १३।२।४०)। अत्यतपत् उष्णिमानमगमयत्। अत्युष्णतामनयत्। अतितप्तया गिरा (रा० ३।६६।२६)। अतिमात्रं क्रुद्धया, बलवन्निन्दन्त्या।

—तृद् (उतृदिर् हिंसानादरयोः)। अति धन्वान्यत्यपस्ततर्द (अथर्व० ७।४१।१)। अतिततर्द द्विधा चकार। यन्मे छिद्रं चक्षुषो हृदयस्य मनसो वातितृण्णम् (वा० सं० ३६।२) अतितृण्णं विदीर्णम्।

—तृ (तृ प्लवनतरणयोः)। ययाऽति विश्वा दुरिता तरेय (ऋ० ३। ४१।३)। अतितरेय पारयेय। अपरेऽतितरामसि। उक्तोऽर्थः। तेपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः (गीता० १३।२५)। मृत्युमतियन्तीत्याह।

—त्वर् (ञित्वरा संभ्रमे)। किं सौम्य नातित्वरसे (भा० शां० १३८।६२)। किमिति तेऽतिसंभ्रमो न।

—दा (डुदाञ् दाने)। अध प्लायोगिरिति दासदन्यानासङ्गो अग्ने दशभिः सहस्रैः (ऋ० ८।१।३३)। अतिदासत् अन्यान्=अन्यानपेक्ष्याधिकं ददाति। न जीवन्तमतिददातीति श्रुतेः (का० श्रौ० ४।१।२७)। जीवन्तमतीत्येति पाठान्तरम्। अतिक्रम्य ददाति। जीवपित्रा व्यवेताय पितामहाय पिण्डं न ददातीत्यर्थः।

—दाश् (दाशृ दाने)। मघैर्मघोनो अति शूर दाशसि (ऋ० ८।२४।२)। मघोनो मघवतो धनवतोऽतिक्रम्यास्मभ्यं ददासीत्याह। स हि विश्वाति पार्थिवा रयिं दाशन्महित्वना (ऋ० ६।१६।२०)।

—दिव् (दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु)। उत प्रहामतिदीव्या जयाति (ऋ० १०।४२।९)। अतिदीव्य उच्चैः प्रोप्य। तद्वै वित्तं मातिदेवीः (भा० सभा० ५९।१२)। देवनेन मा पराजेष्ठाः।

—दिश् (दिश अतिसर्जने, दिशिरुच्चारणक्रिय इति भाष्यकारः)। वतण्डी चासौ युवतिश्च वातण्ड्ययुवतिः। पुंवद्भावेनान्तरतमः पुंशब्दोऽति-

दिश्यते (पा० १।१।५० सूत्रे वृत्तौ)। जनपदतदवध्योश्चेति (४।२।१२४) प्रकरणे ये प्रत्यया विहितास्ते जनपदिभ्योस्मिन्नर्थेतिदिश्यन्ते (पा० ४।३।१०० इति सूत्रे वृत्तौ)। **स्वविषयं व्यतिरिच्य विधीयन्ते इत्यर्थः।** प्रधानमल्लनिबर्हणन्यायेनातिदिशति (मी० शा० भा०)। **अतिदेशो** नाम ये परत्र विहिता धर्मास्तमतीत्यान्यत्र तेषां देशः (मी० शा० भा० ७।१।१२)। **अन्यत्रैव** प्रणीतायाः कृत्स्नाया धर्मसंहृतेः। अन्यत्र कार्यतः प्राप्तिरतिदेशः स उच्यते ॥ प्राकृतात्कर्मणो यस्मात्तत्समानेषु कर्मसु। धर्मप्रवेशो येन स्यादतिदेशः स उच्यते ॥ इत्यर्थितः स भगवान् अतिदिश्यात्मनः पदम् ।...धाम स्वमयात् (भा० पु० ४।६।२६) ॥ **अतिदिश्य आदिश्य शंसित्वा। अस्थानेऽतिशब्दः।**

—दृश् (दृशिर् प्रेक्षणे)। सहस्राक्षा अतिपश्यन्ति भूमिम् (अथर्व० ४।१६।४)। **अतिशयेन पश्यन्तीत्यर्थः।** ततः परं नातिपश्यामि किंचन (अथर्व० १८।३।३२)। **अतिरतिक्रमणे वर्तते। विप्रकृष्टं नेक्ष इति विवक्षत्यृषिः।**

—द्रु (द्रु गतौ)। अतिद्रव सारमेयौ श्वानौ चतुरक्षौ शबलौ (ऋ० १०।१४।१०)। **अतिद्रव=अतिक्राम। अतिक्रम्य याहि।** उत्तरं गिरिमतिदुद्राव (श० ब्रा० १।८।१।५)। **अतिदुद्राव त्वरया प्राप।**

—धा (डुधाञ् धारणपोषणयोः)। आयुर्यत्ते अतिहितं पराचैः (अथर्व० ७।५३।३)। **अपाकृतमपनीतमित्याह।**

—धाव् (धावु गतिशुद्ध्योः)। अति ह्वरांसि धावति (सोमः) (ऋ० ६।३।२)। **अतिधावति परिस्रवति। शत्रून् हन्तुं त्वरत इत्यर्थः।**

—ध्यै (ध्यै चिन्तायाम्)। ततोऽतिध्यायतस्तस्य जज्ञिरे मानसीः प्रजाः (मूरसंस्कृतपाठावल्यां वायुपुराणवाक्यम्)। **अतिध्यायतो ध्यान-निमग्नस्य।**

—ध्वंस् (ध्वंसु गतौ च)। श्यावीरति ध्वसन्पथः (वालखिल्येषु ६।५)। **अत्यध्वसन् अत्यध्वंसन्त अवधुता अभूवन्।**

—नम् (णम प्रह्वत्वे शब्दे च)। प्रीतिप्रामोद्येन तमहोरात्रमतिनामयामास (अवदा० जा० ७)। **पर्यणमयामास, गमयामास क्षपयाञ्चकार।** अतिनत्येव पात्राणि (श० ब्रा० १।१।४।४)। **अतिनत्य अतिनम्य पार्श्वतो ऽवलम्ब्य अवष्टभ्य।**

—नी (णीञ् प्रापणे)। इन्द्रो यथैनं शरदो नयात्यति (अथर्व० ३।११।३)। **अतिनयाति अतिक्रमयति।** सप्तमीं (रात्रिं) नातिनयेत्। सप्तमीमतिनयन्नब्रह्मचारी भवति। **अतिनयेत् अतिक्रामेत्।** न स्वर्गं लोकमतिनयेत्

(छां० उ० १।८।५)। अतिनयेत् इतो निष्क्रमय्य प्रापयेत्। ऋतस्य नः पथा नयातिदुरिता (ऋ० १०।१३३।६)। दुरितान्यतिनय दुरितान्यतीतान्नः कुर्वित्याह। तदेनं (पूर्णग्रहम्) सर्वाणि सवनान्यति नयति (श० ब्रा० ४।२।४।५)। अतिनयति अन्तरेण नयति। शृण्वे वीर उग्रमुग्रं दमायन्नन्यमन्यमतिनेनीयमानः (ऋ० ६।४७।१६)। अतिनेनीयमानः=अग्रेऽग्रे नयमानः कर्षन्। अतिनीय मानुषं कालम् (श० ब्रा० ३।२।२।१६)। अतिनीय व्यतियाप्य।

—नु (णु स्तवने)। अग्निष्ठां तस्याश्रिमाहवनीयादित्थं वेत्थं वाति नावयेत् (तै० सं० ६।३।४।४)। आवर्तयेदित्यर्थः।

—नुद् (णुद प्रेरणे)। गवां यक्ष्मः पुरुषाणां वीरुद्भिरतिनुत्तो नाव्या एतु स्रोत्याः (अथर्व० ८।७।१५)। अतिनुत्तः=अतिनुन्नः पराणुन्नः। दूरं प्रेरितः।

-नेद् (णिद, णेद् कुत्सासन्निकर्षयोः)। या हुता अतिनेदन्ति (श० ब्रा० १४।६।१।१०)। उपरि प्लवन्ते फेनिला वा भवन्तीत्यर्थः। एता वत्रं नेदन्त्यति (तै० सं० १।६।८।१)। अतिनेदन्ति अतिक्रामन्ति।

—पठ् (पठ व्यक्तायां वाचि)। नारायणाङ्कप्रख्यस्त्वं साम्परायेऽतिपठ्यसे (भा० वन० १२८१३)। अभिपठ्यस इति त्विष्यते।

—पत् (पत्लृ गतौ)। अथ ह हंसा निशायामतिपेतुः (छां० उ० ४।१।२)। हर्म्यतलमधिशयानस्योपर्युत्पेतुरित्यर्थः। घृणा तपन्तम् अति सूर्यं परः शकुना इव पप्तिम (ऋ० ६।१०७।२०)। अतिपप्तिम अतिपेतिम। उक्तोऽर्थः। ये सत्यमेव हि गुरूनतिपातयन्ति (मुद्रा० ३।३४)। अतिपातयन्ति अवमानयन्ति अवजानन्ति। हित्वा व्रजमादितः कर्शयेत्पशून् नातिपातयेत् (आप० ध० २।११।२८।५)। नातिनिरोधनं कुर्यात् ताडयेद्वा। संशमनमेव संशोधनमतिपातयेत् (सुश्रुत० १।१४६।१२)। अकार्मुकं कुर्यात्, अप्रभावुकं कुर्यात्। इषुमनतिपातयन् (लाट्या० श्रौ० ३।१०।१२)। अनतिपातयन् अमुञ्चन् अविसृजन्। विषं मुहूर्तमप्युपेक्षितमातुरमतिपातयति (सुश्रुत० )। अतिपातयेत् अत्ययं मृत्युमापादयेत्। सम्प्राप्तामतिपत्य तां नृपतितां शक्रर्द्धिविस्पर्धिनीम् (अवदा० २।२६)। अतिपत्य परित्यज्य। अस्थि निःशेषतश्छिन्नमतिपातितम् (सुश्रुत०)। अतिपातितं निर्भिन्नम्। काममनतिपात्यं धर्मकार्यं देवस्य (शा० ५)। अनतिपात्यमनतिलङ्घनीयम्, अव्याक्षेप्यम्, अनुपेक्ष्यम्। न चेदन्यकार्यातिपातः (शा० १)। कार्यान्तरव्यति-

क्रमः । कार्यान्तरान्तराय इति यावत् । परावनुपात्यय इणः (पा० ३।३।३८) इति सूत्रे वृत्तौ कालस्य पर्ययः, अतिपात इति स्थितम् । दुःखातिपातेन कलुषी क्रियन्ते (काद० १८६) । दुःखोपनिपातेन, दुःखोपनामेन । अतिशब्दो नातीवौपयिकः, महाकवेः प्रयोग इति कथं चित्सह्यः । प्राणातिपातनिरतो निरनुक्रोशतां गतः (रा० १।५६।२१) । प्राणातिपातः प्राणविनाशः । ततार विद्याः पवनातिपातिभिर्दिशो हरिद्भिर्हरितामिवेश्वरः (रघु० ३।३०) । पवनातिपातिभिः=वातवेगातिशायिभिः । अतिपातिवृत्तान्तनिवेदनत्वरयाऽवस्थान्तरं नावेक्षितम् (अभि० ५) । अतिपाति कार्यमिदम्, शीघ्रं निवेद्यताम् (पञ्च० २) । अतिपाति आत्ययिकं बिलम्बासहम् ।

—पद् (पद गतौ) । अग्नये पथिकृतेऽष्टाकपालं निर्वपेद्यस्य पौर्णमासी वाऽमावस्या वातिपद्येत (काठक० १०।५) । अतिपद्येत अतिक्रामेत् अतीयात् । संस्कारा अतिपद्येरन्स्वकालाच्चेत् कथं चन (का० स्मृ०) । अतिपद्येरन्=प्रच्यवेरन् । विहित-कालमतिक्रामेयुः । न सूक्तेन निविदमतिपद्येत (ऐ० ब्रा० ३।११, ४।१०) । येन सूक्तेन निविदमतिपद्येत न तत् पुनरुपनिवर्तेत (ऐ० ब्रा० ३।११) । यद्व्रतमतिपेदे चित्त्या मनसा हृदा (कौ० सू० ५२।१७) । अतिपेदे ललङ्घे । अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेद्यो दर्शपूर्णमासयाजी सन्नमावास्यां वा पौर्णमासीं वाऽतिपादयेत् (तै० सं० २।२।२।१) । अतिपादयेत् अतिक्रमयेत् । स्वकालेऽननुष्ठानमतिपादनम् । यद्वो देवा अति पादयानि (आप० श्रौ० ६।४।१५।५१) । अतिपादयानि अतिक्रामाणि । अप्रज्ञातं हि तद्यदतिपन्न आहुरिदं कार्यमासीदिति (तै० सं० ६।३।४।८) । अतिपन्नमनिष्पन्नम् । कुतश्चिद् वैगुण्यात् क्रियाया अनिर्वृत्तिरतिपत्तिरिति भट्ट० । ततो घृतातिपत्तौ घृतभोजनक्रियाप्यतिपन्नैव (पा० ३।३।१३९ सूत्रे पदमञ्जरी) । लिङ्निमित्ते लृङ् क्रियातिपत्तौ (पा० ३।३।१३०) । क्रियातिपत्तिः क्रियाया अनिष्पत्तिः । लघूत्थितो हन्यान्मा भूत् कालातिपत्तिरिति (का० नी० सा० १६।६८ मङ्गलायाम्) । कालातिपत्तिः कालातिपातः । देशकालातिपत्तौ तु गृहीत्वा स्वयमर्पयेत् (याज्ञ० १६६) । अतिपत्तिरतिक्रमः ।

—पा (पा पाने) । सा मद्यं तेनातिपायिता (कथा० ३६।२०७) । अतिपायिता सातिशयं पानं कारिता ।

—पॄ (पॄ पालनपूरणयोः) । पिपर्तु नो अदिती राजपुत्राऽति द्वेषांस्यर्यमा सुगेभिः (ऋ० २।२७।७) । अति पिपर्तु पारं नयतु, पारयतु । ये नो अंहोतिपिप्रति (ऋ० ७।६६।५) । इन्द्रं रात्रेस्तमसो मृत्योर्बिभ्यतमत्यपारयन्

(ऐ० ब्रा० ४।५)। स नः पर्षदति द्विषः (अथर्व० ६।३४।१)। **अतिपर्षत् अतिपारयतु। पञ्चमे लकारे रूपम्।**

—प्रच्छ् (प्रच्छ ज्ञीप्सायाम्)। गार्गि माति प्राक्षीः, मा ते मूर्धा व्यप्तत् (श० ब्रा० १४।६।६।१)। **उत्तरोत्तरं प्रश्नान् मा कार्षीः।** अति प्रश्न्या वै देवता अति पृच्छसि। **अतिक्रम्य मर्यादां प्रश्नोऽतिप्रश्नः। दत्तोत्तरोपि पुनः प्रश्नो यः केवलाय खेदाय भवति सोऽतिप्रश्नः। अतीन्द्रियार्थप्रश्नो वातिप्रश्नः।**

—बाध् (बाधृ लोडने, लोडनं प्रतिघातः)। कच्चित्सखीं वो नातिबाधते शरीरातपः (शा०)।

—बृह् (बृह उद्यमने)। अति बृहति रेतः (नि० ६।२२)। **रेतः सेक्तुमतिशयेनात्मानमुद्यच्छति।**

—ब्रू (ब्रूञ् व्यक्तायां वाचि)। यो नात्युक्तः प्राह रूक्षं प्रियं वा। **अत्युक्तो विधेयं प्रति निन्दितः, दूषितः।** यशस्विनस्तीक्ष्णविषान् महारथानतिब्रुवन् मूढ न लज्जसे (भा० वन०)। **अतिब्रुवन् वाचावमानयन्।**

—भा (भा दीप्तौ)। **'प्रकर्षे लङ्घनेप्यति' इत्यमरोक्ति व्याचक्षाणः स्वाम्याह**—सर्वान्गुणानेष गुणोतिभाति। **अतिक्रम्य भातीत्यर्थः।**

—भुज् (भुजो कौटिल्ये)। किमनेनातिभुग्नेन वाग्भिः काष्ठसधर्मणा (भा० शल्य० ६१।२२)। **भुग्नेन रुग्णेन तुन्नेन।**

—भू (भू सत्तायाम्)। शब्दश्च घोरोऽति बभूव तत्र (भा० कर्ण० ८६।१८)। **अतिबभूव=प्रादुर्बभूव।** इन्द्रोऽत्यन्या देवता अभवत् (पञ्च० ब्रा० २२।८।२)। **अत्यभवत् अत्यशेत।** पितॄन् दश तु मातैका सर्वां वा पृथिवीमपि। गुरुत्वेनातिभवति...(भा० अनु० १०५।१५)। **अतिभवति अतिशेते, अतिक्रामति।** ध्वान्तं भात्यतिभूतार्का घोरेण तमसा वृता (हरि० १।४२।१६)। **अतिभूतार्का=उपप्लुतादित्या। अभिभूतार्केति पाठान्तरम्। तच्च साधीयः।** अथवाऽतिभवेन्नेत्रशूलम् (का० सं० खिल० कुक्कुण० श्लो० ३७)। **अतिभवेत्=अधिकं भवेत्।** अति-भूमिं गतेन रणरणकेन (उत्तर० १)। **अतिभूमिं परां सीमानम्।** विपदि न दूषिताऽतिभूमिः (शिशु० ८।२०)। **अतिभूमिर्मर्यादा नातिक्रान्तेत्याह। अतिधाष्टर्यं दोषो नाजायतेत्यर्थः।**

—मन् (मन ज्ञाने)। न हि त्वा पूषन्नतिमन्ये (ऋ० १।१३८।४)। **आत्मानं नाधिकं (श्रेयांसं) गणयामीत्यर्थः। न त्वामतिक्रम्यान्यां देवतां मन्य इति दुर्गः।** भृगुर्ह वै वारुणिः। वरुणं पितरं विद्ययाऽतिमेने (श० ब्रा० ११।

६।१।१) । उक्तोऽर्थः । मद्विधं योतिमन्येत धर्मनित्यं जितेन्द्रियम् (रा० ३।४३।४५) । अतिमन्येत = अतिक्रामेत् । अवमन्येत । किं नो भ्रातरगस्त्य सखा सन्नति मन्यसे (ऋ० १।१७०।३) । उक्तपूर्व एवार्थः । तस्मान्नाति मन्येत पराभवस्य हैतन्मुखं यदतिमानः (श० ब्रा० ५।१।१।१) । अतिमानः गर्वः, दर्पः ।

**—या** (या प्रापणे) । मातियासीः (भट्टि० २।५१) । मातिक्रमीः, माऽतिक्रम्य गमः । येनातियाथो दुरितानि विश्वा (ऋ० ५।७७।३) । येन रथेन । अनन्तरोदित एवार्थः । अति वायो ससतो याहि (ऋ० १।१३५।७) । ससतः स्वपतो जनस्योपरि वाहि, प्रवान्याहीत्याह ।

**—राज्** (राजृ दीप्तौ) । सद्यो यः स्पन्द्रो विषितो धवीयानृणो न तायुरति धन्वा राट् (ऋ० ६।१२।५) । अतिराट् अतिराजति अतिक्रम्य राजते ।

**—रिच्** (रिचिर् विरेचने) । संभावितस्य चाकीर्तिर्मरणादतिरिच्यते (गीता० २।३४) । मरणादधिका भवति । अकीर्तिरयश उपक्रोशः । अकीर्तिरनिष्टतरा दुःखतरा भवतीत्याशयः । पुत्रगात्रस्य संस्पर्शश्चन्दनादतिरिच्यते (भा० वन० ) । चन्दनाच्छ्रेयान्भवति । सुखावहतरो भवतीत्यर्थः । न तद्भूतमहं मन्ये यदर्कादतिरिच्यते (भा० वन० ३।४५) । ततः श्रेयो भवतीत्यर्थः । अश्वमेधसहस्रेभ्यः सत्यमेवातिरिच्यते (हितोप० ४।१३१) । ततो ज्यायो भवतीत्यर्थः । गृहं तु गृहिणीहीनं कान्तारादतिरिच्यते (पञ्चत० ४।८१) । अधिकमनेषणीयं भवति, शून्यत्वादतितरां प्रतिभयं भवतीति भावः । वाचः कर्मातिरिच्यते । कर्म गरीयो भवति । दैवमत्रातिरिच्यते (हितोप०) । दैवमुत्तरं भवति, प्रभवतीति यावत् । आकिञ्चन्यं च राज्यं च तुलया समतोलयम् । अत्यरिच्यत दारिद्र्यं राज्यादपि गुणाधिकम् (रा० गोरेसियो० २।६१।१०) । अतिरिक्तं हि दारिद्र्यस्य गौरवं प्रादुरासीत् इत्यर्थः । छन्दसामति त्रीण्यरिच्यन्त । न त्रीण्युदभवन् (तै० ब्रा० १।५।१२।१) । त्रीणि भूयोक्षराण्यभूवन् । त्रीणि च न्यूनाक्षराणीत्याह । न वा आत्माङ्गान्यतिरिच्यते, नात्मानमङ्गान्यतिरिच्यन्ते (श० ब्रा० १२।२।३।६) । पृथगवस्थितानि नोपलभ्यन्ते, आत्मनान्तरीयकाणि भवन्तीति भावः । आत्मेह देहवचनः । यस्य दिवमति मह्ना पृथिव्याः पुरुमायस्य रिरिचे महित्वम् (ऋ० ६।२१।२) । दिवमतिरिरिचे महत्त्वम् दिवोपि ज्यायो बभूव, दिवमतिलङ्घ्य पप्रथ इत्याह । सोमं मातिरीरिचः (श० ब्रा० ४।४।२।७)। माऽतिसावीरित्यर्थः । इदं वाऽत्यरीरिचन्निदं न्यूनमक्रन् (श० ब्रा० ११।२।३।७) । अत्यरीरिचन् यावद् विहितं

ततो तिरिक्तमवारिषुः । यदस्य कर्मणोऽत्यरीरिचं यद्वा न्यूनमिहाकरम् (आप० श्रौ० ३।१५।१) । उक्तोऽर्थः ।

—रुच् (रुच दीप्तावभिप्रीतौ च) । दूरे चित्सन्तळिदिवाति रोचसे (ऋ० १।९४।७) । अतिशयेन दीप्यस इत्यर्थः । यः परस्याः परावतस्तिरो धन्वातिरोचते (ऋ० १०।१८७।२) । अतिरोचतेऽतिभासते । अत्यरोचत तान्सर्वान्धृष्टद्युम्नः समागतान् (भा० द्रोण० २३।८१) । अत्यरोचत धाम्नात्यशेत ।

—रुह् (रुह बीजजन्मनि) । यदन्नेनातिरोहति (ऋ० १०।९०।२) । यदन्नेन संवर्धत इत्याह । अतिरूढत्वम् (राज० ६।२७२) । अतिप्रसिद्धिः, महती प्रथा । सार्वलौकिकत्वम् ।

—वद् (वद व्यक्तायां वाचि) । दुन्दुभिः सर्वा वाचोऽतिवदति (तै० ब्रा० १।३।६।२) । सर्वान्ध्वनीन्व्यक् करोति, सर्वाञ्शब्दांस्तिरयति । एष तु अतिवदति यः सत्येनातिवदति (छां० उ० ७।१६।१) । सुतरां वदतीत्यर्थः । यदिदं कुरुपञ्चालानां ब्राह्मणानत्यवादीः किं ब्रह्म विद्वानिति (बृ० उ० ३।९।१९) । अत्यवादीः=अनिन्दीः, अवाक्षैप्सीः । यः परेषां नरो नित्यमतिवादांस्तितिक्षते । देवयानि विजानीहि तेन सर्वमिदं जितम् (भा० आदि० ७९।१) ॥ अतिवादो निन्दावचनम् । पारुष्यमतिवादः स्यात् (अमरः) । अतिवादं शंसति । अतिवादेन वै देवा असुरानत्युद्य अथैनानत्यायन् (ऐ० ब्रा०) । अतिवादोऽत्युक्तिः । अतिवादाद् वदाम्येष मा धर्ममभिशङ्किथाः (भा० वन० ३१।७) । मानान्तरमतिक्रान्तो वादोऽतिवादः । वेदैकप्रमाणप्रमितः । प्राणो ह्येष सर्वभूतैर्विभाति । विजानन् विद्वान् भवते नातिवादी (मुं० उ० ३।१।४) । इतरनैरपेक्ष्येण स्वेन प्रतिज्ञातमर्थमेव प्रतितिष्ठापयिषुरतिवादी भवति ।

—वस् (वस निवासे) । श्राद्धात् पूर्वस्मिन्नहन्युपवासोऽतिवास उच्यते ।

—वह् (वह प्रापणे) । अथैना (देवताः) मृत्युमत्यवहत् (श० ब्रा० १४।४।१।१२) । मृत्युमत्यवहत् मृत्योः पारे ऽनयदित्यर्थः । अतिवाहयाम्बभूव त्रियामाम् (रघु० ९।७०) । अतिवाहयाम्बभूव क्षपयाम्बभूव । अस्मिंस्तमालविटपान्धकारे प्रविश्य एनमतिवाहयामः (रत्ना० २) । तत्कृतानुसाराद।त्मानं परिहराम इत्युक्तं भवति । राजपुत्रैः समं सख्यं कृच्छ्रादप्यतिवाह्यते (कथा० २८।१११) । अतिवाह्यते निर्वाह्यते । किं वा मयापि न दिनान्यतिवाहितानि (मालती० ६।१३) । गमितानीति यावत् । गुहाविसारीण्यतिवाहितानि मया कथंचिद् घनगर्जितानि (रघु० १३।२८) । अतिवाहितानि सोढानि । लोका-

तिवाहिते मार्गे (सर्वद०)। लोकेन प्रहत इत्यर्थः। अलकामतिवाह्यैव वसति वसुसम्पदाम् (कु० ६।३७)। अतिवाह्य सङ्क्रमय्य। अतिशय्य, परिच्छिद्येति यावदिति तु मल्लिः। स शापस्तेनातिवाहितः (कथा० ३३।६१)। अतिवाहितः सोढः। आतिवाहिक एवायं त्वादृशैश्चित्तदेहकः (यो० वा०)। अत्यन्तं कार्याकारं वोढुं समर्थोऽतिवाही सूक्ष्मभूतसङ्घः, तेन निर्वृत्त आतिवाहिकः।

—वा (वा गतिगन्धनयोः)। न भूमिं वातो अतिवाति (अथर्व० ४।५।२)। नातिमात्रं गच्छत्वित्यर्थः।

—वी (वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु)। वेत्यग्रुर्जनिवान्वा अति स्पृधः (ऋ० ५।४४।७)। स्पृधोतिवेति योद्धॄनत्यासादयति।

—वृत् (वृतु वर्तने)। अपत्यलोभाद्या तु स्त्री भर्तारम् अतिवर्तते (मनु० ५।१६१)। अतिवर्ततेऽतिलङ्घते व्यभिचरति। दुःशासनरथं प्राप्य यत्पार्थो नात्यवर्तत (भा० भीष्म० ११०।२०)। नालङ्घत। यथाहं कर्मणा वाचा शरीरेण च राघवम्। नातिवर्तेय ''(रा० )। अनुव्रता न स्यामित्यर्थः। बान्धवस्नेहं राज्यलोभोऽतिवर्तते (कथा० ४१।४०)। अतिवर्ततेऽभिभवति। बाधते। नक्षत्रमतिपृच्छन्तं बालमर्थो ऽतिवर्तते। (कौ० अ० ६।४।२६)। अतिवर्तते त्यजति। ऋतुस्नातां सतीं भार्यामृतुकालानुरोधिनीम्। अति वर्तेत दुष्टात्मा''''''(रा० २।७५।५२)॥ अतिवर्तेत=उपेक्षेत, तत्रौदासीन्येन वर्तेत। उपासते पुरुषं ये ह्यकामास्ते शुक्रमेतदतिवर्तन्ते (मुं० उ० ३।२।१)। अतिवर्तन्तेऽतितरन्ति। कोऽन्यो जीवितुकामो देवस्य शासनमतिवर्तते (मुद्रा० ३)। अतिवर्तते लङ्घते। एवं तयोः प्रत्यहमन्योन्याहारादिदानेन कालोतिवर्तते (हितोप० १)। अतिवर्ततेऽतियाति। आ षोडशाद् ब्राह्मणस्य सावित्री नातिवर्तते (मनु० २।३८)। अतिक्रान्तकाला न भवतीत्युक्तं भवति। यथा मे हृदयं नित्यं नातिवर्तते राघवाद् (रा० )। नातिवर्तते न व्यपवर्तते। ''''''प्रविष्टस्तात भारतीम्। सूर्योदये महाबाहुर्दिवसश्चातिवर्तते। अतिक्रामति, व्यत्येति। असाध्यानतिवर्तन्ते प्रमेहा रजनी यथा (सुश्रुते)। अभिभवन्ति; अधिकुर्वते। विद्या वितर्को विज्ञानं स्मृतिस्तत्परता क्रिया। यस्यैते षड् गुणास्तस्य न साध्यमतिवर्तते (चरक० सूत्र० ६।२०)। नातिवर्तते न नश्यति। किमाचारः कथं चैतान् त्रीन् गुणानतिवर्तते (गीता० १४।२१)। गुणातीतो भवतीत्याह। निस्त्रैगुण्योभवतीति वा। येनेन्द्रियेण गृह्यते शब्दस्तस्य विषयभावमतिवृत्तोऽर्थो न गृह्यते (न्यायसू० २।१।५१ भाष्ये)। त्वं नातिवृद्धो वयसा नातिवृत्तश्च यौवनात्। कथमल्पेन कालेन पृथिवीमटसि द्विज (मार्क० पु०

६१।११) ॥ यौवनादतिवृत्तः=यौवनाद् दूरं गतः। अधर्मेण जितो धर्मः प्रवृत्तमधरोत्तरम् । शर्मिष्ठयाऽतिवृत्तास्मि दुहित्रा वृषपर्वणः (भा० आदि० ८३।२८) ॥ अतिवृत्ताऽतिशयिता, विशेषिता, दूरीकृता, पश्चात्कृता । नूनं दैवं न शक्यं हि पौरुषेणातिवर्तितुम् । यदर्थं यत्नवानेव न लभे विप्रतां विभो (भा० अनु० २९।१६) । अतिवर्तितुम्, बाधितुम्, अभिभवितुम् । यानस्य चैव यातुश्च यानस्वामिन एव च । दशातिवर्तनान्याहुः शेषे दण्डो विधीयते (मनु० ८।२९०) ॥ अतिवर्तनानि क्षम्याण्यागांसि । दण्डनिर्मुक्ता अपराधाः ।

—व्यध् (व्यध ताडने) । अति क्षिप्रेव विध्यति (ऋ० ४।८।८) । आ राष्ट्रे राजन्यः शूर इषव्योतिव्याधी महारथो जायताम् (वा० सं० २२।२२) । अतिव्याधी दूराद् व्यधनशीलः । यो वा निष्पत्रा करोत्यरीन् ।

—व्रज् (व्रज गतौ) । अपरेण वेदिमतिव्रज्य (आश्व० श्रौ० २।३।११) । अतिव्रज्य लङ्घयित्वा ।

—शी (शीङ् स्वप्ने) । अहं पतीन्नातिशये नात्यश्ने नातिभूषये (भा० वन० २३३।३८) । पतीनतिक्रम्य न शये, यावन्मे पतयो न शेरते तावन्नाहं शये । अहं जघन्यसंवेशिनीत्याह । नैतानतिशयेज्जातु नात्यश्नीयान्न दूषयेत् (भा० शां० १०८।१०) । उक्तोऽर्थः । पूर्वान्महाभाग तयाऽतिशेषे (रघु० ५।१४) । अतिक्रामसीत्यर्थः । धाम्नाऽतिशाययति धाम सहस्रधाम्नः (मुद्रा० ३।१७) । स्वार्थे णिच् । उक्तचर एवार्थः । चरितेन चातिशयिता मुनयः (कि० ६।३२) । अतिवृत्ताः । चरितोत्कर्षेण पृष्ठतः कृता इत्यर्थः । न शक्नुमो वयमार्यस्य मतिमतिशयितुम् (मुद्रा० ३) । अतिशयितुमतिक्रमितुम्, मतिमाहात्म्यमत्येतुम् । महार्घस्तीर्थानामिव हि महतां कोप्यतिशयः (उत्तर० ६।११) । अतिशयः प्रकर्ष उत्कर्षः, माहात्म्यम्, गौरवम् ।

—श्लिष् (श्लिष आलिङ्गने) । अतिश्लिष्टचीनांशुकान्तरीयम् । अतिश्लिष्टं सन्दष्टम् ।

—सृ (सृ गतौ) । अहरतिसृता मुहूर्ताः । रात्र्यतिसृता मुहूर्ताः (कालाः २।१।२८ इत्यत्र वृत्तावुदाहरणे) । अतिसृताः सङ्क्रान्ताः । अनेकवर्णं वमति मूत्रयत्यतिसार्यते । (अष्टाङ्ग० सू० ७।२३) । अतिसार्यते विरेच्यते । अतिसारः । रुधिरादिकमतिशयेन सारयतीति व्युत्पत्तिः । व्याधिविशेषः ।

—सृज् (सृज विसर्गे) । कामानभिध्यायन्नचिकेतोऽत्यस्राक्षीः (कठ० उ० १।२।३) । अत्यस्राक्षीरत्याक्षीरित्यर्थः । इत्यृषभं सम्पातवन्तमतिसृजति (कौ० सू० २४।१९) । अतिसृजति=उत्सृजति । स्वयमेनमभ्युदेत्य ब्रूयाद् व्रात्यातिसृज होष्यामि (आप० ध० २।३।७।१५) । अतिसृज अनुजानीहि । स चाति-

सृजेज्जुहुया न चातिसृजेन्न जुहुयात् (अथर्व० १५।१२।२,३)। चो यद्यर्थे। काममुद्ध्रियतामिति ब्राह्मणा अतिसृजेयुः (आप० ध० २।१७।१६)। उक्तोऽर्थः। यः सत्यवाद्यति तं सृजन्तु (अथर्व० ४।१६।४)। अतिसृजन्तु मुञ्चन्तु। न हि नमस्कारमति देवाः। ते हि नमसिताः कर्तारमतिसृजन्ति (गो० ब्रा० उ० २।१८)। मुञ्चन्तीत्येवार्थः। अंहोमुचो भवन्तीत्याह। इत्यतिसृष्ट उद्धरेत् (आप० ध० २।१७।१६)। अतिसृष्टोऽनुज्ञातः। एवमतिसृष्टस्य (गुरुणा शिष्यस्येति शेषः) (आश्व० गृ० ३।८।७)। अतिसृष्टस्यानुज्ञातगमनस्य। करोतु कटं भवानतिसृष्टः (पा० ३।३।१६३ सूत्रे वृत्तौ)। अनुज्ञात इत्यर्थः। अतिसृष्टं सुरैरेकं त्र्यम्बकाय युयुत्सवे (रा० १।७५।१२)। कतकानुसारी पाठः। अतिसृष्टं दत्तम्। किं वातिसृष्टः पर्वतकभ्रात्रे वैरोचकाय पूर्वप्रतिश्रुतो राज्यार्धविभागः (मुद्रा० २)। अतिसृष्टः समर्पितः। पुरा नारायणेनेयमतिसृष्टा मरुत्वते (विक्रम० १।१७)। प्रतिग्रहो दत्तः, उपायनी कृता, उपहृता। अति-सृज्य ददानीति वरं मम विशांपतिः (रा० २।१८।२३)। अतिसृज्य प्रतिज्ञाय। अतिसृष्टमतिबद्धं कुपितमत्यल्पमभीक्ष्णं वा बहलं सशूलं मूत्रयन्तं दृष्ट्वा मूत्रवहान्यस्य स्रोतांसि प्रदुष्टानीति विद्यात् (चरक० वि० ५।१०)। अतिसृष्टम् अतिप्रस्रुतम्। अतिसृष्टो अपां वृषभ (अथर्व० १६।१।१) इति सूक्तेनापो-ऽतिसृज्या ऽवकरं विसर्जयति। कांस्यपात्रेऽपोऽवसिच्य तामिस्तन्मध्यगतं मलं निर्गमयतीत्यर्थ इति साम्प्रदायिकाः (इति सायणः)। अतिसर्गः काम-चारानुज्ञेति प्रैषातिसर्गप्राप्तकालेषु कृत्याश्चेति सूत्रे वृत्तिः। अतिसर्गाच्च पटवो दृष्ट्वा श्रुत्वा च मैथिलीम् (रा० ५।६२।७)। अतिसर्गोऽनुज्ञानम्। स्त्रीणां दानविक्रयातिसर्गा विद्यन्ते न पुंसः (नि० ३।४)। अतिसर्गः परित्यागः परासनम्। स्रष्टुर्वरातिसर्गात्तु मया तस्य दुरात्मनः (रघु० १०।४२)। वराति-सर्गो वरदानम्। तवातिसर्गाद् देवेश प्राजापत्यमिदं पदम् (भा० कर्ण० ३४।२)। अतिसर्गः प्रसादः। विधुरां ज्वलनातिसर्जनात् (कु० ४।३२)। ज्वलने वह्नौ प्रक्षेपात्। दीयतामिति वचोऽतिसर्जने (शिशु० १४।४८)। अति-सर्जनं वितरणं विश्राणनम्। तत्तदीयविशिखातिसर्जनात् (कि० १३।५७)। अतिसर्जनात् प्रत्यर्पणात्। सैषा ब्रह्मणोऽतिसृष्टिः (बृ० उ० १।४।६)। अति-शयिता समुत्कृष्टा सृष्टिरतिसृष्टिः।

—सृप् (सृप्लृ गतौ)। अहिर्न जूर्णामतिसर्पति त्वचम् (ऋ० ६।८६। ४४)। अतिसर्पति परित्यज्य गच्छति।

—स्कन्द् (स्कन्दिर् गतिशोषणयोः)। ते स्पन्द्रासो नोक्षणोऽति ष्कन्दन्ति शर्वरीः (ऋ० ५।५२।३)। अतियान्तीत्यर्थः।

—स्था (ष्ठा गतिनिवृत्तौ)। स भूमिं विश्वतो वृत्वात्यतिष्ठद् दशाङ्गुलम् (ऋ० १०।९०।१)। अत्यतिष्ठत् अतिक्रम्यातिष्ठत्। इदं सर्वमतितिष्ठत्यवर्गिवास्मादिदं सर्वं भवति यो राजसूयेन यजते (श० ब्रा० ५।४।२।५)। अतितिष्ठति अतिक्रम्य अतिशय्य तिष्ठति। पुरुषो ह नारायणोऽकामयत। अतितिष्ठेयं सर्वाणि भूतानि (श० ब्रा० १३।६।१।१)। उक्तोऽर्थः। यो जनान् महिषाँ इवातितस्थौ पवीरवान् (ऋ० १०।६०।३)। अतितस्थौ अतितष्ठौ अतिभवति, अतिभूय तिष्ठतीति वा। पवीरवान् आयुधवान्। बृहत्पाण्डरवासा अतिष्ठाः सर्वेषां भूतानां मूर्धा (कौ० ब्रा० उ० ४।२)। अतिष्ठाः अतितिष्ठतीति। कर्तरि विच्। अतिष्ठा सर्वेषां भूतानां मूर्धा राजेति (श० ब्रा० १४।५।१।२)। अतिष्ठा = अत्युत्कर्षः। अतिष्ठा वा एषा च्छन्दसां यदतिच्छन्दाः। अतिष्ठाऽश्वमेधो यज्ञानाम् (श० ब्रा० १३।५।१।६)। अतिष्ठावान् बभूव हि (अथर्व० ३।२३।६) अतिक्रम्यावस्थानमतिष्ठा। तद्वान्।

—स्वृ (शब्दोपतापयोः)। यदा वा ऋचमाप्नोत्योमित्येवाति स्वरति (छां० उ० १।४।४)। अतिशयेन स्वरति शब्दं करोति उच्चारयति।

—हन् (हन हिंसागत्योः)। तच्चेदतिहन्यात् (आप० श्रौ० ६।४।१४।१३)। सायम्प्रातर्हुतमतीत्य पुनश्चेद् रुद्रो हन्यात् (पशूनिति शेषः) इत्यर्थः। तस्य हैतस्य हृदये पादावतिहतौ (श० ब्रा० १०।५।२।१३)। अतिहतौ निखातौ।

—हा (ओहाक् त्यागे)। अतिहाय पूर्वामाहुतिं तूष्णीमुत्तरां समिधि जुहोति (भा० श्रौ० ६।१२।१०)। अतिहाय अतिक्रम्य। पूर्वस्या आहुतेः परेण। माऽस्मानतिहाय दाः (नि० १।३।७)। अतिहाय = अतिक्रम्य। परिहृत्य।

—हि (हि गतौ वृद्धौ च)। आयुर्यत्ते अतिहितं पराचैः (अथर्व० ७।५५।३)। पराचैरतिहितं पराङ् अतिगतम्।

—हृ (हृञ् हरणे)। ता (अपः) नातिहृत्य सादयेन्नो अनाप्ताः (श० ब्रा० १।१।१।२१)। अतिहृत्य सीमानमतिक्रम्य।

### अत्यति

—क्रम् (क्रमु पादविक्षेपे)। कथं त्वामत्यतिक्रान्तः (भा० आदि० १२५। १८)। शोकाकुलत्वाच्छब्दस्याभ्यास इति नीलकण्ठः।

—रिच् (रिचिर् विरेचने)। ध्रियमाणः कपोतस्तु मांसेनात्यतिरिच्यते (भा० वन० १३१।२७)। अत्यतिरिच्यते = अतितरामतिरिक्तो भवति, गुरुभारतरो भवतीत्याह।

अत्यभि

—सृ (सृ गतौ)। सन्ध्यां वसिष्ठमासीनं तमत्यभिसृताः पुरा (भा० आदि० ९५।१४)। अत्यभिसृताः=अतिक्रान्तवन्तः।

अत्याङ् (अति+आङ्)

—अर्ज (अर्ज षर्ज अर्जने, अर्जं प्रतियत्ने)। अथैनमुत्क्रान्तमेधमत्यार्जन्त (ऐ० ब्रा० २।८)। अत्यार्जन्त पार्श्वतो न्यदधुः।

—इ (इण् गतौ)। सर्वे देवा आत्यायन्ति (अथर्व० ११।१२।१४)। शत्रूनतिक्रम्यायन्ति।

—कृ (डुकृञ् करणे)। तामुदीचीमत्याकुर्वन्ति (श० ब्रा० ३।२।४।२२)। उत्तरां दिशम्प्रति नयन्तीत्याह। गार्गिकयाऽत्याकुरुते (पा० ५।१।१३४ सूत्रे वृत्तौ)। अत्याकुरुतेऽधिक्षिपति। गोत्रचरणाच्छ्लाघात्याकारतदवेतेषु (पा० ५।१।१३४)। अत्याकारः पराधिक्षेपः।

—क्रम् (क्रमु पादविक्षेपे)। अत्याक्रामति प्रतिप्रस्थाता (श० ब्रा० ४।५।२।११)। अग्रतः प्रसरतीत्याह।

—दृ (दृङ् आदरे)। यस्तां विविक्तचरितैरनुवर्तमानां नात्याद्रियत (भा० पु० ३।१६।२१)। न तां बह्वगणयत्, नामानयत्। नात्यादृतशरीर-संस्करा (दशकु०)। परिकर्मण्यदत्तावधाना। अङ्गसंस्कारेऽनास्था।

—धा (डुधाञ् धारणपोषणयोः)। सुयमे मे अद्य घृताची भूयास्तां स्वावृतौ सूपावृतावित्युपभृति जुहूमत्यादधाति (आप० श्रौ० २।४।१३।४)। अत्यादधाति उपरि स्थापयति। पुरुषं तद्वीर्येणात्यादधाति (श० ब्रा० ७।५।२।१४)। अत्यादधाति उपरि दधाति। अत्यन्तमाधीयते तन्निवारणार्थं मनो दीयते यस्मिंस्तद् अत्याहितम्। अत्याहितं महाभीतिः कर्म जीवानपेक्षि चेत्यमरः। न केवलमत्याहितं सापवादमपि (उत्तर० २)। अत्याहितमापद्। अत्याहितं किमपि राक्षसकर्म कुर्यात् (महावीर० ४।४९)। अत्याहितं साहसम्, असमीक्ष्यकृतं वा। अत्याहितं चिन्तयित्वा व्यस्मयन्त पृथग्जनाः (भा० वि० २५।१)। उक्तोऽर्थः। अराजके धनं नास्ति नास्ति भार्याप्यराजके। इदमत्याहितं चान्यत् कुतः सत्यमराजके (रा० २।६७।११)॥ अत्याहितं महाभीतिः। परिक्षीणोऽन्यास्वस्वः कदर्यो व्यसन्यत्याहितव्यवहारश्चेति लुब्धवर्गः (कौ० अ० ११४।४)। अत्याहितव्यवहारः=रभसेन व्यवहर्ता, साहसिकः। प्रतिव्ययकर्तारमत्याहितकर्माणं च निवेदयेयुः (कौ० अ० २।३६।९)। उक्तोऽर्थः। निर्दग्धं रक्षो निर्दग्धा अरातय इति कपालेऽङ्गारमत्याधाय

(आप० श्रौ० १।७।२२।३)। उपरि निधायेत्यर्थः । जानुनि चात्याधानं जङ्घाया: (आप० ध० २।२०।१४) । इतरस्या जङ्घाया अवस्थापनम् । अनत्याधान उरसिमनसी (पा० १।४।७५) । अत्याधानमुपश्लेष इति मा० धा० वृ० । उपश्लेषणमिति वृत्तिः । अत्याधानमतिक्रम इति वैजयन्ती ।

—ध्मा (शब्दाग्निसंयोगयोः) । अत्याधमति (सुश्रुत० १।३८।१३) । कृच्छ्रेण प्राणिति ।

—पद् (पद गतौ) । अत्यापन्नो गुरुजनः (महावीर० ४) । अतिशयेनापदं प्राप्तः ।

—रुह् (रुह बीजजन्मनि) । नात्यारोहति जातोर्मिर्महोधः स्वनवानपि (रा० ४।१७।२२) । मर्यादां नातिक्रामति, वेलां नातियाति । अत्यारूढो हि नारीणामकालज्ञो मनोभवः (रघु० १२।३३) । अत्यारूढोऽतिवृद्धः । अत्यारूढिर्भवति महतामप्यपभ्रंशनिष्ठा (शा० ४) । अत्यारूढिर्महदौन्नत्यम्, महानुच्छ्रायः ।

—सद् (षद्लृ विशरणगत्यवसादनेषु) । हर्षाद् वातापिरगस्त्यमत्यासादयन् (कौ० अ० १।६।१०) । आक्रमितुमिच्छन् । सोऽत्यासाद्य तु तद्वेश्म तिरस्करणीमन्तरा (रा० २।१५।२०) । आत्यासाद्य अति समीपमित्वा । नात्यासादयितुं तात रामान्तिकमिहार्हसि (रा० ३।३७।१७) । अत्यासादयितुमत्यन्तं प्राप्तुम् ।

—हृ (हृञ् हरणे) । लोभाद् ऐलश्चातुर्वर्ण्यमत्याहारयमाणः (विननाश) (कौ० अ० १।६।७) । अत्याहारयमाणोऽतिवेलं बलीन् हारयन् इत्यर्थः । हृक्रोरन्यतरस्यामिति (१।४।५३) अणौ कर्तुर्णौ विभाषा कर्मत्वम् ।

## अत्युद् (अति+उद्)

—क्रम् (क्रमु पादविक्षेपे) । अत्युत्क्रान्ताश्च धर्मेषु पाषण्डसमयेषु च । कृशप्राणाः कृशधनास्तेभ्यो दत्तं महाफलम् (भा० अनु० २३।५६) । अत्युत्क्रान्ता अत्यन्तं दूरं गताः । पाषण्डसमयेष्विति धर्मेष्वित्यस्य विशेषणम् । चः पादपूरणे ।

—हा (ओहाङ् गतौ) । अथ शीर्ष्णा यूपमत्युज्जिहीते (श० ब्रा० ५।२।१।१४) । अत्युज्जिहीते आस्कन्दति, आरोहति ।

अत्युप (अति+उप)

—पद् (पद गतौ)। नात्युपपन्नसंस्थानः (दशकु०)। नात्यनुगुणाकार इत्यर्थः।

—यज् (यज देवपूजासङ्गतिकरणदानेषु)। अथात्युपयजति। स यन्नात्युपयजेद्यावत्यो हैवाग्रे सृष्टास्तावत्यो हैव स्युर्न प्रजायेरन् (श० ब्रा० ३।८।४।१८)। अत्युपयजति उपयाजान्करोति, भूयो यजति।

अतिनिर् (अति+निर्)

—हृ (हृञ् हरणे)। आमोदः सोऽतिनिर्हारी (अमरः)। अतिनिरावतिशये। सातिशयं हरतीत्येवंशीलः, हारीति वा।

अतिप्र (अति+प्र)

—नश् (णश अदर्शने)। नेदिमाँल्लोकानतिप्रणश्यानि (श० ब्रा० ६।७।२।१६)। एभ्यो लोकेभ्यो हीयेयेति मा भूत्।

—नी (णीञ् प्रापणे)। ततश्चैवातिप्रणयः (गो० गृ० ४।४।४)। अतिप्रणयनं दूरतरं नयनम्।

—पद् (पद गतौ)। अलभ्यः पुनरश्वैस्तु रथात् सोऽतिप्रपादयेत् (भा० वि० ५५।२०)। रथात्प्रपात्य इमं लोकमतिक्रमय्य परं लोकं प्रापयेदित्यर्थः।

—युज् (युजिर् योगे)। अन्या वो अन्यामति मा प्रयुक्त (तै० सं० ४।३।११।४)। माऽतिप्रेरिरत्। सर्वेणैवैनमिन्द्रियेणाति प्रयुङ्क्ते (तै० सं० ७।२।७।४)। अतिप्रयुङ्क्ते दृढं बध्नाति।

—वृत् (वृतु वर्तने)। अतिप्रवृत्तं रक्तम् (सुश्रुते १।४५।१८)। अतिमात्रं स्यन्दमानमस्रम्। मार्जारनकुलादीनां विषं नातिप्रवर्तते (सुश्रुत० २।२६६।१२)। नातिप्रवर्तते न प्रभावुकं भवति।

—श्रि (श्रिञ् सेवायाम्)। अयं तु प्रकृत्युद्धतो रामः कथमित्थमतिप्रश्रयते (बालरा० ४)। अतिप्रश्रितो भवति। निभृतविनीतप्रश्रिताः समाः (अमरः)।

—सञ्ज् (षञ्ज सङ्गे)। तद्विरमातिप्रसङ्गात् (उत्तर० ५)। अतिप्रसङ्गोऽविनयो वैयात्यम्। अतिप्रसङ्गाद् विहितागसो मुहुः (कि० ८।१२)। अतिप्रसङ्गोऽविच्छेदेन सङ्गः।

अतिवि (अति+वि)

—धा (डुधाञ् धारणपोषणयोः)। य एकशतविधानमतिविधत्ते (श०

ब्रा० १०।२।३।१८)। अतिविधत्तेऽतिरिच्यानुतिष्ठतीत्याह। पुत्रदारमतिविधाय प्रव्रजतः पूर्वः साहसदण्डः (कौ० अ० २।१।२९)। अतिविधाय असंविधाय, भोजनाच्छादनाद्यप्रकल्प्येत्यर्थः। अप्रतिविधायेत्येवं मूलं शोध्यम्।

—स्था (ष्ठा गतिनिवृत्तौ)। प्रधावितान्वा वित्रस्तान्विस्रब्धानतिविष्ठितान् (रा० ४।१८।३८)। मृगानिति पूर्वेणान्वयः, विध्यन्तीत्युत्तरेण। अतिविष्ठितान् विरोधेन स्थितान्।

## अतिव्याङ् (अति+वि+आङ्)

—हृ (हृञ् हरणे)। तेषामतिव्याहरताम् शस्त्रवर्षं प्रमुञ्चताम् (भा० आदि० २२७।२६)। कत्थमानानामित्यर्थः।

## अतिसम् (अति+सम्)

—धा (डुधाञ् धारणपोषणयोः)। परलोकविरुद्धानि कुर्वाणं दूरतस्त्यजेत्। आत्मानं योऽतिसन्धत्ते सोन्यस्मै स्यात्कथं हितः (मी० १।३।२।४ तन्त्र० उद्धृतम्)॥ अतिसन्धत्ते वञ्चयते प्रतारयति। त्वया चन्द्रमसा च विश्वसनीयाभ्यामतिसन्धीयते कामिजनसार्थः (शा० ३)। उक्तोऽर्थः। संहृत्यारिविजिगीष्वोरमित्रयोः पराभियोगिनोः पार्ष्णिं गृह्णतोर्यः शक्तिसम्पन्नस्य पार्ष्णिं गृह्णाति सोऽतिसन्धत्ते (कौ० अ० ७।१३।२)। हीनशक्तिपार्ष्णिग्राह्यपेक्षया लाभविशेषं प्राप्नोतीत्युक्तं भवति। लक्ष्यलम्भाधिकारेपि स्थैर्यप्रतिपत्त्यसंमोषैः शूरः कृतास्त्रमतिसन्धत्ते (कौ० अ० ७।१७।२६)। अतिसन्धत्ते ऽतिक्रामति, अतिशेते। तानुपहस्यमानतामात्मनः परिहरन् कोऽतिसन्दधीत सचेताः (ध्वन्या० ३।३३ व्याख्यायाम्)। अतिसन्दधीत=लङ्घयेत्। नाभ्युपेयादित्यर्थः। मूलद्वारं नान्यैर्द्वारैरतिसन्दध्यात् उपद्धर्या। घटफलपत्रप्रमथादिभिश्च तन्मङ्गलैश्चिनुयात् (बृ० सं० ५३।८२)॥ नातिसन्दधीत नावमानयेत्, नातिक्रमयेत्। नास्य गौरवं लघयेत्। किं पुनरिमामतिसन्धाय लभ्यते (शा० ५)। अतिसन्धाय विप्रलभ्य, वञ्चयित्वा। कथमतिसन्धेयं तुमुलम् (महावीर०)। अतिसन्धेयं शमयितव्यम्। तुमुलं रणसङ्कुलम्। तद्विशेषस्य ध्वनेर्यत्प्रकाशनं विप्रतिनिरासाय सहृदयव्युत्पत्तये वा तत्क्रियमाणमनतिसन्धेयमेव (ध्वन्या० ३।३३)। अनतिसन्धेयम् अभ्युपेयम्। ते हि शक्ता लुप्तप्रभुशक्तेरुत्साहशक्तिमतिसन्धातुम् (महावीर० ४)। अतिसन्धातुं वञ्चनेन वशयितुम्। परातिसन्धानमधीयते यै विद्येति ते सन्तु किलाप्तवाचः (शा० ५।२३)। परातिसन्धानं परवञ्चनम्, परप्रलम्भनम्। परप्रतारणम्।

## सु

—इ (इण् गतौ)। स्विते मा धाः (वा० सं० ५।५)। स्वितमिति दुरित-प्रतिद्वन्द्वि। स्वितमिष्टा गतिः, पुण्यम्। ग्रीष्मो हेमन्तः शिशिरो वसन्तः शरद् वर्षाः स्विते नो दधात (अथर्व० ६।५५।२)। उक्तोऽर्थः।

—क्लृप् (कृपू सामर्थ्ये)। सुकल्पितः संयति दृष्टमार्गः (हस्ती) (का० नी० सा० १६।११)। सुकल्पितः सुशोभितः। कल्पना सज्जा समे इत्यमरः।

—गम् (गम्लृ गतौ)। सुगा वो देवाः सदना अकर्म (अथर्व० ७।१०२।४)। सुगा=सुगानि। सुखेन गम्यतेऽत्रेति। सुदुरोरधिकरण इति वार्तिकेन डः।

—जागृ (जागृ निद्राक्षये)। अग्ने त्वं सु जागृहि वयं सु मन्दिषीमहि (वा० सं० ४।१४, तै० सं० ६।१।४।३०)। सुष्ठु निद्रारहितो भवेत्यर्थः।

—डी (डीङ् विहायसा गतौ)। स्वर्गगं तु सुडीनकम् (भा० कर्ण० ४१।२७)। निगदव्याख्यातम्।

—मन्द् (मदि स्तुतिमोदमद-स्वप्नकान्तिगतिषु)। वयं सु मन्दिषीमहि। सुखं स्वप्यामेत्यर्थः।

—यज् (यज देवपूजासङ्गतिकरणदानेषु)। विष्णु र्वै यज्ञस्य दुरिष्टं पाति वरुणः स्विष्टम् (ऐ० ब्रा० ३।३८)। निगदव्याख्यातम्।

### स्वनु (सु+अनु)

—स्था (ष्ठा गतिनिवृत्तौ)। प्रातीव जेतुं समरे सुतस्ते स्वनुष्ठितः सारथिना हितेन (भा० वि० ६८।१६)। स्वनुष्ठितः सुशिक्षितः।

### स्वभि (सु+अभि)

—यु (यु मिश्रणामिश्रणयोः)। सु मधु मधुनाभियोधि (अथर्व० ५।२।३)। सुष्ठु अभितो मिश्रयेत्यर्थः।

### स्वभ्याङ् (सु+अभि+आङ्)

—या (या प्रापणे)। चूडाला राजकार्याणि कृत्वा स्वभ्याययौ (यो० वा० ६ (२) ५६।२५)। सुखमभिमुखमाययौ।

### सुपरि (सु+परि)

—नी (णीञ् प्रापणे)। सर्वान्सुपरिणीतांस्तान् कारयेथा युधिष्ठिर (भा० शां ८६।१६)। सुपरिणीतान् सत्कृतानिति नील०।

—लिख् (लिख अक्षरविन्यासे)। सुपरि-लिखितनखाभ्यामङ्गुलिभ्यां कण्ठमभिस्पृशन् (चरक० सू० १५।१२)। सुपरिलिखिताः सुकृत्ताः (नखाः)।

### सुवि (सु+वि)

—धा (डुधाञ् धारणपोषणयोः)। चारः सुविहितः कार्यं आत्मनश्च परस्य च (          )। सुविहितः सुपरीक्षितः। अन्नपानैः सुविहिताः (रा० १।१४।१४)। सुविहिताः सुहिताः तृप्ता इति कतकः।

### सुसमाङ् (सु+सम्+आङ्)

—धा (डुधाञ् धारणपोषणयोः)। ऋतुकालं प्रतीक्षन्ते नार्थिनः सुसमाहिते (रा० १।४८।१८)। सुसमाहिते प्रसाधनवति। शक्रस्याहल्यां प्रति वचनमिदम्।

## उद्

—अज् (अज गतिक्षेपणयोः)। यो गा उदाजदपधा बलस्य (ऋ० २।१२।३)। उदाजत् निरकालयत्। यो वो ब्रह्मिष्ठः स एता गा उदजताम् (बृ० उ० ३।१।१)। ब्रह्मगवीरुदजसे (बृ० उ० ३।७।१)। उद् गा आजदभिनद् ब्रह्मणा वलम् (ऋ० २।२४।३) उक्तोऽर्थः। उच्छुक्रमत्कमजते सिमस्मात् (ऋ० १।९५।७)। उदजते=उद्धरते।

—अञ्च् (अञ्चु गतिपूजनयोः)। महान्तं कोशमुदचा निषिञ्च (ऋ० ५।८३।८)। उदच=उदञ्च। उद्गृहाण, उन्नमय, उन्नय। महान्तं कोशमुदचाभिषिञ्च (अथर्व० ४।१५।१६)। उदच=उद्धरेति सायणः। पूर्णात्पूर्णमुदच्यते (बृ० उ० ५।१)। उद्रिच्यत उद्गच्छतीति शङ्करः। उदक्तमुदकं कूपात् (कौमुदी)। उद्धृतमित्यर्थः। जगदालोक्य तत्तादृग् उदक्तोपप्लवाप्लुतम् (यो० वा० ६(२)१३४।३६)। उदञ्चतिरिहोर्ध्वगत्यर्थः। उदक्ता उत्थिताः (उपप्लवाः)। उदकमुदञ्चन्निह कूपे कोपि निष्कलो मर्मैकशरणभूतः पतितः (दशकु०)। उदञ्चन् उद्गमयन्नित्यर्थः। एकैकमेव पादमुदच्य तिष्ठति (अश्वः) (श० ब्रा० ५।१।४।५)। उदच्य उदग्रं कृत्वा। उदकोदञ्चनः। उदकमुदच्यतेऽनेनेति। पानीयोद्धरणपात्रम्। तैलोदङ्कः। तैलमुदच्यतेऽस्मिन्निति। कुतुपः, कुतूर्वा।

—अन् (अन प्राणने)। उदानिषुर्महीरिति तस्मादुदकमुच्यते (अथर्व० ३।१३।४) । उदानिषुरुच्छ्वसितवत्यः । इमाः प्रजाः प्राणत्यश्चोदानत्यश्चान्तरिक्षमनुचरन्ति (श० ब्रा० ३।८।३।२) । उदानत्य उच्छ्वासं कुर्वत्यः ।

—अव् (अव रक्षणगत्यादिषु)। अस्माकमंशमुदवा भरे भरे (अथर्व० ७।५२।४)। सङ्ग्रामे सङ्ग्रामेऽस्माकं भागमुदव उद्गमयेत्याह। भगेमां धियमुदवा ददन्नः (ऋ० ७।४१।२)। उदव=अवधेहि। कुर्कुराविव कूजन्तावुदवन्तौ वृकाविव (अथर्व० ७।१००।२)। (वत्सान्) उद्गृह्य गच्छन्तौ, प्रच्छन्नचारिणावुपशयस्थाविति वा।

—अस् (असु क्षेपे)। अथैतान्यजमानोऽञ्जलौ समोप्य । ऊर्ध्वानुदस्यति (श० ब्रा० २।६।२।१६)। उदस्यति उत्क्षिपति। पुच्छमुदस्यति उत्पुच्छयते (पा० ३।१।२० सूत्रवृत्तौ)। इत्थं विहृत्य वनिताभिरुदस्यमानं (वारि) (कि० ८।५५)। उक्तोऽर्थः। तदुदस्तमलातं तु भीमः प्रहरतां वरः। पदा सव्येन चिक्षेप (भा० वन० ११।४५)। उदस्तमुत्क्षिप्तम्। उदस्ताधोरणः (दशकु० ३४)। उदस्तोऽधः क्षिप्तः। अस्थान उच्छब्दः।

—आप् (आप्लृ व्याप्तौ)। महाकर्म भरतस्य न पूर्वे नापरे जनाः। दिवं मर्त्या इव हस्ताभ्यां नोदापुः पञ्च मानवाः (ऐ० ब्रा० ८।२३)। नोदापुः=नोच्चैरासादयामासुः। ऊर्ध्वं प्रसारिताभ्यां हस्ताभ्यां नाधिजग्मुरित्युक्तं भवति। दिवं मर्त्या इव बाहुभ्यां नोदापुः पञ्च मानवाः (श० ब्रा० १३।५।४।१४)। उक्तोर्थः।

—आस् (आस उपवेशने)। विधाय वैरं सामर्षे नरोऽरौ य उदासते (शिशु० २।४२)। उदासते उपेक्षन्तेऽनास्थास्तिष्ठन्ति, ताटस्थ्येन वर्तन्ते। तत्किमित्युदासते भरताः (मालती० १)। उदासतेऽचेष्टाः स्थिताः। उदासीनो निरीक्षस्व न कार्यः संभ्रमस्त्वया (भा० आदि १५४।२०)। उदासीनो वीतचिन्तः। अनन्तरमरिं विद्यादरिसेविनमेव च। अरेरनन्तरं मित्रमुदासीनं तयोः परम् (मनु० ७।१५८)॥ उदासीनो न मित्रं न चामित्रः।

—इ (इण् गतौ)। उदसौ सूर्यो अगादुदयं मामको भगः (ऋ० १०।१५९।१)। उदगात् उदगमत्, आक्रामत। चित्रं देवानामुदगादनीकम् (ऋ० १।११५।१)। आदित्यः पुरस्तादुदेति पश्चादस्तमेति (भाष्ये)। उदेति सविता

तामस्ताम् एवास्तमेति च (सुभाषितम्)। पूर्वस्यां दिश्युदयं याति। तथात उदेति (पशुः) तथा संजीवति (श० ब्रा० ३।८।२।२७)। उदेति उत्तिष्ठति। आगादुदगादयं जीवानां व्रातमप्यगात् (अथर्व० २।६।२)। उदगात् उदस्थात्। उदगात्कठकौथुमम् (अनुवादे चरणानाम् २।४।३ इत्यत्र वृत्तावुदाहरणम्)। उदयः प्रक्रम उद्भवः। समूलघातमघ्नन्तः परान्नोद्यन्ति मानिनः (शिशु० २।३३)। नोद्यन्ति नाभ्युदयन्ते। उदेति पूर्वं कुसुमं ततः फलम् (शा० ७।३०)। उदेति निष्कसति, उद्भवति, उत्पद्यते, जायते। उद्रथानां जयतां यन्तु घोषाः (ऋ० १०।१०३।१०)। उद्यन्तु उच्चैर्यान्तु। उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद (छां० उ० १।६।७)। उदेति निष्क्रामति। निर्मुच्यत इत्यर्थः। सा पृथिवीमुदैद् (गो० ब्रा० पूर्व० २।२१)। (समुद्रान् निर्याय) पृथिव्या उपर्यागच्छदित्यर्थः। समानमेतदुदकमुच्चैत्यव चाहभिः (ऋ० १।१६४।५१)। उदेति उच्छलति उत्क्रामति। अवैति = अधो गच्छति। वत्सेश्वरात्पुनरुदेष्यति चक्रवर्ती (कथा० २६।२८०)। उदेष्यति जनिष्यते। न प्रभातरलं ज्योतिरुदेति वसुधातलात् (शा० १।२१)। उदेति उत्तिष्ठति। तस्मिन्खलु प्रपीड्यमाने यत्तैलमुदियात् (चरक० वि० ७।२६)। उदियात् निरियात् निष्क्रामेत्। आत्मोदयः परग्लानिः (शिशु० २।३०)। परज्यानिरिति पाठान्तरम्। आत्मोदयः स्वस्य समुन्नतिः समृद्धिः। सप्त दोषाः सदा राज्ञा हातव्या व्यसनोदयाः (भा० उ० ३३।९१)। उदयः फलं विपाकः। नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम् (पा० ८।४।६७)। उदात्तोदयम् उदात्त उत्तरो यस्मात्तत्। उदयशब्दः परशब्दसमानार्थः प्रातिशाख्येषु प्रसिद्धः। उत्तमानुत्तमेषूदयेषु (ऋक्० प्रा० ४।३)। आपद्यन्त इति शेषः। अभिगम्योदयं तस्य कार्यस्य प्रत्यवेदयत् (भा० वन० २८२।२२)। उदयः प्रक्रमः, प्रारम्भः। पर्याप्तः परवीरघ्न यशस्यस्ते बलोदयः (रघु० ५।५६)। बलोदयो बलाभिवृद्धिः। आजीवन्स्वेच्छया दण्ड्यो दाप्यस्तं चापि सोदयम् (याज्ञ० २।६७)। उदयो वृद्धिः कुसीदम्। तस्माद्यत्नात्प्रतीक्षन्ते कालस्योदयमागतम् (भा० वि० २७।६)। कालस्योदयम् औपयिकमवसरम्। हस्ते गृहीत्वा सहराममच्युतं नीत्वा स्ववाटं कृतवत्ययोदयम् (भा० पु० १०।११।२०)। उदयं जन्मोत्सवम्। अथवा मर्षयिष्यामि क्रोधमद्य निशामिमाम्। गृह्यतामुदयः स्वैरं कामभोगेषु वानर (रा० ४।३।६६)॥ विभ्रष्टहर्षा पिहितापणोदया (अयोध्या) (रा० २।४८।३७)। उदयो निर्गमद्वारम्। संमानं मेनिरे सर्वाः प्रहर्षोदितचेतसः (रा० १।१६।३०)। उदितं विकस्वरम्। तां रात्रिमुषितं रामं सुखोदितमरिन्दमम् (रा० ६।१२१।१)। सुखोदितं सुखं शयनादुत्थितम्। अयमनघ तवो-

दितः प्रियार्थम् (रा० ६।८३।४४)। उदितः=उत्थितः=उद्युक्तः सज्जः। अविहतगतिर्दैवोद्रेकादुदित्वरविक्रमः (शि० भा० १४।१०६)। उदित्वर उदयशीलः, वर्धिष्णुः। त्रिवृदुदयना (यज्ञाः) (श० ब्रा० १।३।५।६)। त्रिवृदन्ता इत्यर्थः। यज्ञस्य वा निशितिं वोदितिं वा (ऋ० ६।१५।११)। उदिति र्वाक्। राद्धिः समृद्धिरव्यृद्धिर्मतिरुदितयः (अथर्व० १०।२।१०)। उदितिरूर्ध्वगतिः। अवसानं तिरोधानं वेति संस्कृतशार्मण्यकोषः।

—इङ्ग् (इगि गतौ)। ताः (अपः) सव्ये पाणौ कृत्वा दक्षिणेनोदिङ्गयति (श० ब्रा० १।१।३।७)। उदिङ्गयति उच्छालयति। नातिव्यक्तं न चाव्यक्तमेवं वर्णान् उदिङ्गयेत् (तै० प्रा० २।५)। उदिङ्गयेत् उच्चारयेत्।

—ईक्ष् (ईक्ष दर्शने)। प्रच्छन्नं वा प्रकाशं वा सर्वमग्निरुदीक्षते (रा० ६।३।१११)। उदीक्षते सम्पश्यति। यूपस्याग्रमुदीक्षते (भा० श्रौ० ७।८।१३)। उदीक्षते उच्चक्षुः सन्नीक्षते। स्थाने खलूच्छब्दः। त्रीणि तेजांसि नोच्छिष्ट उदीक्षेत कदाचन। सूर्याचन्द्रमसौ चैव नक्षत्राणि च सर्वशः (भा० अनु० १०४।६३)। उक्तोऽर्थः। गगनस्थं विनिः श्वस्य दिवाकरमुदैक्षत (भा० आदि० १३७।८)। सूर्यमुदीक्षते (श० ब्रा० १।९।३।१५)। उन्नम्य वदनं भीरुः शिंशपां तामुदैक्षत (रा० ५।३१।२६)। उन्नम्य वदनमित्युक्त उच्छब्दोऽत्र गतार्थः। न विण्मूत्रमुदीक्षेत (मनु० ४।७७)। न निध्यायेत्। न निरीक्षेत। उदीक्षणं वर्णादिना निरूपणम्। निरूपणं च चिरकालप्रेक्षणेन भवतीति निषिध्यत इति मेधातिथिः। त्रीणि वर्षाण्युदीक्षेत कुमार्यृतुमती सती (मनु० ९।९०)। प्रतीक्षेत। भरतस्त्वामुदीक्षते (रा० ६।१०९।५)। उक्तोऽर्थः। सत्येनातिपरीताङ्गा नोदीक्षन्ते स्म किञ्चन (भा० सभा० ६७।२२)। नोदीक्षन्ते न किमपि प्रतिपद्यन्ते। प्रतिपत्तिमूढास्तिष्ठन्तीत्याह। अथैनं सूर्यमुदीक्षयति (पा० गृ० २।२)। उदीक्षमाणं प्रयुङ्क्ते। अर्थस्त्वभिव्यक्तः। उदीक्षमाणः पृतनां जयामि युधि वासव (भा० शां० ९८।९)। उदीक्षमाणो दृशमुन्नमय्य पश्यन्नित्यर्थः। किं गतेन यदि सा न जीवति प्राणिति प्रियतमा तथापि किम्। इत्युदीक्ष्य नवमेघमालिकां न प्रयाति पथिकः स्वमन्दिरम् (भर्तृ० २।६६)॥ तस्याः शङ्कां भयं दुःखं मुहूर्तमपि नोत्सहे। मनसि प्रतिसंजातं सौमित्रेऽहमुदीक्षितुम् (रा० २।२२)॥ उपेक्षितुम् इति पाठान्तरम्। तज्ज्यायः। उदीक्षितुं द्रष्टुम्। उदीक्षितुं रावण नेह युक्तः स संयुगे राघवगन्धहस्ती (रा० ३।३१।४६)। चक्षुरुन्नमय्य ईक्षितुमित्यर्थः। अभ्यकीर्यन्त वृन्दानि दामग्रन्थिमुदीक्ष्य

तम् (भा० वि० १६।२३)। **उदीक्ष्य दूरतो दृष्ट्वा**। द्विपद्वीपिशरण्यानामरण्यानामुदीक्षणम् (शि० भा० १६।१८)। **उदीक्षणं वीक्षणम्**। युधिष्ठिरमुदीक्षन्तः सेहुर्दुःखमनुत्तमम्। (भा० वन० २५६।७)। **युधिष्ठिरमुखप्रेक्षिणः सन्तः**।

—**ईर्** (**ईर गतौ**)। उदग्ने शुचयस्तव शुक्रा भ्राजन्त ईरते (ऋ० ८। ४४।१७)। **उदीरते उच्चरन्ति**। उदस्य केतवो दिवि शुक्रा भ्राजन्त ईरते (अथर्व० १३।२।१)। **उदीरते उत्पतन्ति**। उदीर्ष्व नार्यभि जीवलोकम् (ऋ० १०।१८।८)। **उत्तिष्ठेत्येवाह**। उदीरतामवर उत् परास उन्मध्यमाः पितरः सोम्यासः (ऋ० १०।१५।१)। **उक्तोऽर्थः**। पृथग्घोषा उलुलयः केतुमन्त उदीरताम् (अथर्व० ३।१६।६)। **उदीरताम् उद्गच्छन्तु**। उदैरत रणितानि (दशकु० १२३)। **उदतिष्ठन्, उदचरन्**। उदीरय कवितमं कवीनाम्। (ऋ० ५।४२।३)। **उदीरय कीर्तय**। कुसुमं कृतदोहदस्त्वया यदशोकोऽयमुदीरयिष्यति (रघु० ८।६२)। **उदीरयिष्यति उद्गमयिष्यति**। उदीरयेतां ब्राह्माणि दिव्यान्यस्त्राण्यनेकशः (भा० द्रोण० १९२।३१) **उदीरयेताम् प्राक्षिपेताम्। आडभावश्छान्दसः। छन्दोवत्कवयः कुर्वन्ति**। उदीरयामास सलीलमक्षान् (रघु० ६।१८)। **प्रावपदित्यर्थः**। उदैरयच्छिरः (सर्पः) (दशकु० २०३)। **उदस्थापयत्, फणामकरोदित्यर्थः**। उदीराणा उतासीनाः (अथर्व० १२।१।२८)। **उदीराणा उत्तिष्ठन्तः**। उदीर्यमाणमस्त्रं तद् विश्वामित्रस्य धीमतः (रा० १।५५।२२)। **उदीर्यमाणं विसृज्यमानम्**। सोदीर्णोऽभिहतो वक्त्रमापद्य मारुतः (पा० शि० ६)। **उदीर्ण उत्थितः**। ब्रह्म क्षत्रेण संसृष्टं क्षत्रं च ब्रह्मणा सह। उदीर्णौ दहतः शत्रून् वनानीवाग्निमारुतो (भा० वन० २६।१०)। **उदीर्णे प्रवृद्धे**। त्रैलोक्यमासीत्संत्रस्तं ब्रह्मास्त्रे समुदीरिते (रा० १।५६।१५)। **समुदीरिते प्रयुक्ते**। उदीरितोऽर्थः पशुनापि गृह्यते (हितोप० २।४६)। **उदीरितः शब्दोक्तः**। तैस्तत्र परिधावद्भिश्चरणोदीरितं रजः (भा० सौ० ८।६६)। **उदीरितमुत्थापितमुद्धतम्**। खुरैरुदीरितो रेणुर्दिवं प्रच्छाद्य तिष्ठति (रा० २।६३।१५)। **उक्तोऽर्थः**। स हि देवैरुदीर्णस्य रावणस्य वधार्थिभिः (रा० २।१।७)। **उदीर्णस्य दृप्तस्य**। अदैन्यमनुदीर्णत्वमनुद्वेगो व्यवस्थितिः (भा० शां० २७४।१८)। **अनुदीर्णत्वं दर्पाहङ्काररहित्यम्**। उद्घातः प्रणवो यासां न्यायैस्त्रिभिरुदीरणम् (कु० २।१२)। **उदीरणमुच्चारणं शंसनम्**। कुनृपोदीरणोद्भूतो गिरः पाप्माऽपनेष्यते (राज० ८।४६)। **उदीरणं कीर्तनम्**।

—**ईष्** (**ईष गतिहिंसादर्शनेषु**)। ऊर्ध्वः प्राण उदीषतु (अथर्व० ११।११। २१)। **उदीषतु निर्गच्छतु उत्क्रामतु**।

—उक्ष् (उक्ष सेचने)। किं तृतीयमेतां दिशमुदौक्षीः (श० ब्रा० १२।५।३।४)। उदौक्षीः = उपर्यसिचः।

—उब्ज् (उब्ज आर्जवे)। उदुब्जेनां महते वीर्याय (अथर्व० ११।१।७)। उद्गतशिरस्कां कुर्विति सायणः।

—ऊह् (ऊह वितर्के)। अथास्य यत्स्वं छन्द आसीदनुष्टुप् तामुदन्तमभ्युदौहदच्छावाकीयामभि (ऐ० ब्रा० ३।१३)। उदौहत् अपसारितवान् इति सायणः। उदनैषीदिति भट्ट भास्करः। स प्राचोऽङ्गारानुदूहति (श० ब्रा० १।२।१।५)। उदूहति निष्कासयति। ते वा एते उल्मुके उदूहन्ति (श० ब्रा० १।८।२।१)। निष्कासयन्ति, उत्कर्षन्ति।

—ऋ (ऋ गतौ)। समुद्रादूर्मिर्मधुमाँ उदारत् (ऋ० ४।५८।१, वा० सं० १७।८६, आप० श्रौ० ५।५।१७।४)। उदारत् उदगच्छत्। अनूनवर्चा उदियर्षि भानुना (ऋ० १०।१४०।२)। उदियर्षि उद्गच्छसि उत्पतसि। समुद्रादूर्मिमुदियर्ति वेनः (ऋ० १०।१२३।२)। उदीरयति, उन्नमयतीत्यर्थः। अयं मे पीत उदियर्ति वाचम् (ऋ० ६।४७।३)। उदियर्ति समीरयति, प्रयोजयति। स भन्दना उदियर्ति प्रजावतीः (ऋ० ६।८६।४१, नि० ५।२)। उदियर्ति उदीरयतीति दुर्गः।

—ऋच् (ऋच स्तुतौ)। तेषां यद् उदृचं गच्छन्ति (श० ब्रा० १३।१।६।३)। उदृचं गच्छन्त्यन्तं गच्छन्तीत्याह। अस्य यज्ञस्योदृचि स्वाहा। (अथर्व० ।४८।१)। उत्तमाऽवसानवर्तिनी ऋक् उदृक्। तद्वाचिनाऽनेन शब्देन यागसमाप्तिर्लक्ष्यत इति सायणः। आऽस्य यज्ञस्योदृचः (वा० सं० ४।१०)। उदृक् अवसानम्।

—एज् (एजृ कम्पने)। उदेजतु प्रजापति वृ॑षा शुष्मेण वाजिना (अथर्व० ४।४।२)। उदेजतु उन्नमतु।

—कम्प् (कपि चलने)। आश्लिष्यमाणः प्रियया शङ्करोपि यदाज्ञया। उत्कम्पते सभुवनं स जयत्यसमसायकः (कथा० १५।२)॥ उत्कम्पतेऽतितरां वेपते।

—कल् (कल गतौ संख्याने च, कल विल क्षेपे)। हस्तोत्कलितस्तदाऽसुरो विक्रीडितो यद्वदहिर्गरुत्मतः (भा० पु० ७।८।२६)। हस्तोत्कलितो हस्तान्निर्गतः। प्रहर्षवेगोत्कलितानन—(भा० पु० ७।८।३५)। उत्कलितं व्यात्तम्।

—कस् (कस गतौ)। उत्कसन्तु हृदयान्यूर्ध्वः प्राण उदीषतु (अथर्व० ११।६।२१)। शरीरादुद्गच्छन्त्वित्याह। दीर्यन्तामिति वा।

—काश् (काशृ दीप्तौ)। स उच्चकाशे धवलोदरोदरः (भा० पु० १।११। २)। उच्चैश्चकाशे अतितरां दिदीपे।

—कुच् (कुच सम्पर्चन-कौटिल्यप्रतिष्टम्भ-विलेखनेषु)। उत्कोचकाश्चौपधिकाः (मनु० ९।२५८)। उत्कोचका ये कार्यिभ्यो धनं गृहीत्वा कार्यमयुक्तं कुर्वन्ति (कुल्लूकः)। उत्कोचिनां मृषोक्तीनां वञ्चकानां च या गतिः (भा० द्रोण० ७३।३२)। उक्तोऽर्थः।

—कूज् (कूज अव्यक्ते शब्दे)। उत्कूजितैः परभृतस्य (ऋतु० ६।३२)। तारैः कोकिल-व्याहारैः। चक्रवाकवदुत्कूजनम् (कथा० १०।१३०)। उक्तोऽर्थः।

—कुर्द् (कुर्द खुर्द गुर्द गुद क्रीडायामेव)। भिक्षापात्रमुद्दिश्य निमेषादुत्कूर्दितोऽप्राप्त एव भूमौ निपपात (पञ्चत०)।

—कृ (डुकृञ् करणे)। संयावः क्षीर-गुडघृतादि-कृत उत्करिकाख्यः पाकविशेषः (याज्ञ० १।१७३ मिताक्षरायाम्)। उत्कृतकर्णचूलिकेन...मुखेन (स्वप्न० २)। उत्कृता उर्ध्वं कृता।

—कृत् (कृती छेदने)। धार्ष्टद्युम्नेः स शिरश्चोच्चकर्त (भा० कर्ण० ८२। ९)। उच्चकर्त उच्चिच्छेद। त्वच उत्कर्तमवपाकानां संव्रश्चमोषधिवनस्पतीनाम् (श० ब्रा० १३।७।१।९)। उत्कर्तमुत्कृत्य। णमुलन्तम्। स्वयं वा शिश्नवृषणावुत्कृत्य (मनु० ११।१०४)। उत्कृत्य अपच्छिद्य। एतस्य (मृगस्य) उत्कृत्यमानस्य (हितोप०)। शकलीक्रियमाणस्य।

—कृत् (कृती वेष्टने)। पुमाँ एनं तनुत उत्कृणत्ति पुमान् वितत्ने अधि नाके अस्मिन् (ऋ० १०।१३०।२)। उत्कृणत्ति उद्वेष्टयति। यथा श्रान्तोऽविमुच्यमान उत्कृत्येतैवं यजमाना उत्कृत्येरन् (ऐ० ब्रा० ६।३३)। अविमुच्यमानोऽविषीयमाणोऽवियुज्यमानः शकटात्। युग्योऽश्वादिरिति शेषः। उत्कृत्येत स्वयमेवोत्क्रान्तवेष्टनः स्यात्, निर्मुक्तबन्धनो भवेत्। उत्कृत्येत उच्छिद्येतेति तु सायणः।

—कृष् (कृष विलेखने)। उत्कर्षति जलात्तस्मात्स्थलं पुरुषसत्तमः (भा० आदि० २१७।९)। उत्कर्षति उद्धृत्य प्रापयति। उत्कर्षति धनुःश्रेष्ठं गाण्डीवमशनिस्वनम् (भा० वि० ५३।५)। उत्कर्षति विकर्षति। खले वाली यूपो भवत्येतया हि तं रसमुत्कृषन्ति (पञ्च० ब्रा० १६।१३।८)। उत्कर्षति ह वै ज्ञानसन्ततिम् (मुण्डक०)। उन्नमयति। द्व्यङ्गुलोत्कर्षं खण्डिकां छिनत्ति (पा०

३।४।५१ सूत्रवृत्तौ)। द्व्यङ्गुले उत्कृष्येत्यर्थः। उद्धृत्येति तात्पर्यार्थः। उत्कृष्ट एव ग्राहस्तु सोऽर्जुनेन यशस्विना (भा० आदि० २१६।१२)। उद्धृत इत्यर्थः। सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः (पा० २।१।६१)। अत्र उत्कृष्टो गौः कर्दमादिति प्रत्युदाहरणं वृत्तौ। उद्धृत इत्यर्थः। उत्कृष्टपुरुष इति तूदाहरणम्। उदात्तो गुण्यः प्रवर इत्यर्थः। जिह्वालौल्योत्कृष्टौत्सुक्यात् (पञ्चत०)। उत्कृष्टमत्यारूढमौत्सुक्यम्। कलावधर्म उत्कृष्यमाणे (भा० पु० ५।६।१०)। अभ्युत्तिष्ठति। प्रासानुत्कृष्य तरसा स्वशरीरादरिन्दमः (भा० भीष्म० ६।३६)। उत्कृष्य उद्धृत्य। उद्वृह्य। निर्गमय्य। एते धर्माः सर्ववर्णेषु लीना उत्कृष्टव्याः क्षत्रियैरेष धर्मः (भा० शां० ६५।१२)। उत्कर्षं प्रापयितव्या उन्नमयितव्याः। प्रचल्य चरणोत्कर्षैर्दारयन्निव मेदिनीम् (रा० ३।५६।२६)। चरणोत्कर्षैर्बलवच्चरणन्यासैः। उत्कर्षे च वचोऽनृतम् (याज्ञ० ३।२२६)। उत्तरवर्णप्रख्यापननिमित्तम्। उत्कर्षश्चेति क्वाचित्कं पाठान्तरम्। तत्रोत्कर्ष आत्मोन्नायकमनृतोद्यमिति स्मृतिकारस्याशयः। यत्नाभावे तूत्कर्षो भवति नोद्धारः (आश्व० गृ० १।४।७ सूत्रेऽनाविलायां हरदत्तः)। स्फाटिकं स्थलमासाद्य जलमित्यभिशङ्कया। स्ववस्त्रोत्कर्षणं राजा कृतवान् बुद्धिमोहितः (भा० सभा० ४७।३-४)॥ उत्कर्षणमुत्करणमूर्ध्वंकरणम्।

—कृ (कृ विक्षेपे)। वेदेर्वा उत्करमुत्किरन्ति (ऐ० ब्रा० ६।३)। कूटमुत्क्षिपन्तीत्यर्थः। दैवात्कथमप्यक्षरमुत्किरति घुणोपि काष्ठेषु (रविगुप्तः)। अक्षरमुत्किरति उत्खननेनाक्षरं लिखति। उल्लिखतीति यावत्। परिखामुत्किरन्नाम चकार च महाबिलम् (भा० आदि० १४७।१६)। प्राकारपरिधिभूतो गर्तः परिखा। परिखापरिष्कारव्याजेन बिलान्मृदमुत्किरन् बहिः क्षिपन्नित्यर्थः। वायुरुत्किरंश्च रजो महत् (रा० ६।६०।२६)। उत्किरन् उत्क्षिपन् ऊर्ध्वं क्षिपन्। रजोभिस्तुरगोत्कीर्णैः (रघु० १।४२)। उत्कीर्णैः=उत्क्षिप्तैरुद्धतैः। उत्कीर्णा इव वासयष्टिषु निशानिद्रालसा बर्हिणः (विक्रम० ३।२)। उत्कीर्णा उल्लिखिताः। मत्तभरदनोत्कीर्णव्यक्तविक्रमलक्षणम्। (जयस्तम्भम्) (रघु० ४।५६)। घुणोत्कीर्णमिवाक्षरम् (पञ्चत० ३।१३६)। पल्वलोत्कीर्णमुक्तेन पूर्यन्ते वनराजयः (हरि० २।१०।१६)। उत्कीर्णमुत्सिक्तं (तोयम्)। उक्तोऽर्थः। पुरुषायाममात्रां च भूमिमुत्कीर्य खादिरैः (सुश्रुत० २।८२।३)। उत्कीर्य उत्खाय। आखूत्करः (मृच्छ०)। आखुनोत्क्षिप्तः कूटः। वस्त्रमाल्योत्करयुतः······महस्तस्य महागिरेः (भा० अश्व० ५६।१२)। उत्करो राशिः। आखुराजं गृहोत्करेषु यजेत (गो० गृ० ४।४।३०)। उत्करेषु

प्रकरेषु । उत्कारश्च निकारश्च द्वौ धान्योत्क्षेपणार्थकावित्यमरः । (पा० कॄ धान्ये ३।३।३० सूत्रेण घञि रूपम्) । संयावो गुडघृतपयोभिः कृत उत्करिकेति संज्ञायते ।

—कृत् (कृत संशब्दने) । महिमानं यदुत्कीर्त्य तव संह्रियते वचः । श्रमेण तद् अशक्त्या वा न गुणानामियत्तया (रघु० १०।३३) । उत्कीर्त्य संस्तुत्य ।

—क्लृप् (कृपू सामर्थ्ये) । या वशा उदकल्पयन्देवा यज्ञादुदेत्य (अथर्व० १२।४।४१) । उदकल्पयन् निरमिमत ।

—क्रम् (क्रमु पादविक्षेपे) । ऊर्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आयति (मनु० २।१२०) । उत्क्रामन्ति ऊर्ध्वां गतिं कुर्वन्ति, उदीरते । उत्क्रामातः पुरुष मावपत्थाः (अथर्व० ८।१।४) । अतो मृत्युपाशनिचयादुत्क्राम निष्क्राम निरिहि । शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः (गीता० १५।८) । उत्क्रामति जहाति । न च स्वं कुरुते कर्म तदोत्क्रामति मूर्त्तितः (मनु० १।५५) । उत्क्रामति पूर्वदेहादुत्क्रम्यान्यत्र गच्छति । उदायुषा (अथर्व० ३।३१।१०) इत्युपोत्तिष्ठति । उद्वयम् (अथर्व० ७।५३।७) इत्युत्क्रामति (कौ० सू० २४) । सोदक्रामत् स गार्हपत्ये न्यक्रामत् (सा विराट्) (अथर्व० ८।१०।२)। उदक्रामत् अपाक्रामत् । उन्क्रामन्तं स्थितं वापि (आत्मानम्) (गीता० १५।१०)। शरीरादुज्जिहानम् । ऋषिषूत्क्रामत्सु ते देवा अब्रुवन् को न ऋषिर्भविष्यति (नि० १३।१२) । उत्क्रामत्सु इतः प्रयत्सु, लोकान्तरं यात्सु । स यदोत्क्रमिष्यन् भवति नैतं घोषं शृणोति (श० ब्रा० १४।८।१०।१) । उत्क्रमिष्यन् प्रैष्यन् । आसन्नमरणः । सप्त मर्यादा इत्युत्तरतोऽग्नेः सप्त लेखा लिखति प्राच्यः । तासु पदान्युत्क्रामयति—इषे त्वा······(कौ० सू० ७६।२१-२४) । उत्क्रामयति उत्थाप्य न्यासयति । उत्क्रान्तशैशवौ (रघु० १५।३३) । उत्क्रान्तमतिक्रान्तम्, अतीतम् । आर्षं प्रमाणमुत्क्रम्य धर्मं न प्रतिपालयन् (भा० वन० ३१।२१) । पूर्वानुपायानुत्क्रम्य चतुर्थ इह दृश्यते (रा० ५।३७।२६) । उत्क्रम्य अतिक्रम्य अतीत्य । देवानामुत्क्रमणमसि । निःश्रेणिरित्याह । उत्क्रमो मृतमिति वैजयन्ती ।

—क्रुश् (क्रुश आह्वाने रोदने च) । उदक्रोशन् विप्रमुख्या विधुन्वन्तोऽजिनानि च (भा० आदि० १८८।२) । उदक्रोशन् उच्चैराक्रन्दन् । उच्चुक्रुशुश्च कौरव्या गान्धर्वान्प्रेक्ष्य पीडितान् (भा० वन० २४१।२२) । आगम्य खाण्डवप्रस्थमुदक्रोशत् स पाण्डवान् । ह्रियते गोधनं क्षुद्रैः (भा० आदि०

२१३।६-७)। उदक्रोशद् उच्चैराह्वयत्। सूतानुच्चुक्रुशुः केचिद्रथान् योज-यतेति च (भा० आदि० २२०।१८)। उच्चैः स्माहुः। जहार च स विप्राणां रत्नान्युत्क्रोशतामपि। उच्चैराक्रन्दतामित्यर्थः। ततश्च सर्वैरुत्क्रुष्टं······प्रसादं कुरु भूपेति (मार्क० पु० १५।४७)। उक्तोऽर्थः। अथोत्क्रुष्टं तदा हृष्टैः सर्वैर्देवैरुदायुधैः (भा० वन० २३१।७७)। उत्क्रुष्टमुद्घुषितम्। क्ष्वेडाऽक्रियतेत्यर्थः। मुनिशिष्यैरथोत्क्रुष्टे (भा० आश्व०)। आक्रन्दिते सति। उत्क्रोशकुररौ समावित्यमरः। उच्चैः क्रोशतीत्युत्क्रोशः।

—क्लिद् (क्लिदू आर्द्रीभावे)। महानदी चर्मराशेरुत्क्लेदात्ससृजे यतः (भा० शां० २९।१२३)। उत्क्लेदात् सारद्रवात्।

—क्वथ् (क्वथे निष्पाके)। उत्क्वथितैः कल्कैः (सुश्रुत० २।४१८।१०)। उच्चैः पाचितैरित्यर्थः।

—क्षिप् (क्षिप प्रेरणे)। बलिमाकाश उत्क्षिपेत् (मनु० ३।९०)। ऊर्ध्वं क्षिपेत्, उदस्येत्। संसारदुःखं बहिरुत्क्षिपन्ति (भा० पु० ३।५।३८)। उत्क्षिपन्ति निःसारयन्ति। संसारदुःखादात्मानं मोक्षयन्तीत्याह। घटे तस्याः स्कन्धोत्क्षिप्ते (विद्ध० )। उत्क्षिप्त उद्गृह्यावस्थापिते। नागफणोत्क्षिप्त-सिंहासननिषेदुषी (रघु० १५।८३)। उत्क्षिप्तमुत्तम्भितम् (आसनम्)। गन्धोऽयं पवनोत्क्षिप्तः (रा० ६।१६।७)। उत्क्षिप्त ऊर्ध्वं गमितः। शिर उत्क्षिप्य नागस्य पुनः पुनरवाक्षिपत् (भा० आदि० १८।१५)। उत्क्षिप्य उदस्य। रौद्रं रूपमथोत्क्षिप्य चक्रे रूपं शिवं शिवः (भा० शां० १६६।६४)। उत्क्षिप्य परित्यज्य। उत्क्षेपकग्रन्थिभेदौ करसन्दंशहीनकौ (कार्यौ) (याज्ञ० २।२७४)। वस्त्राद्युत्क्षिपत्यपहरतीत्युत्क्षेपकः। तालवृन्तमुत्क्षेपक इति (हर्ष० ४) शङ्करमिश्रसंकेतः। अतिमात्रलोहिततलौ बाहू घटोत्क्षेपणाद् (शा० १।२७)। उत्क्षेपणमुच्छालनम्। बाहूत्क्षेपं क्रन्दितुं च प्रवृत्ता (शा० ५।३०)। बाहू उत्क्षिप्य उदस्य ऊर्ध्वं प्रास्य।

—खन् (खनु अवदारणे)। उच्चखान च शिरश्छेत्तुमट्टहासम् (हर्ष० ३)। कोशान्निष्कृष्टवान् इत्यर्थः। उत्खातखड्गः (वेणी० ३)। निष्कृष्टासिरित्यर्थः। उत्खातं परित्यागशल्यम् (उत्तर० ३)। उद्धृतम्। उत्खातप्रतिरोपिताः (रघु० ८।२७)। उत्खाता उन्मूलिताः। उत्खातं निधिशङ्कया क्षितितलम् (भर्तृ० ३।५)। उत्खातमुत्पाटितम्। उत्खातलवणो मधुरेश्वरः प्राप्तः (उत्तर० ७)। उत्खातोऽधिकारात्प्रच्यावितोऽवरोपितः। उत्खातकेलिः शृङ्गाद्यैर्वप्रक्रीडा निगद्यते। उत्खातमुत्खननम्। उत्खाय दर्पचलितेन सहैव रज्ज्वा (शिशु० ५।५९)। उत्खाय उत्पाट्य।

—खिद् (खिदेति छान्दसः)। वपामुत्खिदति (भा० श्रौ० ७।१४।११)। निष्कुष्णातीत्यर्थः। एकं पादं नोत्खिदति सलिलाद्धंस उच्चरन्। स चेत्तमुद्धरेदङ्ग न मृत्यु र्नामृतं भवेत् (अथर्व० ११।४।२१)॥ उत्खिदति उद्धरति।

—गम् (गम्लृ गतौ)। महानसादुद्गच्छति धूमः। निष्क्रामतीत्यर्थः। उद्गतानीव सत्त्वानि बभूवुरमनस्विनाम् (रा० २।४८।२)। उद्गतानि निष्क्रान्तानि उत्क्रान्तानि। सत्त्वानि प्राणाः। उन्नाम इत्युद्गतनामधेयः (रघु० १८।१६)। उद्गतं प्रथितं प्रख्यातम्। उद्वान्तमुद्गत इत्यमरः। शक्रस्योद्गम्य चरणं प्रस्थितो जनमेजयः। द्विजस्त्रीणां वधं कृत्वा (भा० अनु० ६।३६)। उद्गम्य ऊर्ध्वं क्रमित्वा, उच्चैर्गत्वा। ऊर्ध्वगमनेनारोहणमाश्रयणं लक्ष्यते। चरणं स्त्रीदूषणलक्षणं कर्म। पारिजातस्योद्गमः (मालती० २)। उद्गम उद्भवः। भवन्ति नम्रास्तरवः फलोद्गमैः (शा० ५।१२)। फलप्रसवेन। रोमोद्गमः प्रादुरभूदुमायाः (कु० ७।७७)। रोमोद्गमो रोमाञ्चः। हरिततृणोद्गमशङ्कया मृगीभिः (कि० ५।३८)। तृणाङ्कुरभ्रान्त्या। तिरयति दृशोरुद्गमं बाष्पपूरः (मालती० १।३५)। उद्गमो विवृतिः। तत्स्याद् उद्गमनीयं यद् धौतयोर्वस्त्रयोर्युगम् (अमरः)। गृहीतप्रत्युद्गमनीयवस्त्रा (कु० ७।११)। युगग्रहणं प्रायिकाभिप्रायमिति स्वाम्यादयः। उद्गम्यतेऽभिलष्यत इत्युद्गमनीयमिति स्वामी। धौतोद्गमनीयवासिनी (दशकु०)। अत्र धौतमित्यतिरिक्तं सुत्यजम्।

—गल् (गल स्रवणे)। न्यरुन्धन्नुद्गलद्बाष्पमौत्कण्ठ्यात् (भा० पु० १।१०।१४)। उद्गलत् निःस्रवत्।

—गाह् (गाहू विलोडने)। ताः प्राच्य उज्जिगाहिरे (का० श्रौ० १३।३।२६)। उन्मज्जन्तीत्यर्थः।

—गुर् (गुरी उद्यमने)। उदगुरिषत द्रुमान् (भट्टि० १५।३४)। उदयच्छन्त, उदक्षिपन्निति वा। नम उदगुरमाणाय चाभिघ्नते च (वा० सं० १६।४६)। तर्जनपूर्वकं वाचमुदीरयमाणाय। चित्रेष्वप्युद्गूर्णा निपतिताश्च प्रहारा दृश्यन्ते (पा० ३।१।२६ सूत्रभाष्ये)। उद्गूर्णा उत्थिता अभ्युत्थिताः। क्रोधोद्गीर्णगदस्य (वेणी० ६।१२)। उद्गूर्णा उद्यता। उद्गूर्णे प्रथमो दण्डः संस्पर्शे तु तदर्धिकः (याज्ञ० २।२१५)। उद्गूर्णे प्रहारार्थमुद्यते खड्गादौ।

—गुह् (गुहू संवरणे)। ऊर्ध्वमेवोद्गूहति (रज्जुम्) (श० ब्रा० १।३।१।

१७)। उद्गूहति ऊर्ध्वमावर्तयति। ऊर्ध्वमिति वोदिति वा शक्यमेकतरं परिहर्तुम्। नीविमुद्गूहते (श० ब्रा ३।२।१।१५)। विस्रंसयतीत्यर्थः।

—गूर् (गूरी उद्यमने)। उज्जुगूरे ततः शैलं हन्तुमिन्द्रजितं कपिः (भट्टि० १४।५१)। उज्जुगूरे उच्चिक्षेप।

—गॄ (गॄ निगरणे)। यद् उद् गिरति भ्रमरः (मुद्रा० २।११)। उद्गिरति गुञ्जति वमतीति च। भोः फेनं पिबामि यमिमे वत्सा मातॄणां स्तनान् पिबन्त उद्गिरन्ति (भा० आदि० ३।४८)। उद्गिरन्ति वमन्ति। घटा हि राज्ञामभिषेककाले सहाम्भसेवापदमुद्गिरन्ति (पञ्चत० ३।२६७)। उद्गिरन्ति अवसिञ्चन्ति, गालयन्ति। आहरन्तीति तात्पर्यार्थः। उद्गिरतो यद् गरलं फणिनः पुष्णासि परिमलोद्गारैः (भामिनी० १।११)। आमोदवमनैरित्याह। उद्गिरन्निव स्नेहम् (शिशु० १४।१)। उद्वमन्। प्रकटयन्। महीपतेः शासनमुज्जगार (रघु० १४।५३)। उच्चारयामास। ओङ्कारमुद्गिरन् वक्त्राद् सावित्रीं च तदन्वयाम्। शेषेभ्यश्चैव वक्त्रेभ्यश्चतुर्वेदान् गिरन् बहून् (भा० शां० १२८७२)॥ उद्गिरन् उच्चारयन्। निक्षेपणाद्रागमिवोद्गिरन्तौ (कु० १।३३)। निरस्यन्तौ निष्ठीव्यन्तौ। उद्गीर्णस्य वावगीर्णस्य वा मन्थो रोमन्थः (पा० ३।१।१५ सूत्रभाष्ये)। उद्गीर्णम् उद्वान्तम्, उद्गलितम्। कोकिलकाकलीकलकलैरुद्गीर्णकर्णज्वरः (गीत० १।७७)। उद्गीर्णः कारितो जनितः। अत्रार्थेऽस्य शब्दस्य प्रयोगो नातीव सङ्गच्छते। नहि कोकिलकलरवैः कठोररवैरप्युत्प्रेक्ष्यमाणैः कर्णज्वरो निष्ठीव्यते नाम। यत्र वमनमिव दुर्निरोधं निःसरणमभिप्रेयते निसर्गजं तत्रैवोद्गिरतेर्व्यवहारो व्यवहारविदां विदितः। सौजन्योद्गारः (महावीर० ४)। सौजन्याभिव्यक्तिः। धूमोद्गारानुकृतिनिपुणा जर्जरा निष्पतन्ति (मेघ० ७१)। उद्गारो निर्गतिः। पुरावृत्तोद्गारैरपि च कथिता कार्यपदवी (मालती० २।१३)। इतिहासकीर्तनैरित्यर्थः। पुरावृत्तकथोद्गारैः (हितोप० ३।१०५)। मदोद्गारसुगन्धिषु कटेषु करिणाम् (रघु० ४।५७)। मदोद्गारो मदसलिलस्रुतिः। अभूच्च रुधिरोद्गारैररुणं धरणीतलम् (शि० भा०)। रुधिरोद्गारो रक्तस्रवः। दृष्ट्वोद्गारान् सान्नरसान् तृप्त्या परया युताः (भा० वन० २६३।२६)। उद्गारः कण्ठगर्जनम्। तेनोद्गारो भवेच्छुद्धो भक्तं प्रति रुचिस्तथा (सुश्रुत० २।१७८।२१)। शुद्धममम्लत्वाविविधुरं गलगर्जनम् इत्यर्थः। अविभाव्य निमित्तार्थं श्रुत्वोद्गारमिमं मम (अवदा० कुल्माषपिण्डीजातके श्लो० ८)। उक्तोऽर्थः। तस्य लाङ्गूल-निनदं पर्वतः स गुहामुखैः। उद्गारमिव गौ र्नदन्नुत्ससर्ज समन्ततः (भा० वन० )।

उक्तचर एवार्थः। पश्चिमेन तु तं दृष्ट्वा सागरोन्गारसन्निभम् (रा० ७।३२।६)। सागरोद्गारो वेलावृद्धिः।

—गै (कै गै शब्दे)। उदगासीन्म इत्युद्गात्रे (ऐ० ब्रा० ५।३४)। उद्गानं साम्न उच्चारणम्। ओमिति ह्युद्गायति (छां० उ० १।१।१)। उत प्रास्तोदुच्च विद्वाँ अगायत् (ऋ० १०।६७।३)। इह प्रस्तोतुरुद्गातुश्च प्रवृत्ती उक्ते। नवभिरुवर्युरुद्गायति (तै० सं० ७।५।८।२)। यशः स्वमुच्चैरुद्गीयमानं वनदेवताभिः (रघु० २।१२)। उच्चैरुद्गीयमानमुच्चैः सस्वरं कीर्त्यमानम्। उच्चैरिति वोदिति वा शक्यमेकतरं त्यक्तुम्। हंसकारण्डवोद् गीता (नद्यः) (भा० वन०)। गानशब्दनिर्भरा इत्यर्थः। उद्गीतमेतत् परमं तु ब्रह्म (श्वेता० उ० १।७)। उद्गीतं कीर्तितमुपवर्णितम्। तदेतत्ते मयोद्गीतं यथातथम् (भा० भीष्म० ६५।६६)। परमं गुह्यमेतन्मया ते कथितमविप्लुतार्थमिति भावः। त्वदधीना हि मे प्राणाः किन्नरोद्गीतभाषिणि (भा० आदि० १७२।१०)। उद्गीतं गीतम्। गेयमुद्गातुकामा (मेघ० ८४)। गाता चतुर्णां वेदानामुद्गाता प्रथमर्त्विजाम् (हरि० १।५४।१०)। उद्गाता सामग ऋत्विग्विशेषः।

—ग्रन्थ् (ग्रन्थ सन्दर्भे)। लताप्रतानोद्ग्रथितैः स केशैः (रघु० २।८)। उद्ग्रथितैरुन्नद्धैः। दर्भस्तम्बान् उद्ग्रथ्य (ऐ० ब्रा० ५।२३)। उक्तोऽर्थः। ज्यां त्रिरुद्ग्रथ्य बध्नाति (कौ० सू० ३५)। उद्ग्रथ्य आवर्त्य। कर्माशयं ग्रथितमुद्ग्रथयन्ति सन्तः (भा० पु० ४।२२।३६)। उद्ग्रथयन्ति ग्रन्थिभेदनं कुर्वन्ति। ग्रथ इति कविकल्पितो धातुः।

—ग्रह् (ग्रह उपादाने)। उदग्रभं परिपानाद् यातुधानं किमीदिनम् (अथर्व० ४।२०।८)। निरङ्कुशम् इत्यर्थः। ब्रह्मणैवात्मानमुद्गृह्णाति ब्रह्मणा भ्रातृव्यं निगृह्णाति (तै० सं० ५।४।६।६)। उद्गृह्णाति उन्नयति उत्कर्षति। निगृह्णाति बाधते न्यञ्चयति, अवनमयति, निनयति। तृणानि वोद्गृह्णाति प्रतिसंस्कृतम् (का० श्रौ० ५।५।७)। उच्चिनोतीत्यर्थः। भूतेभ्यस्त्वेति स्रुचमुद् गृह्णाति (तै० सं० ६।२।८।३)। उद्गृह्णाति उद्यच्छते। अथ पुरुषशीर्षमुद्गृह्णाति (श० ब्रा० ७।५।२।१३)। शक्तिं चोग्रामुदग्रहीत् (भट्टि० १५।५२)। उक्तोऽर्थः। असौ वा आदित्य उद्ग्राभः। एष निग्राभः। उद्यन्वा एतद् यजमानमुद्गृह्णाति, निम्रोचन्नस्य भ्रातृव्यं निगृह्णाति (मै० सं० ३।३।८)। उद्गृह्णाति उन्नमयति। (निगृह्णाति अवनमयति)। वाक्यार्थस्य परार्थत्वे हिशब्दोऽयं प्रयुज्यते। उद्गृह्णाति च वाक्यार्थमिन्दवो वामुशन्ति हि (बे० मा० निपातानु०

१)। उद्गृह्णाति समर्थयते। आस्तीर्णयोरन्तान् उद्गृह्णाति (का० श्रौ० १६।३।५)। कृष्णाजिन पुष्करपर्णयोरन्तान् ऊर्ध्वमादत्त इत्युक्तं भवति। उदेनं भगो अग्रभीत् (अथर्व० ८।१।२)। उदग्रभीत् उदग्रहीत् मृत्युमुखान्निरमुचत्, अरक्षीत्, पर्यत्रास्त। अवर्षीर्वर्षमुदु षू गृभाय (ऋ० ५।८३।१०)। वर्षमुद्गृभाय = वर्षमुद्गृहाण। विरमयेत्यर्थः। यद् वृष्ट्वोद्गृह्णाति तद्धेमन्तस्य (श० ब्रा० २।२।३।८, वा० सं० २२।२६)। उद्गृह्णाति विरमति। उद्गृह्णाति तन्निधनम् (छां० उ० २।१५।१)। उक्तोऽर्थः। रेतस्यायास्त्रिरुद् गृह्णाति (लाटचा श्रौ० ७।१२।३)। विरमति मध्ये विरामं करोतीत्यर्थः। यो दीक्षत एतैरेव तद्यजुर्भिरुदगृभ्णीते (श० ब्रा० ३।१।४।१)। उद्गृभ्णीत उत्तिष्ठति। अकर्मकोत्रोद् ग्रहिः। उद्गृभ्णीते वा एषो स्माल्लोकाद् देवलोकमभि (श० ब्रा० ३।१।४।१)। उक्तोऽर्थः। अथ नीविमुद्गृहते (श० ब्रा० ३।२।१।१५)। उद्गृहते = उद्गृह्णीते बध्नाति। जितमुद्ग्राहयेज्जेत्रे (याज्ञ० २।२००)। सभिको जितं द्रव्यं पराजितादुद्धरेत् इत्यर्थः। विशेषविदुषः शास्त्रं यस्तवोद्ग्राह्यते पुरः (शिशु० ३।७५)। उद्ग्राह्यत उपन्यस्यते। उद्ग्राहितमुपन्यस्तमिति वैजयन्ती। मोज्जिग्रहः सुनीतानि (भट्टि० १५।२०)। मा उज्जिग्रहः = मा स्मोद्ग्राहयः = मोपन्यस्थः। सुनीतानि सुनीतिवचनानि। उद्गृह्णते स्वाहा (वा० सं० २।३६)। पर्णोटजाग्रविश्रान्तशुकोद्ग्राहितशास्त्रदृक् (यो० वा० (६ (२) १८१।१४)। उद्ग्राहितमुच्चारितम्, उदाहृतम्। विचारितमलं शास्त्रं चित्रमुद्ग्राहितं मिथः (यो० वा० ४।५७।२८)। उद्ग्राहितं सम्यग्गृहीतं साध्ववगतम्। उद्गृहीतालकान्ताः (मेघ० ८)। ऊर्ध्वं धृता अलकान्ताः चूर्णकुन्तलान्ता याभिस्ताः। उद्ग्राभं च निग्राभं च ब्रह्म देवा अवीवृधन् (वा० सं० १७।६४)। उद्ग्राभमुत्कर्षम्। निग्राभमपकर्षम्। वाजस्य प्रसव उद्ग्राभेणोदग्रभीत् (वा० सं० १७।६३)। उद्ग्राभ उद्ग्रहणम्। ऊर्ध्वं हि गृहीत्वा दीयत इत्युद्ग्रहणं दानम्। ततो घटोत्कचः खड्गमुद्गृह्याद्भुतदर्शनम् (भा० द्रोण० १७४।३६)। कोशान्निष्कृष्येत्यर्थः। उद्धृत्येति पाठान्तरम्।

—घट् (घट चेष्टायाम्)। दहाम्यहं युष्मान्सदस्युद्घाटयामि वा (कथा० ४।७८)। उद्घाटयामि रहस्यं वो विवृणोमि। रहस्यं भिनद्मि। गुह्यं सूचयामि। निरयनगरद्वारमुद्घाटयन्ती (भर्तृ० १।६२)। उद्घाटयन्ती विवृण्वती, अपिधानमपनयन्ती। द्वारे पुरस्योद्घटितापिधाने (कु० ७।५३)। परस्परस्य मर्माण्युद्घाटितवन्तौ (पञ्चत०)। उक्तोऽर्थः। कार्यमुद्घाटितं क्वापि मध्ये विघटते यतः (हितोप० ४।२)। उद्घाटितमारब्धम्। सूत्रादि-

भिर्वा तरुणास्थिमर्मण्युद्घाटिते यः क्षवथुर्निरेति (सुश्रुत० २।३७०)। उद्घाटिते विवृते।

—घट्ट् (घट्ट चलने)। तत्समापन्नौ पाशावुद्घट्टयामास (अवदा० जा० २२)। उद्घट्टयामास निर्दुधाव। तत्रावश्यं वलयकुलिशोद्घट्टनोद्गीर्ण-तोयम् (मेघ० ६३)। उद्घट्टनं सङ्घर्षः।

—घृष् (घृषु सङ्घर्षे)। (आसनम्) चूडामणिभिरुद्घृष्टपादपीठं महीक्षिताम् (रघु० १७।२८)। उद्घृष्टं मृदितम्। दण्डोद्घृष्ट घण्टा—(राज० २।६६)। उद्घृष्टा ताडिता। उच्चारणे दोषविशेष उद्घृष्टमुच्यते। यस्योद्-घर्षणलोष्टकैरपि सदा पृष्ठे न जातः किणः (मृच्छ० २।११)। उद्घर्षणमुच्चै-र्घर्षणम्, अधिकं घर्षणम्।

—चर् (चर गतिभक्षणयोः)। उच्चचार निनदोऽम्भसि तस्याः (रघु० ६।७३)। उच्चचार उत्तस्थौ। देहत्यागस्य गगनादुच्चचारेति भारती (राज० १।३१०)। उच्चचार उदीराञ्चक्रे, उदैर्त, उदतिष्ठत्, उदभवत्। एषा सृतिः सती संचरणी यैषा हृदयादूर्ध्वा नाड्युच्चरति (श० ब्रा० १४।६।११।३)। ऊर्ध्वं प्रतिष्ठत इत्याह। यथोर्णनाभिस्तन्तुनोच्चरेत् (श० ब्रा० १४।५।१।२३)। उच्चरेत् संचरेत्, विहरेत्। बाष्पमुच्चरति (पा० १।३।५३ सूत्रे वृत्तौ)। उद्गच्छति, ऊर्ध्वं गच्छति। तिरस्कृत्योच्चरेत्काष्ठलोष्टपत्रतृणादिना (मनु० ४।४६)। मूत्रपुरीषोत्सर्गं कुर्यादित्यर्थः। बलैश्चलच्चरणविधूतमुच्चरद्घना-वलीरुदचरत क्षमारजः (शिशु० १७।५२)। उदचरत उदलङ्घत अत्यक्रामत्। गुरुवचनमुच्चरते (पा० १।३।५३ सूत्रवृत्तौ)। उच्चरते लङ्घते। अतिवर्तते। ये समुदाचारमुच्चरन्ते तेऽवगीयन्ते (अस्मत्कृतौ वा० मुक्ता०)। पत्न्यः पतीनुच्चरन्त पत्नीश्च पतयस्तथा (भा० मौ० २।११)। उच्चरन्त=उदचरन्त =अतिचरितवत्यः, व्यभिचरितवत्यः। अपि च प्रातिपदिकाद् उच्चरन्ती द्वितीयादिविभक्तिः प्रातिपदिकार्थविशेषिका भवतीत्याह (मी० शा० भा० १।१।७)। उच्चरन्ती उत्पद्यमानेत्यर्थः। एकं पदं नोत्खिदति सलिलाद्धंस उच्चरन् (अथर्व० ११।४।२१)। उच्चरन् निष्क्रामन्, उद्यन्, उदयमानः। ज्योक् पश्येम सूर्यमुच्चरन्तम् (अथर्व० ६।६२।३)। मा ते दृशन्सूर्यमुच्चरन्तम् (अथर्व० ८।४।२४)। दर्शन्निति लोके। दाने तपसि सत्ये च यस्य नोच्चरितं यशः। विद्यायामर्थलाभे वा मातुरुच्चार एव सः (भा० विदुलावचनम्)॥ उच्चरित-मुत्थितमभ्युदितम्। उच्चारो विष्ठा। मूत्रोच्चारौ न कारयेत् (सुश्रुत० ४।२।१८)। स्कन्धोच्चारणनम्यमानवदनप्रच्योतितोये घटे (प्रतिमा० १।५)। उच्चारणमुत्क्षेपणम्।

—चल् (चल कम्पने)। नोच्चचालासनादिन्द्रः (भा० पु० ६।७।८)। नोत्तस्थावित्यर्थः। अनुच्चलन्नपि रथाद् भ्रूभङ्गेन चकार सः। विलोलाँल्लोमकम्पेन दिङ्नाग इव भूधरान् (राज० ८।१५८)॥ अनुच्चलन्= =अनुत्तिष्ठन्। स्वस्याधिकरणमविजहत् इत्यर्थः। सं यजत्रैरङ्गानीत्यंसयोरुच्चलयोः (आप० श्रौ० ७।५।१४।२)। उच्चलयोर् अंसयोर्ये चलस्थाने अंसकोटी तयोः (अञ्जनम्)।

—चि (चिञ् चयने)। सावित्र्या सार्धमुच्चितार्चनकुसुमा सस्नौ (हर्ष० २)। उच्चितानि अवचितानि। उच्चयः समुच्चयः। एकस्थसौन्दर्यदिदृक्षयेव रूपोच्चयेन मनसा विधिना कृता नु (शा० २।६)। अचलशैलशिलोच्चयाः (अमरः)। नीवीबन्धोऽप्युच्चय उच्यते। तथा च हरिवंशे प्रयोगः—चन्द्रार्ककिरणोद्द्योतं गिरिकूटं शिलोच्चयम् (हरि० १।४२।२४)। शिला मनःशिला, तद्वर्ण उच्चयो नीवीबन्धनं यस्य तम्। उच्चैस्तरेऽप्युच्चयः समूहे नीविबन्धन इति मेदिनी। निबद्धदृष्टिः शिथिलाकुलोच्चया (कि० ८।१५)। नारीकट्यंशुकग्रन्थौ नीवी स्यादुच्चयोऽपि चेति मार्तण्ड इति मल्लिः।

—च्यु (च्युङ् गतौ)। ता अनुष्ठ्योच्च्यावयतात् (ऐ० ब्रा० २।६)। उद्धरतेत्याह। अनुष्ठियत्न इति षड्गुरु०।

—छद् (छद अपवारणे)। प्रसाधनोच्छादनस्नापनोच्छिष्टभोजनानीति गुरोः (बौ० ध० १।२।२।३६)। उच्छादनं छत्रधारणं (गुरोरुपरि)।

—छिद् (छिदिर् द्वैधीकरणे)। नोच्छिन्द्यादात्मनो मूलं परेषां चातितृष्णया (भा० )। नोच्छिन्द्यात् नोद्वृहेत्, नोत्सादयेत्। उच्छिद्यन्ते क्रियाः सर्वा ग्रीष्मे कुसरितो यथा (पञ्चत० २।८६)। अस्तं यान्तीत्याह। चतुर्धा ब्रह्मौदनं व्युद्धृत्य प्रभूतेन सर्पिषोपसिच्य कर्षन्ननुच्छिन्दन् (आप० श्रौ० ५।१। ५।६)। अनुच्छिन्दन् अविमुञ्चन् अनुसृजन्। यावद् ऋत्विजो गृह्णन्ति तावदनुत्सृजन्निति रुद्रदत्तः। कर्षन् भूमेरनुत्क्षिप्य सारयन्। नक्ताहृतमनुच्छिन्नम्... अम्बु (वि० पु० ३।१६।१०)। उच्छिन्ना वियोजिता विश्लेषिता व्यपवृक्ताः। अविनाशी वा अरे अयमात्माऽनुच्छित्तिधर्मा (शा० ब्रा० १४। ७।३।१५)। परोच्छित्त्या लभ्यामभिलषति लक्ष्मीं हरिसुते (कि० १०।६३।) उच्छित्तिरुत्सादः। यस्मिन्नुच्छिद्यमाने तु रिपुरन्यः प्रवर्तते। न तस्योच्छित्तिमातिष्ठेत् कुर्वीतैनं स्वगोचरम् (का० नी० सा० ८।६७)॥ उच्छित्तिर्निर्मूलनम्, उज्जासनम्। स्वगोचरं स्वायत्तम्। आशातन्तुर्न च कथयताऽत्यन्तमुच्छेदनीयः (मालती० ६।२६)। उच्छेदनीयो विलोपनीयः। पुत्रस्य चरणोच्छेदो

विहितः कारणं विना (कथा० १८।१६)। उच्छेद उत्कर्तनम् । सकलदायादाना-मुच्छेदं करिष्यामि (पञ्चत०)। उच्छेदं निर्मूलनम् । उच्छेत्तारं च धर्माणां परदाराभिमर्शनम् (रा० ३।३२।१२)। उच्छेत्तारं विनाशयितारम् ।

—जन् (जनी प्रादुर्भावे)। उदुस्रिया जनिता यो जजान (ऋ० ३।१। १२)। उज्जजान ऊर्ध्वं जनयामास । उस्रियाः प्रक्षिप्ता आहुतयः । उज्जायतां परशु ज्योतिषा सह (ऋ० १०।४३।६)। ऊर्ध्वं प्रादुर्भवतु (मेघविदारणार्थम्) इत्याह । उत ब्रुवन्तु जन्तव उदग्निर्वृत्रहाऽजनि (ऋ० १।७४।३)। उदजनि उदपादि उत्पन्नः । उज्जातमिन्द्र ते शवः (ऋ० ८।६२।१०)। उज्जातमौत्क-ट्येन प्रादुर्बभूव । शवो बलम् । प्रियः सूर्ये प्रियो अग्ना भवात्युज्जातेन भिनद-दुज्जनित्वैः (ऋ० १०।४५।१०)। उच्छब्द इह विशेषकृन्न । उज्जातं जातम् ।

—जि (जि जये, जि अभिभवे)। धाता षडक्षरेण षड् ऋतूनुदजयत् (तै० सं० १।७।११।१)। उदजयत् = व्यजयत । स यो न उज्जेष्यति तस्य न इदं भविष्यति (श० ब्रा० ५।१।१।३)। उज्जेष्यति अभिभविष्यति । उच्छब्दो नार्थे विशेषं करोति । आर्यं वर्णमुज्जापयन्ति (पञ्च० ब्रा० ५।५।१७)। विजेतारं कुर्वन्तीत्याह ।

—जीव् (जीव प्राणधारणे)। उदजीवत् सुमित्राभूः (भट्टि० १७।६५)। उदजीवत् समजीवत् पुनः प्राणानापद्यत ।

—ज्वल् (ज्वल दीप्तौ)। या हुता (आहुतयः) उज्ज्वलन्ति (श० ब्रा० १४।६।१।१०)। उज्ज्वलन्ति ऊर्ध्वं ज्वलन्ति । उदर्चिषो भवन्ति । ऊर्ध्वशिखाः सत्यो ज्वलन्ति ।

—डी (डीङ् विहायसा गतौ)। उड्डीनम् (भा० कर्ण० ४१।२६)। ऊर्ध्वंगमनम् इत्यर्थः ।

—तन् (तनु विस्तारे)। दिवो मूलमवततं पृथिव्या अध्युत्ततम् (अथर्व० २।७।३)। उत्ततम् ऊर्ध्वं विस्तृतम् । यदुत्ततं नि तत्तनु (अथर्व० ७।६५।३)। उत्ततमुन्नतम् ।

—तप् (तप सन्तापे)। उत्तपति स्वर्णं स्वर्णकारः (पा० १।३।२७) सूत्रे वृत्तिः । उत्तपते रविः । उद्दीप्यत इत्यर्थः । उत्तपते पाणिम् । उत्तपते पृष्ठम् । तपतीत्येवार्थः । नार्थ उदा । अनिशं निर्जरकरुणः करुणं कुसुमेषुरुत्तपति यद्विशिखैः (शिशु० ६।६७)। उत्तपति सन्तापयति पीडयति कदर्थयति । तीव्रमुत्तपमानोऽयमशक्यः सोढुमातपः (भट्टि० ८।१५)। उत्तपमानश्चण्डं तपन्।

प्रत्यूहः सर्वसिद्धीनामुत्तापः प्रथमः किल (हितोप० ३।४५)। उत्तापः सन्तापः खेदः संज्वरः।

—तम् (तमु ग्लानौ)। एकाङ्गेभ्यो विभिन्नेभ्यो बिभ्यदुद्भिन्नसंभ्रमः। उदताम्यत्तथा चिन्तालुप्तसंविद् दिवानिशम् (राज० ६।१२४)॥ उदताम्यत् पर्यग्लायत्।

—तिज् (तिज निशाने)। अश्वमुत्तेजयामास (कथा० १८।६१)। बलवत् प्रयुयुजे प्रेरयामास। तानुत्तेजयामि सुहृदो यदि मोक्षणाय (मृच्छ०)। उक्तोऽर्थः।

—तुद् (तुद व्यथने)। विद्वेषमुत्तुदति चेतसि नासिका मे (अवदा० ना० १३)। उत्तुदति उत्पादयति।

—तृद् (उतृदिर् हिंसानादरयोः)। तं पञ्चदश स्तोमो मध्यत उदतृदत् (तै० ब्रा० २।२।३।१)। अच्छिनदित्यर्थः।

—तॄ (तॄ प्लवनतरणयोः)। उदतारिषुरम्भोधिम् (भट्टि० १५।३३)। पारमगमन् इत्यर्थः। पक्वमुत्तारयेत्पश्चादनिरुद्धेन देशिकः (अग्नि पु० २७। १२)। उत्तारयेत् = अधः श्रयेत्। इमानि हि प्राणयन्ति सृजन्त्युत्तारयन्ति च (भा० शां० )। यस्मादुत्तार्यते पापात् (भा० उ० )। उत्तार्यते निर्मोक्ष्यते। पल्वलोत्तीर्णवराहयूथानि (रघु० २।१७)। उत्तीर्णानि निर्गतानि। नरकादुत्तीर्णः कोपि नारकी भविष्यति (प्र० च०)। उत्तीर्णो निर्गतोऽवतीर्णः। तद् गृह उत्तीर्णौ (वेताल०)। उत्तीर्णौ = अवतीर्णौ। व्यसनमहार्णवादपारादुत्तीर्णम् (मृच्छ० १०।४६)। उत्तीर्णं निर्गतम्। अभिषेकोत्तीर्णः स्नात्वा नदीजलान्निर्गतः। आयुरुत्तीर्णः (हरि०)। आयुषोऽन्तं गतः। उपरत इत्यर्थः। जलादुत्तीर्य (भा० वन० ११)। बहिरागम्य। अज्ञानभुक्तं तूत्तार्यम् (मनु० ११।१६०)। वमितव्यमित्याह। यो घोरामापदं प्राप्य नोत्तारमधिगच्छति (भा० उ० १२४।२७)। उत्तार उत्तरणं निस्तरणम्।

—त्रस् (त्रसी उद्वेगे)। विघ्ना हि बहवो लोके बालानुत्त्रासयन्ति हि (हरि० २।५।७)। उत्त्रासयन्ति उद्वेजयन्ति।

—दंश् (दंश दशने)। उद्दंशः। मशकः। खट्वामलः। यूका।

—दल् (दल विशरणे)। तालुदेशमथोद्दाल्य ब्राह्मणस्य महात्मनः। ज्योतिर्ज्वाला सुमहती जगाम त्रिदिवं तदा (भा० शां० २००।२०)। उद्दाल्य विशीर्य।

—दह् (दह भस्मीकरणे)। माग्निरुद्दहति (यो० सू० ३।४५ सूत्रभाष्ये)।

—दा (डुदाञ् दाने)। उद्दाय मृधे स्वरिक्थं परात्सुपर्णाविव वज्रिवक्त्रात् (भा० पु० ३।१।३६)। उद्दाय आच्छिद्य।

—दिश् (दिश अतिसर्जने, दिशिरुच्चारणक्रिय इति भाष्यकारः)। उदग् उद्दिशति (भा० श्रौ० ६।१३।३)। उद्दिशति उन्नयति उन्नमयति। अग्निमिति शेषः। प्रलये च तमभ्येति तस्माद् उद्दिश्यते पुनः (भा० शां० २८५।८)। तस्मादुद्दिश्यते तस्माज्जायत इति शब्दमात्रेणोच्यते न तु वस्तुतस्ततो जायत इत्यभिसन्धिः। प्रागुदीचीमुद्दिशति (शां० श्रौ० २।६।२२)। संकेतयतीत्यर्थः। कारणं वान्यद् उद्दिशेत् (मनु० ८।५२)। कथयेदित्यर्थः। कथं मामेवोद्दिशति (शा०)। मामेव लक्ष्यीकृत्य ब्रवीतीत्यर्थः। उपहतविवेका लोका यदुद्देश्यं शिक्षाभिरुचिस्तां नोद्दिशन्ति यदनुद्देश्यं जीविकालाभमात्रं तद् उद्दिशन्ति। (इति कस्य चिद् विमर्शकस्य सुविचिन्तितं वचः)। उद्दिशन्ति लक्ष्यं कुर्वन्ति। प्रथमोद्दिष्टमास्पदम् (कु० ६।३५)। पूर्वमुदाहृतम्। ततः प्रविशति यथोद्दिष्टव्यापारा शकुन्तला। यथोद्दिष्टं यथावर्णितम्। उद्दिष्टामुपनिहितां भजस्व पूजाम् (मालती० ६।२५)। उद्दिष्टां त्वदर्थं सङ्कल्पिताम्। सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम् (भर्तृ० १।५६)। उद्दिष्टमुपदिष्टम्। अनेडमूक उद्दिष्टः शठ इति मेदिनी। उद्दिष्टः कथित उक्त उदाहृत उदीरितः। पन्थानमृषिणोद्दिष्टम् (रा० २।५६।४)। उद्दिष्टं निर्दिष्टमुपदिष्टम्। विशिष्योदाहृतम्। यदन्यदपि नोद्दिष्टं तत्रापि क्रियतां मतिः (रा० ४।४४।१२७)। नोद्दिष्टमनुक्तम्, अननुशिष्टम्। काले सांवत्सरोद्दिष्टे (बृ० सं० ५२।६८)। दैवज्ञेनावधार्य कथित इत्याह। त्वं साधुभिरुद्दिष्टः प्रथममेव चक्रवर्तिनं पुत्रं जनयिष्यसीति (शा० ५)। उद्दिष्ट आदिष्टः=भविष्यद्वचनमुक्तः। क्रान्तिश्च गतिरुद्दिष्टा (मार्क० पु० २६।१७)। उद्दिष्टा कथिता। पलायनेन चोद्दिष्टाः प्राणान् रक्षामहे वयम्। एकेन बहवो भग्ना यशो नाशं गमिष्यति (रा० ६।६६।२७)॥ उद्दिष्टाः प्रख्याताः प्रसिद्धाः। समासवाक्यमुद्देशः। विद्याविनयहेतुरिन्द्रियजयः। व्यासवाक्यं निर्देशः। कर्णत्वगक्षिजिह्वाघ्राणेन्द्रियाणां शब्दस्पर्शरूपरसगन्धेष्वप्रतिपत्तिरिन्द्रियजयः (कौ० अ० १५।१।१८०)। कश्चित्कञ्चिदाह देवदत्तं मे भवानुद्दिशत्विति। स इहस्थः पाटलिपुत्रस्थं देवदत्तमुद्दिशति—अङ्गदी कुण्डली किरीटी व्यूढोरस्को वृत्तबाहुरीदृशो देवदत्त इति। प्रत्यक्षमाख्यानमुपदेशः। गुणैराख्यानमुद्देशः। (पा० १।३।२ सूत्रे भाष्ये)। समासवचनमुद्देशः। यथा शल्यमिति। विस्तरवचनं निर्देशः। यथा शारीरमागन्तु चेति (सुश्रुत० उत्तर० ६५।६)। उद्देशमात्रेण मया देशाः संकीर्तिता विभो (भा० भीष्म० ६।७०)। उद्देशमात्रेण नामनिर्देशमात्रेण। संकीर्तिता मुने। उद्देशतश्च गन्धर्वा विविधाश्च महर्षयः (भा० सभा० १५।५)॥ उक्तोऽर्थः। सूर्योद्देशेन तिला

दातव्याः (पञ्चत० २)। **सूर्य एषां सम्प्रदानं देवतेति सङ्कल्प्येत्यर्थः।** अनत्यन्तगतस्त्वेष उद्देशो भवति (नि० १२।४०।२)। **अनैकान्तिक्येषा प्रतिज्ञा भवतीत्युक्तं भवति।** अर्थमप्रतियतो नात्यन्तं स्वरसंस्कारोद्देशः (नि० १।१५। १)। **उद्देशोऽवधारणम्।** एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया (गीता० १०।४०)। **उद्देशतः संक्षेपेण सङ्ग्रहेण।** माहात्म्यमपि चैवोक्तमुद्देशेन वाचा प्रभो (भा० अनु० ७२।१)। **उक्तोऽर्थः।** ते समासाद्य पन्थानं यथोक्तं वृषपर्वणा। अनुसस्रुर्यथोद्देशम् (भा० वन०)॥ **यथोद्देशं यथानुशिष्टि।** उद्देशज्ञाः कुबेरस्य नलिन्याः (भा० वन०)। **उद्देशः परिसरः पर्यन्तभूः।** कुण्डलोद्देशात् तं च पप्रच्छ (कथा० २०।२१०)। **कुण्डलमधिकृत्येत्यर्थः।** शृगालादधमं श्वानं प्रवदन्ति मनीषिणः। तस्याप्यधम उद्देशः शरीरस्य श्वजाघनी (भा० शां० १४१।५७)॥ **उद्देशः प्रदेशोऽवयवः।** आतपाक्रान्तोऽयमुद्देशः (शा० ३)। प्रवातसुभगोऽयमुद्देशः (शा० ३)। **उभयत्र उद्देशः प्रदेशः।** ततोऽत्र दीपोद्देशेन दत्त्वाग्निं मासवेश्मनि (कथा० १०।११०)। **दीपप्रज्वलनप्रयोजनमनुरुध्येत्यर्थः।** उद्देशो गण्डकूपस्तु पर्वतस्याभिधीयत इति हारावली। कृतोद्देशः स बीभत्सुः पञ्चमीमभितः समाम् (भा० वन० १५८।३)। **पञ्चमे वर्षे समागन्तास्मीति कृतसङ्केत इत्यर्थः।** यस्त्वस्य कथितः सत्यो गुणोद्देशस्त्वया मम (भा० वन० ४५।१५)। **गुणोद्देशो गुणलेशः।** एष सप्तर्षिकोद्देशो व्याख्यातस्ते मया नृप (हरि० १।७।५८)। **सप्तर्षिसम्बन्धि नामधेयादि।** त्यज्यमानद्रव्ये उद्देश्यविशेषो देवता, मन्त्रस्तुत्या च (पा० ४।२।२४ सूत्रे सि० कौ०)। **यस्यै संकल्प्य हविरादि सम्प्रदीयते सा देवतेत्याह।** किमुद्दिश्य पयोधरान्ध्वनतः प्रार्थयते मृगाधिपः (कि० २।२१)। वध्यशिलामुद्दिश्य प्रस्थितः (पञ्चत० १)। **उद्दिश्य अभिलक्ष्य।** मदीयेषु लेखेषु तत्रभवत उद्दिश्य सभाजनाक्षराणि पातयिष्यामः (माल० ५)। **तत्र भवत उद्दिश्य भवदभिप्रायकाणि।** रामश्चोपेत्य विज्ञाप्यो मामुद्दिश्य सगौरवम् (रा० गोरेसि० १।८०।२१)। **मामुद्दिश्य मन्नाम्ना।** वचसि भवति सङ्गत्यागम् उद्दिश्य वार्ता श्रुतिमुखरमुखानां केवलं पण्डितानाम् (भर्तृ० २।७१)। **उद्दिश्य =अधिकृत्य, विषयीकृत्य।** अवदद् देवीं मामुद्दिश्य। (कथा० २।७१)। **मामुद्दिश्य मामन्तरेण, मद्विषये।** उद्दिश्योद्दिश्य तेषां च चक्रे राजौर्ध्वदेहिकम् (भा० शां० ४२।६)। **उद्दिश्योद्दिश्य नामान्युच्चार्य प्रत्येकम्, नामादेशम्।** सालङ्कारान्गजानश्वान्कन्याश्चैव वरस्त्रियः। उद्दिश्योद्दिश्य सर्वेभ्यो ददौ स नृपसत्तमः (भा० आश्रम० १४।४-५)॥ **उद्दिश्योद्दिश्य=अयमस्याऽयमस्येति नामनिर्देशपुरःसरम्।** प्रेतायोद्दिश्य गामप्येके घ्नन्ति (पा० गृ० ३।१०)। **प्रेतायेत्यनेनैव उद्दिश्यार्थोऽभिहितः, इदमनन्यप्रयोजनं केवलं प्रेतस्य सम्प्रदानतामेव बलीयोऽभिव्यनक्ति।** नियुक्तास्तत्र पशवस्तास्ता उद्दिश्य देवताः। जलचराः

स्थलचरा अन्तरीक्षचरास्तथा (रा० १।१३।३१) ॥ **ताभ्यस्ताभ्यो देवताभ्यः सङ्कल्प्य ।** सन्धाय चापे तानाशु लक्ष्यमुद्दिश्य राक्षसान् । मुमोच राघवो बाणान् (रा० ३।२६।२०) ॥ **लक्ष्यभूतान् राक्षसान्प्रतीत्यर्थः ।** उत्तरां दिशमुद्दिश्य प्रस्थातुमुपचक्रमे (रा० १।३३।१७) । **उक्तोऽर्थः ।** एतद्वाक्यं नलो राजा दमयन्तीं समाहितः । उवाचासकृदार्तो हि भैमीमुद्दिश्य भारत (भा० वन० ६१।१४) ॥ **भैमीमभिसम्बोध्येत्यर्थः ।**

**—दिह्** (**दिह उपचये**) । ऊर्जं वा एतं रसं पृथिव्या उद्दिहन्ति यद् वल्मीकम् (तै० आ० ५।२।८) । **उत्क्षिपन्तीत्यर्थः ।**

**—दीप्** (**दीपी दीप्तौ**) । तस्य यद् रेतसः प्रथममुददीप्यत तदसावादित्योऽभवत् (ऐ० ब्रा० ३।३४) । उद्दीप्यस्व जातवेदः (कौ० उ०) । **समिद्धो भवेत्याह ।** बाणवदनमुददीपि भिये (शिशु० १५।४८)। **उददीपि प्राज्वालीत् ।** कर्तरि चिण् । उद्दीपनविभावास्ते रसमुद्दीपयन्ति ये (सा० द० १६०) ।

**—द्युत्** (द्युत दीप्तौ) । **त्रिभिर्नेत्रैः** कृतोद्द्योतं त्रिभिः सूर्यैरिवोदितैः (भा० अनु० १४।५३) । **उद्द्योतः प्रकाशः ।** हर्षरश्मिभिरुद्द्योतं तस्यान्तः पुरमाबभौ (रा० १।१५।१६) । **उद्द्योतत इत्युद्द्योतम् भासमानं भास्वरम् ।**

**—द्रु** (**द्रु गतौ**) । समाने वै योना आस्तां सूर्यश्चाग्निश्च । ततः सूर्य उदद्रवत् (का० सं ६।३) । उदद्रवत् (का० सं० ६।६) । **उदद्रवत् ऊर्ध्वमगमत् ।** सो (अग्निः)ऽस्य मूर्ध्न ऊर्ध्वं उदद्रवत् (कपि० क० सं० ३।१२) । **उक्तोऽर्थः ।** तेनैवोद्द्रुत्याग्निहोत्रं जुहुयात् (तै० ब्रा० २।२।१।६) । **उद्द्रुत्य शीघ्रं निष्क्रम्य ।**

**—धा** (**डुधाञ् धारणपोषणयोः**) । वृक्षे गर्भं मृतमुद्धास्यन्ति (श० ब्रा० ४।५।२।१३) । **ऊर्ध्वं स्थापयिष्यन्तीत्याह ।** (पितरः) ये दग्धा ये चोद्धिता (अथर्व० १८।२।३४) । **उद्धिता ऊर्ध्वदेशे पितृलोके स्थिताः ।** उद्धितं रथचक्रम् (श० ब्रा० ५।१।५।१-२) । **ऊर्ध्वं स्थापितमित्यर्थः ।** शिवा मानस्य पत्नी न उद्धिता तन्वे भव (अथर्व० ६।३।६) । **उद्धिता = निर्मिता ।** ब्रह्मणा वेदिरुद्धिता (अथर्व० १६।४२।२) । **उक्तोऽर्थः ।**

**—धाव्** (**धावु गतिशुद्ध्योः**) । भुजङ्गो हि तृणाग्रस्पृष्टोपि स्फटाटोपैरुद्धावति (का० नी० सा० १०।३ जयमङ्गलायाम्) ।

**—धु** (**धुञ् कम्पने, धू विधूनने**) । उद्धुनीयात्सत्केतून् (भट्टि० १६।८) । **उत्कम्पयेदित्यर्थः ।** उद् धुन्वन्तोऽपरे रेणून् (भा० वन०) । **उत्क्षिपन्त उद्धुन-**

न्तः। तस्य निश्वासवातेन रज उद्धूयते महत् (भा० वन०)। उक्तोऽर्थः। हरः सङ्क्रीडमानश्च उमया सह पर्वते। भुजाभ्यामुद्धूतः······(रा० ३।४७। १०)। उद्धूत आन्दोलितः। उद्धूतानीह सर्वेषां यदूनां हृदयानि वै (हरि० २।२३।२२)। उद्धूतानि क्षुभितानि, आन्दोलितानि विकम्पितानि। उद्धूतलाङ्गूलमहापताक-ध्वजोत्तमांसाकुलभीषणान्तं (किरीटिनम्)। (भा० वि० ५४।२७)। उद्धूतमुपरि क्षिप्तम्। आसीद् वनमिवोद्धूतं स्त्रीवनं रावणस्य तत् (रा० ५।६।६६)। उद्धूतं विकस्वरं सहर्षम्। उद्धव उत्सवः। उद्धुनोति दुःखमिति। पचाद्यच्।

—धृ (धृञ् धारणे)। उद्दधार ततो नीलः शरं तस्य कलेवरात् (रा० ४।२२।२१)। उद्दधार निश्चकर्ष। साम्राज्यं निजमुद्दधार सकलं सङ्गीतशास्त्रं च यः (रा० ७।१०।३७)। उद्दधार=उत्कर्षं प्रापयामास। आगमस्तु कृतो येन सोभियुक्तस्तमुद्धरेत् (याज्ञ० २।२८)। उद्धरेत् साधयेत्। एष त्वां सजनामात्यमुद्धरामि स्थिरो भव (भा० उ० १८६।२३)। उद्धरामि उत्सादयामि। मां तावदुद्धर शुचो दयिताप्रवृत्त्या (विक्रम० ४।३१)। उद्धर रक्ष। उन्नय इति त्वक्षरार्थः। भगवति तव स्पृष्टानद्भिश्चिरादुददीधरत् (उत्तर० १।२३)। दुर्गतेः पर्यत्रायतेत्यर्थः। नमयामास नृपाननुद्धरन् (रघु० ८।९)। अनुद्धरन् अनुत्सादयन्। उद्धरणीये चक्षुषी (दशकु० १०२)। निष्क्रष्टव्ये उत्पाट्ये। पातयितुमेव शक्तिर्नान्निपिटमुद्धर्तुम् (पञ्चत० १।३६३)। उद्धर्तुम् उत्क्षेप्तुम् उत्थापयितुम्। स बन्धुर्यो विपन्नानामापदुद्धरणक्षमः (हितोप० १। २९)। उद्धरणं परित्राणम्। जग्धस्य मोहाद् हि विशुद्धिमन्धसो जुगुप्सितस्योद्धरणं प्रचक्षते (भा० पु०४। ४।१८)। उद्धरणं वमनम्। अपि ते ब्राह्मणा भुक्त्वा गताः सोद्धरणान् गृहान् (भा० अनु० ६०।१४)। सोद्धरणान् स्वामिन्यागते दास्यामीति याचमानेभ्यो बालकेभ्य आशाप्रदर्शनमुद्धरणं तत्सहितान् इति नीलकण्ठः। ज्येष्ठस्य विंश उद्धारः सर्वद्रव्याच्च यद्वरम् (मनु० ९।११२)। उद्धारोपोद्धारः, देयांशस्य पृथक्करणम्। राज्ञश्च दद्युरुद्धारमित्येषा वैदिकी श्रुतिः (मनु० ८।३९७)। युद्धे निर्जितस्य द्रविणस्य षष्ठोंशः।

—ध्मा (ध्मा शब्दाग्निसंयोगयोः)। उद्धमाधम सन्धम (तै० आ० १।१२। १)। उद्ध्माय मरिष्यसि (श० ब्रा० १।४।३।१८)। उद्ध्माय उच्छ्वस्य।

—ध्वंस् (ध्वंसु अवस्रंसने गतौ च)। ब्राह्मणस्य गवां राजन् ह्रियतीनां रजः पुरा। सोममुद्ध्वंसयामास······(भा० अनु० १०१।४)॥ उद्ध्वंसयामास व्याप संववार।

—नट् (नट अवस्यन्दने)। उत्पूर्वस्यास्य हिंसायां प्रवृत्तिरनेकार्थत्वाद् धातूनाम्।

—नद् (णद अव्यक्ते शब्दे)। असोढसिंहध्वनिरुन्ननाद (कु० १।५६)। उच्चैर्ननाद रिरेभे। ततोन्तरिक्षमुत्प्लुत्य कालमेघ इवोन्नदन् (भा० द्रोण० १५६।८६)। गोमायुर्दारुणं मुहुरुन्नदन् (भा० उ० )। उच्चैर्वाश्यमानः। नदन्तश्चोन्नदन्तश्च गर्जन्तश्च प्लवङ्गमाः (रा० गोरे० ४।४५।८)। उक्तोऽर्थः।

—नम् (णम प्रह्वत्वे शब्दे च)। उन्नमति नमति वर्षति गर्जति मेघः करोति तिमिरौघम्। प्रथमश्रीरिव पुरुषः करोति रूपाण्यनेकानि (मृच्छ० ५।२६)॥ उन्नमति उदञ्चति, ऊर्ध्वं गच्छति। उन्नमत्पीनोत्तुङ्गपयोधरा (प्र० च० ४।८)। उन्नमन्तौ उदञ्चन्तौ (पयोधरौ)। ···अपश्यद् दिवसेऽन्तिमे। मध्यन्दिने पयोदालीमुन्नमन्तीं रविं प्रति (बृ० श्लो० सं० २।६९)। लघूनुन्नमयन्भावान् गुरूनप्यवपातयन्। वातुं विधिरिवारेभे प्रचण्डश्च प्रभञ्जनः (कथा० २५।४२)॥ उन्नमयन् उन्नयन्, उदञ्चयन्। उन्नम्योन्नम्य तत्रैव दरिद्राणां मनोरथाः। हृदयेषु विलीयन्ते विधवास्त्रीस्तनाविव (पञ्चत० २।९८)॥ उन्नम्य वदनं भीरुः शिंशपां तामुदैक्षत (रा० ५।३०।१२)। उन्नम्य उन्नतं कृत्वा।

—नश् (नशतिर्व्याप्तिकर्मा छान्दसः)। उत्तरं सुम्नमुन्नशम् (ऋ० २।२३।८)। उन्नशम् उदनशम्। प्रापमित्यर्थः।

—नह् (णह बन्धने)। अस्थ्यवयवोऽस्थिमध्यमनुप्रविश्य मज्जानमुन्नह्यति (सुश्रुत० १।१३१।६)। उन्नह्यति निष्कर्षति, बहिष्करोतीति यावत्। मुक्तागुणोन्नद्धं मौलिम् (रघु० १७।२३)। उन्नद्धमूर्ध्वदेशे नद्धं बद्धम्। ते नैव शक्याः सहसा विजेतुम्। वीर्योन्नद्धाः······(भा० भीष्म० ८०।१०)। प्रवृद्धवीर्याः, वीर्येण दृप्ता वा। आत्मप्रमाण उन्नद्धः श्रेयसोऽवमन्यकः (भा० वन० ३१।१७)। उन्नद्धो दृप्तः। जातोन्नद्धप्रवृद्धाः स्युरुच्छ्रिता इति नानार्थेष्वमरः। पुंरत्नैः पुनरप्रमेयमहिमोन्नद्धैर्न किं साध्यते (राज० ४।३३१)। उन्नद्धैः प्रवृद्धैः उन्नतैः। ततः प्रसन्ना पृथिवी तस्य···पुनरुन्नह्य सलिलात् (भा० वन० )। उन्नह्य निष्क्रम्य निर्गत्य। श्रियैश्वर्यमदोन्नाहं पश्य उन्मादकं नृणाम् (भा० पु० १०।७३।१९)। उन्नाहः=उद्बन्धनं स्वैराचार इत्यर्थं इति श्रीधरः। उन्नाहः सौवीरकम् इत्यपि क्वचित्।

—नी (णीञ् प्रापणे)। क्षिणोमि ब्रह्मणाऽमित्रानुन्नयामि स्वाँ अहम् (वा० सं० ११।८२)। उन्नयामि उत्कर्षं प्रापयामि। दण्डमुन्नयते (सि० कौ०)। उत्क्षिपतीत्यर्थः। प्रकृतिप्रत्ययाद्यर्थाद्यैः संकीर्णे लिङ्गमुन्नयेत्

(अमरः) । उन्नयेत् अनुमिमीत, तर्कयेत् । कथमपि स इत्युन्नेतव्यस्तथापि दृशोः प्रियः (उत्तर० ३।२२) । उक्तोऽर्थः । तत एकान्तमुन्नीय पाराशर्यो युधिष्ठिरम् । अब्रवीदुपपन्नार्थम् इदं वाक्यविशारदः (भा० वन० ३६।२८)॥ विजने निर्णीय । रेतोधाः पुत्र उन्नयति नरदेव यमक्षयात् (हरि० १।३२।१२) । निर्गमयति, उद्धरतीत्याह । नीचा सन्तमुदनयः परावृजम् (ऋ० १२।१३।१२) । उदनयः=उदनमयः । उत्तूर्वयाणं धृषता निनेथ (ऋ० ६।१८।१३) । उन्निनेथ । उक्तोऽर्थः । किं स्विदादित्यमुन्नयति (भा० वन० ३१३।४५) । उन्नयति उच्चैःसंस्थं करोति । अध्वर्यवः कर्तना श्रुष्टिमस्मै वने निपूतं वन उन्नयध्वम् (ऋ० २।१४।६) । उन्नयध्वम् मूलमस्यावृहतेत्याह । ऊर्ध्वं प्राणमुन्नयति अपानं प्रत्यगस्यति । (कठ० उ० ५।३) । उन्नयति उदीरयति, उत्क्रमयति । तं धीरासः कवय उन्नयन्ति (पा० गृ० २।२) । तर्कयन्ति, निचायन्ति । उन्नीयन्ते स्म वालाश्चिह्नैरङ्गानि कोमलैः (बृ० श्लो० सं० ७।१५) । उन्नीयन्ते तर्क्यन्तेऽभ्युह्यन्ते, अनुमीयन्ते । प्राड्विवाको वक्ष्यमाणेन शपथेन सत्यमुन्नयेत् (मनु० ८।१०६) इत्यत्र कुल्लूकः । उक्तोऽर्थः । ततो राज्ञां चरैराप्तैः प्रवृत्तिरुदनीयत (भा० आदि० २००।१) । उदनीयत उपानीयत । तथा च पाठान्तरं प्रवृत्तिरुपानीयत । इदमेव ज्यायः । पुमांसमुन्नयेत्प्राज्ञः शयने तप्त आयसे (भा० शां० १६५।६५) । उपरि निदध्यादित्यर्थः । को अस्या नो द्रुहोऽवद्यवत्या उन्नेष्यति (अथर्व० ७।१०८।१) । उन्नेष्यति उद्धरिष्यति । उग्रस्य मन्योरुद् इदं नयामि (अथर्व० १।१०।१,६।१।६) । उक्तोऽर्थः । अनुपूर्वया फलवृक्षशाखया सकृत् सीमन्तमुन्नयेत् (द्रा० गृ० २।२।२५) । पृथक् कुर्यात् । ओमुन्नेष्यामि हव्यं देवेभ्यः पाप्मभ्यो यजमानम् (भा० श्रौ० ६।११।१) । उद्वक्ष्यामि, उद्धरिष्यामीत्यर्थः । चतुरः स्रुवान्पूर्णानुन्नयत्यनूचो वा उन्नयति (भा० श्रौ० ६।११।४) । उन्नयति=उद्गृह्णाति । सन्दाय 'घर्माय दीष्वे' (वा० सं० ३८।३) ति वत्समुन्नयति (का० श्रौ० २६।५।४) । उन्नयति गोरपाकरोति, पृथक् करोति । लक्ष्मीं परम्परीणां त्वमत्यन्तीनत्वमुन्नय (भट्टि० ) । उन्नय=नय=प्रापय । अनर्थक उच्छब्दः । एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते (कौ० उ० ) । उन्नेतुमुद्धर्तुमिच्छतीत्यर्थः । कषायोन्नीयमानेषु (भा० शां० २६७।३) । कीचकानां विनाशेन वयमुन्नीतसन्तापाः संवृत्ताः (पञ्चत० २) । उन्नीत उद्धृतः । सा तु तावतोन्नीतमदभिप्राया (दशकु०) । उन्नीतस्तर्कितो विभावितः । देवेनैकत्र नीतानामुन्नीतानां स्वकर्मभिः (भा० पु० ७।२।२१) । उन्नीतानां विप्रयुक्तानाम् । मन्त्रयस्वैनमुन्नीय परवन्तं विशेषतः (भा० आश्व० २८।१२) । उन्नीय एकान्तं नीत्वा । स तस्य पदमुन्नीय तस्मादेवाश्रमात्प्रभुः ।

कौन्तेयो भीमसेनं महावने (भा० वन० १७६।४६)। उन्नीय तर्कयित्वा, अनुमाय। उन्नयः पदार्थानाम् (पा० ३।३।२, सूत्रवृत्तौ)। उन्नयोऽनुमा। उन्नयने च (का० श्रौ० २५।१२।१५)। उन्नयन्त्यस्मादित्युन्नयनं पूतभृत् पात्रम्।

—पच् (डुपचष् पाके)। उत्पचविपचा (मयूरव्यंसकादयश्च २।१।७२ इत्यत्र वृत्तौ)।

—पत् (पत्लृ गतौ)। उदपप्तत् सूर्यः (ऋ० १।१६१।६)। उदगादित्यर्थः। उत्ते वयश्चिद्वसतेरपप्तन् (ऋ० १।१२४।१२)। वयश्चित् पतगा इव वसते निरक्रामन् इत्यर्थः। उत्पेतुः सहसा स्वेभ्यो गृहेभ्यः पुरुषर्षभाः (हरि० २।१२१।१३)। गृहेभ्यस्तत्वरिरे, त्वरया निरीयुः। अप्सु निर्मथनादेव रसात् तस्माद् वरस्त्रियः। उत्पेतुः—(रा० १।४५।३३)॥ उत्पेतुरुन्ममज्जुः, उज्जग्मुः। आसनाद् उत्पपात हृष्टा (रा० २।७२।२)। उत्पपात वेगेनोत्तस्थौ। उत्पेतुरासनात्सर्वे क्रोधसंरक्तलोचनाः (भा० उ० १६२।१६)। उक्तोऽर्थः। उत्पपात भृशं क्रुद्धः श्येनवन्निपपात च (भा० द्रोण० १७४।३५)। उत्पपात उत्पुप्लुवे। नाकीर्तयित्वा गाः सुप्यात्ता नासंस्मृत्य चोत्पतेत् (भा० अनु० ७८। १६)। उत्पतेत् शय्यात उत्तिष्ठेत्। संजिहीत। उत्पतेत् सहजाद् देशाद् व्याधिदुर्भिक्षपीडितात् (भा० शां० १३६।६१)। देशादुत्पतेत् =देशं त्यजेदित्यर्थः। निर्गच्छेदिति शब्दार्थः। तस्मादस्य यत्रैव क्व च कुशो वा यद्वा विकृन्तति तत एव लोहितमुत्पतति (श० ब्रा० ३।१।२।१६)। उत्पतति निःसरति। स्रवति। क्षरति। दैवात्कन्दुकपातेनोत्पतत्यार्यः पतन्नपि। तथा त्वनार्यः पतति मृत्पिण्डपतनं यथा(तन्त्रा० २।४।१४२)॥ उत्पतति उन्नमति, ऊर्ध्वां गतिमाप्नोतीत्यर्थः। उत्पतेदपि चाकाशं निपतेच्च यथेच्छकम् (भा० वन० १५५।१६)। भीममुद्दिश्योक्तिः। विहङ्गवद् विहायसं गच्छेदित्यर्थः। तस्याः श्रुत्वैव वचनमुत्पपात युधिष्ठिरः (भा० आदि० १५४।१३)। आसनात्सहसोदतिष्ठदित्यर्थः। तव वाक्यामृदीक्षाग्रा उत्पतन्ति पतन्ति च (ब० धर्मशा० १६।३२)। उत्पतोदङ्मुखः खम् (मेघ० )। उड्डयस्वेत्यर्थः। उत्पतितोपि हि चणकः शक्तः किं भ्राष्ट्रकं भङ्क्तुम् (पञ्चत० १।१०८)। उत्पतितः सहसोद्गत उत्प्लुतः। सवेगमुच्चरन्। दूर देव चालोक्य तं महासत्त्वं हन्तुमुत्पतितनिश्चयः (अवदा० शरभजा०)। उत्पतितनिश्चय उत्पन्नमतिः। द्वारि शिशुरुत्पतितुं द्रागङ्गान्याकुञ्च्य लीयते निभृतः (भामिनी० १।१०६)। उत्पतितुम्=उड्डयितुम्। उत्पत्योत्पत्य सहसा विश्वामित्रमपूजयन् (रा० १।२६।२६)। आसनेभ्य उत्थायमुत्थायम्। सन्तोषातिशयकृतोऽयमासनपरित्यागः। उत्पातेन ज्ञापिते

च (चतुर्थी सम्प्रदाने २।३।१३ इत्यत्र वार्तिकम्)। प्राणिनां शुभाशुभसूचको विकार उत्पातः। बुद्धिरात्मानुगाऽतीव उत्पातेन विधीयते (भा० वन० १८१। २५)। उत्पातेन=उत्क्रान्त्यादिना। उत्पाताश्च निपाताश्च सुयुद्धं सुपलायितम् (भा० शां० ५६।४६)। उत्पाता ग्रहयुद्धादयो धूमकेत्वादयश्च। विहङ्गाः कालचोदिताः। राक्षसानां विनाशाय उत्पातान् व्याहरन्ति च (रा० ६।११।४१)॥ सापि सुकुमारसुभगेत्युत्पातपरम्परा केयम् (का० प्र० १०)। उक्तोऽर्थः। अधर्मात्तु महोत्पातो भविष्यति हि साम्प्रतम् (रा० ५।२६।३२)। महोत्पात उत्तमा व्यापद्। विचलन्प्रथमोत्पाते हयानां भरतर्षभ (भा० वन० १६८।४०)। उत्पात उद्घातः। एकोत्पातेन ते लङ्कामेष्यन्ति हरियूथपाः (रा० ५।३९।४०)। एकोत्पातेन सकृदुत्पत्येत्यर्थः। पातोत्पाता मनुष्याणाम् (हितोप० १।१६८)। नमनोन्नमने इत्याह। अभ्युदयास्तमयावित्यभिप्रायः।

—पद् (पद गतौ)। उत्पद्यते गृहे यस्य न च ज्ञायत कस्य सः। स गृहे गूढ उत्पन्नस्तस्य स्याद्यस्य तल्पजः (मनु० ९।१७०)॥ उत्पद्यते जायते प्रसूयते। उत्पत्स्यते स्ति मम कोपि समानधर्मा (मालती० १।६)। उत्पत्स्यते जनिष्यते संभविष्यति। उदपादि चास्य मनसि (काद० १३२)। अस्य चित्तमुत्पन्नम् इत्यर्थः। वायोर्ज्योतिरुत्पद्यते (मनु० १।७७)। दुःखे च शोणितोत्पादे शाखाङ्गच्छेदने तथा (याज्ञ० २।२२५)। उत्पाद उत्पत्तिः।

—पा (पा पाने)। उत्पिबन्ते वा इमानि दिक्षु नाष्ट्रारक्षांसि (श० ब्रा० ५।२।४।७)। निःशेषं पिबन्तीत्यर्थः।

—पार् (पार तीर कर्मसमाप्तौ)। उत्त्वा मृत्योरपीपरम् (अथर्व० ८।२।९)। उद् अपीपरम् उद् अपपारम्। पारमनयम् इत्यर्थः।

—पिञ्ज् (पिजि वर्णसम्पर्चनयोः)। उत्पिञ्जोत्पादनासज्जे तस्मिन् (राज० ३।१२२)।

—पिष् (पिष्लृ संचूर्णने)। भीमबाहुबलोत्पिष्टे विनष्टे राक्षसे ततः (भा० वन० ११।७३)। उत्पिष्टे बलवद् बाधिते उपपीडिते संचूर्णिते।

—पीड् (पीड अवगाहने)। अन्योन्यमुत्पीडयदुत्पलाक्ष्याः (स्तनद्वयम्) (कु० १।४०)। उत्पीडयद् मृद्नत्, सङ्घर्षत्। स तु बाणवरोत्पीडाद् विस्रवत्यसृग् उल्बणम् (भा० वन० २१।८)। बाणोत्पीडः क्षतस्थानम्। नयनसलिलोत्पीडरुद्धावकाशाम् (निद्राम्)। उत्पीडः सवेग उद्गमः। पूरोत्पीडे तडागस्य परीवाहः प्रतिक्रिया (उत्तर० ३।२९)। उत्पीड ओघातिरेकः। अभवच्छोणितोद्गारात्सोत्पीड इव सर्वतः (रा० ४।१६।२२)। सोत्पीडः सफेनः। अभवच्छोणितोद्गारी सापीड इव पर्वत इति पाठान्तरम्। उत्पीड इव धूमस्य मोहः प्रागा-

वृणोति माम् (उत्तर० ३।६)। **धूमस्योत्पीडः संघातः**। तदुत्पीडितवारिराशिः सरित्प्रवाह (रघु० ५।४६)। **तेन गजेनोत्पीडित उच्चालितः**। एताः करोत्पीडितवारिधाराः (रघु० १६।६६)। **उक्तोऽर्थः**।

—पू (पूञ् पवने)। सवितुस्त्वा प्रसव उत्पुनामि (वा० सं० १।३१)। **उत्पुनामि शोधयामि। नार्थं उदा**। सवितुर्वः प्रसव उत् पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः (वा० सं० १।१२)। **उत्पुनामि अवदायामि**। त्रिराज्यमुत्पुनाति (द्रा० गृ० १।२।१४)। सर्पिरनुत्पूतम् नवनीतं नोत्पूतम् (आश्व० गृ० २।६)। (आज्यम्) उत्पूय (श० ब्रा० १२।४।४।७)। **पवित्रेण संशोध्येत्यर्थः**। द्रवाणां चैव सर्वेषां शुद्धिरुत्पवनं स्मृतम् (मनु० ५।११५)। एते वा उत्पवितारो यत्सूर्यस्य रश्मयः (श० ब्रा० १।१।३।६)। **उत्पवितारः पवनशीलाः पूतिकराः**।

—पॄ (पॄ पालनपूरणयोः)। (तौग्र्यं नावः) उदश्विभ्यामिषिताः पारयन्ति (ऋ० १।१८२।६)। **उत् पारयन्ति उत्तारयन्ति तीरं नयन्ति पारं प्रापयन्ति**। उत्त्वा मृत्योरोषधयः सोमराज्ञीरपीपरन्। (अथर्व० ८।१।१७)। **उदपीपरन् पर्यत्रायन्त**।

– प्रुष् (प्रुष स्नेहनसेवनपूरणेषु)। उत्प्रुषो विप्रुषः संजुहोमि (का० श्रौ० ३।८।१)। उलूखले मुसले यच्च शूर्पे इति सूत्रस्यादिः। **उत्पतिताः प्रुष उत्प्रुषः। प्रुषो बिन्दवो द्रप्साः**।

– प्लु (प्लुङ् गतौ)। प्लवन्निमज्जति निमग्नमुत्प्लवति (षड्विंश० ५।७)। **उत्प्लवति उत्प्लवते तरति**। यल्लघु तद् उत्प्लवते (पा० ३।२।१२६ सू० वृत्तौ)। तदेतत्प्रावृष्युज्जीमूताः प्लवन्ते (का० सं० ३६।७)। **उत्प्लवन्त उद्गच्छन्ति**। न चाग्निमुत्प्लुत्य गच्छेत् (मनु० ४।५४ इत्यत्र कुल्लूकः)। **उत्प्लुत्य लङ्घयित्वा। प्लुत्याऽतीत्य**।

—फल् (त्रिफला विशरणे)। स प्रांशुर्वेष्टितश्मश्रुरुष्णीषेणोत्फलन् पुनः (राज० ८।६५)। **उत्फलन् उत्पतन् उत्सर्पन्**।

—बन्ध् (बन्ध बन्धने)। रज्जुपाशेन कण्ठमुद्बध्नाति (मुद्रा ६)। **कण्ठमूर्ध्वं बद्ध्वा विलम्बत इत्यर्थः**। उद्बद्धबाहुः पुरुषो बधबन्धमवाप्नुयात् (सामुद्रिके)। अस्मिन्वृक्षे किलोद्बद्धं शरीरम् (भा० वि० ४१।१)। **उद्बद्धम् विलम्बितम्**। क्रियते कथमुद्बन्धस्त्वया मे दर्श्यताम् (कथा० १३।१००)। स्वदोषकोपनाद्रोगं लभते मरणान्तिकम्। अपिवोद्बन्धनादीनि परीतानि व्यवस्यति (भा० आश्व० १७।१३)॥ **रज्ज्वा कण्ठं बद्ध्वाऽऽत्मनो विलम्बनमुद्बन्धनमित्यसकृदुक्तोऽर्थः**। पादप आत्मानमुद्बध्य व्यापादयामि (रत्ना०

३)। उक्तोऽर्थः। अज्ञानादुपसम्पन्ना रज्जुरुद्बन्धनी यथा (रा० २।१२।८०)। उद्बध्यतेऽनयेति व्युत्पत्तेः। अयोगवेन विप्रायां जातास्ताम्रोपजीविनः। सूनिकस्य नृपायां तु जाता उद्बन्धकाः स्मृताः (उशना)॥

—बाध् (बाधृ लोडने, लोडनं प्रतिघातः)। यद्यग्निर्नोद्बाधेत···अप्यग्रेणैव यूपमरत्नी सन्दध्याताम् (श० ब्रा० ४।२।१।१९)। नोद्बाधेत नोद्दीप्येत। यदभिष्टिते उदबाधत (श० ब्रा० ५।४।१९)। उदबाधत उदश्वयत्।

—बुध् (बुध अवगमने)। उद्बुध्यध्वं समनसः सखायः (ऋ० १०।१०१।१)। जागृत, जागरिता भवतेत्याह। उद्बुध्यस्व प्रतिजागृहि त्वम् (वा० सं० १५।५४)। प्रतिबुद्धो भवेत्यर्थः। एनं यजमानं प्रतिजागृहीति महीधर एवं भाषमाणः प्रतिजागर्तेः सकर्मत्वमूरी करोति। युज्यते चैतत्। अवेक्षा प्रति-जागर इत्यमरोक्तेः। प्रतिदिनं यजमानं जागरूकं सावधानं कुर्विति वदन्वाऽस्यान्तर्णीतण्यर्थतां मन्यत इतीह प्रसङ्गादुपन्यस्यते। रत्याद्युद्बोधका लोके विभावाः काव्यनाटचयोः (सा० द० २।२९)। उद्बोधका उद्दीपनाः।

—ब्रू (ब्रूञ् व्यक्तायां वाचि)। ओदनमुद्ब्रुवते (तै० ब्रा० १।७।१०।६)। ओदनमन्तरेण संत्रदन्त्येकमतयो भवन्तीत्यर्थो भाति। अधिदेवनकाल ओदनं पणत्वेन सर्वे परस्परं ब्रूयुरिति सायणः। स यन्न संभरति तस्योद्ब्रुवीत तस्य नाश्नीयाद् यावाज्जीवम् (श० ब्रा० ५।२।२।४)। तस्योद्ब्रुवीत तं प्रत्या-चक्षीतेत्यर्थो भासते।

—भा (भा दीप्तौ)। सर्वभूतमयोऽचिन्त्यः स एव स्वयमुद्बभौ (मनु० १।७)। उद्बभौ प्रादुर्बभूव। उत्पूर्वो भातिः प्रादुर्भावे वर्तत इति कुल्लूकः।

—भास् (भासृ दीप्तौ)। अनुद्भासि वासो वसीत (आप० ध० १।३०।१२)। उद्भासि उल्बणम्। विनीतवेषः स्यादित्यर्थः।

—भिद् (भिदिर् विदारणे)। प्रजापतेः प्राणेषूत्क्रान्तेषु शरीरं श्वयितु-मध्रियत। तस्य यः श्लेष्मासीत्स सार्धं समवद्रुत्य मध्यतो नस्त उदभिनत् स एष वनस्पतिरभवत् (श० ब्रा० १३।४।४।६)। उदभिनत्=उदभिद्यत=अङ्कु-रितोऽभवत्। अङ्कुरोऽभिनवोद्भिदि (अमरः)। संस्वेदजा अण्डजा उद्भिदश्च (भा० आदि० ८९।११)। सेमं नः कारुमुपमन्युमुद्भिदमिन्द्रः कृणोतु प्रसवे रथं पुरः (ऋ० १।१०२।९)। उद्भिदमन्तःप्रवेशशीलं विजेतारमभिभवितारम्। ये (देवाः) अस्मभ्यं धनदा उद्भिदश्च (ऋ० १०।११६।९)। उक्तोर्थः। किसलयो-द्भेदः=नवपल्लवोद्गमः। रत्यन्तसुलभोद्भेदैर्नि: सृतैः स्वेदबिन्दुभिः (राज० ५।३८२)। उक्तोऽर्थः।

—भू (भू सत्तायाम्)। श्रान्ताः स्म सुभृशं ब्रह्मन्नोद्भवत्यमृतं च तत् (भा० ग्रादि० १८।२६)। नोद्भवति, नोत्पद्यते, न जायते। उदभून्मुरज-ध्वनिः (कथा० २।३४)। उदतिष्ठत्, उदस्थात् प्रादुरभूत्। उदभवत्तीव्रो दुर्भिक्षः (कथा० २७।६४)। उक्तोऽर्थः। तेषामति त्रीण्यरिच्यन्त न त्रीण्युद-भवन् (तै० ब्रा० १।५।१२।१)। नोदभवन् न पर्याप्नुवन्। तौ च स्वस्वपक्ष-हेतुभिः स्वस्वपक्षं स्थापयतः परपक्षमुद्भावयतः। परलोकमुद्भावयाम्यथेमम् (अवदा० रुरुजा०)। उद्भावयामि उन्नयामि। उद्भावय कुलं मग्नं त्वत्कृते स्वय-मेव हि (भा० उ० १३३।२२)। उद्भावय उन्नय उद्धर। उद्भावय स्ववीर्यं वा तां वा गच्छ ध्रुवां गतिम् (भा० उ० १३३।१८)। उद्भावय आविर्भावय, व्यक्तय, दर्शय। विनतं क्वचिदुद्भूतं क्वचिद्याति शनैः शनैः (गाङ्गं सलिलम्) (रा० १। ४३।२४)। उद्भूतमुन्नतं पाषाणादियोगात्। उद्धूतमिति पाठान्त-रम्। उद्भूतरूपं नयनस्य गोचरः (भाषापरिच्छेदे)। उद्भूतं प्रकटं मूर्तम्, सविग्रहम्। परिच्छिन्नम्। अलं ह्येष त्वत्कुलोद्भूतये विधिः (कु० ६।८२)। उद्भूतिरुच्छ्रायः समृद्धिः। ईश्वरानुद्भाविता वा शक्तिः (शब्दस्य) (सा० द०)। अनुद्भाविताऽनुत्पादिता। मायां मयोद्भाव्य परीक्षितोऽसि (रघु० २।६२)। उद्भाव्य=समुत्पाद्य। नोपादानं विनोद्भवः (वि० पु० १। १७।५८)। उद्भवः=उत्पादः, संभवो जन्म। यो देवानां प्रभवश्चोद्भवश्च (श्वेता० उ० ३।४)। उक्तोऽर्थः। तेनानुद्भवोपि संगृहीतः (सां० का० ७ तत्त्व०)। अनुद्भवः=अनागतावस्थया सूक्ष्मरूपेण स्वोपादानेऽवस्थानम्। वदन्ति कारणं श्रेष्ठं स्वपक्षोद्भावनाय वै (भा० शां० ३००।२)। स्वपक्षोत्कर्षा-येत्यर्थः। अनेकैरभ्युपायैस्ताञ्जिघांसन्ति स्म पाण्डवान्। पाण्डवा अपि तत् प्रतिचक्रुर्यथागतम्॥ उद्भावनमकुर्वन्तो विदुरस्य मते स्थिताः (भा० आदि० १४१।२१-२२)॥ उद्भावनं प्रमादः, अनवेक्षा, अप्रतिजागरः। अयमर्थो भाति। मानपि दुर्लभः शब्दमर्यादयेत्यवश्यप्रतिपत्तव्यम्। उद्भावयिता बन्धून्यग्भाव-यिता शत्रून् (दशकु०)। उद्भावयिता उन्नमयिता, उत्कर्षकः।

—भ्रम् (भ्रमु चलने, भ्रमु अनवस्थाने)। क्वचिद् उद्भ्रमते योगात् क्वचिद् विभ्रमते बलात् (रा० ३।६०।३६)। उद्भ्रमते उद्भ्रमति उत्पतति। उद्भ्रमामि विरहात् खलु तस्याः (नै० ५।१०८)। उद्भ्रमामि उन्माद्यामि। दृष्ट्वा स्वप्नगतं राममुद्भ्रमामि विचेतनः (रा० ३।३६।१६)। उद्भ्रमामि भ्रान्तं प्रलापं करोमि। धावत्युद्भ्रमति प्रमीलति पतत्युद्याति मूर्छत्यपि (गीत० ४)। उद्भ्रमति-पर्यटति। कम्लस्योद्भ्रान्तभृङ्गस्य च। उपरि

भ्रमन्तो भृङ्गा यत्र, तादृशस्येत्यर्थः। उद्भ्रान्तासिः=भ्रमितखड्गः। किञ्चिदुद्भ्रम्याब्रवीत्। उद्विज्येत्यर्थः।

—मथ् (मथे विलोडने)। प्रयोजयति चोन्माथं नित्यमस्तं गते रवौ (भा० शां० १३८।२३)। उन्माथः कूटयन्त्रं पशुमृगपक्षिबन्धनम्। सन्निपातावधूतैश्च प्रमाथोन्मथनैस्तथा (हरि० २।३०।३२)। उन्मथनम् उद्गृह्य (मल्लस्य) निपातनम्।

—मद् (मदी हर्षे)। उन्माद्यति स तु क्षिप्रं तं तु देवग्रहं विदुः (भा० वन० २३०।४७)। दश धर्मं न जानन्ति...मत्तः प्रमत्त उन्मत्तः (भा० उ० ३३।१०२)।

—मा (माङ् माने)। उदिमां मात्रां मिमीमहे (अथर्व० १८।२।४३)। उच्छब्देन मानस्योत्कर्षगुणोऽभिधीयते। तोल्यते उन्मीयते स्रुवादिनाऽवदीयते इति तोलम् (अथर्व० १।७।२) इत्यत्र सायणः। यज्ञस्य (सोमः) प्रमाभिमोन्मा प्रतिमा वेद्यां क्रियमाणायाम् (का० सं० ३४।१४)। उन्मा उन्मानमुत्सेधमानम्। या महती महोन्माना (अथर्व० ५।७।६)। उन्मानमूर्ध्वमानम्। महोच्छ्राया (निर्ऋतिः)।

—मिल् (मिल श्लेषणे)। उन्मिलन्ति कुहूः कुहूरिति कलोत्ताला: पिकानां गिरः (गीत० १।४७)। उन्मिलन्ति उच्चकैर्मिलन्ति सुष्ठु श्लिष्यन्ति इति विवक्षति। आश्चर्यमिव मिलेर्योग उदः प्रयोगः।

—मिष् (मिष स्पर्धायाम्)। निमिष्य नोन्मिषन्त्येव यावत्ते तस्य सैनिकाः (शि० भा० २१।५६)। नोन्मिषन्ति नेत्रे नोन्मीलयन्ति। उन्मिमेष तदा मुनिः (भा० पु०)। उक्तोऽर्थः। प्रलपन् विसृजन्गृह्णन् उन्मिषन्निमिषन्नपि (गीता० ५।९)। नेत्रोन्मेषं कुर्वन्नित्यर्थः। उन्मिषत्सु ग्रहग्रामणीषु (काद० १७६)। उद्यच्छत्स्वित्यर्थः। प्रलयान्तोन्मिषिते विलोचने (कु० ४।२)। उन्मिषिते उन्मीलिते। उन्मेषं यो मम न सहते जातिवैरी निशायाम् (का० प्र० १०)। उन्मेषो विकासः। सतां प्रज्ञोन्मेषः (भर्तृ० २।११४)। बुद्धिविद्योतः। विद्युदुन्मेषदृष्टिम् (मेघ० ८१)। विद्युदुन्मेषः=विद्युद्विलासः।

—मुच् (मुच्लृ मोक्षणे)। आर्तनादो हि यः पौरैरुन्मुक्तः (रा०)। उन्मुक्तः=विसृष्टः। उत्मुक्ताः शराः। उक्तोऽर्थः। भूषणान्युन्मुमुचुः क्षमायाम् (भट्टि० ३।२२)। उत्कृष्य त्यक्तवत्य इत्यर्थः। प्रत्यर्पिताः शत्रुविलासिनीनामुन्मुच्य सूत्रेण विनैव हाराः (रघु० ६।२८)। उन्मुच्य—आक्षिप्य, आच्छिद्य।

सत्यकञ्चुकमुन्मुच्य (भा० शा० २७।१७)। उन्मुच्य अवरोप्य, अवतार्य। लेखमुन्मुच्य (राज० ३।२३५)। उद्बन्धनं कृत्वेत्यर्थः।

—मृज् (मृजू शुद्धौ)। सर्वं तूष्णीमनुक्रामन्नुच्च मार्ष्टि अव च मार्ष्टि (बौ० श्रौ०)। ऊर्ध्वमुपरिष्टात् प्रमार्ष्टि प्रोञ्छति। अथ हुत्वोर्ध्वं ग्रहमुन्मार्ष्टि (श० ब्रा० ४।१।१।२४)। अनन्तरोक्तीरित एवार्थः।

—मृद् (मृद क्षोदे)। पादौ कुरु। उन्मृदानेति गम्यते (१।३।१ सूत्रे क्रियाविशेषक उपसर्ग इति वार्तिकभाष्ये)। विरजौ कुर्वित्यर्थः।

—मृश् (मृश आमर्शने, आमर्शनं स्पर्शः)। अथैनम् (अश्वम्) उन्मृशति (श० ब्रा० ६।३।३।१२)। उपर्यास्फालयति, आस्फालनपूर्वं विस्मयति, निरुद्ध-गतिं करोति। उदू षु णो वसो महे मृशस्व शूर राधसे (ऋ० ८।७०।९)। उन्मृशस्व = उन्मृश = आमर्शनपूर्वमुत्थापयेत्यर्थः। उन्मृश्या हैव द्यौरास (श० ब्रा० १।४।१।२२)। उन्मृश्या ऊर्ध्वं प्रेरितेन करेण स्पृश्या।

—यम् (यम उपरमे)। प्र वाता इव दोधत उन्मा पीता अयंसत (ऋ० १०।११९।२)। उदयंसत समैरिरन्। मां संरब्धमकुर्वन्नित्याह। ब्रह्माणस्त्वा शतक्रत उद्वंशमिव येमिरे (ऋ० १।१०।१)। उद्येमिरे प्रयुयुजिरे, प्रेरितवन्तः। उद्यच्छेध्मम् (श० ब्रा० ६।२।३।१)। उद्गृहाणेत्यर्थः। यो वा अप्रतिष्ठितो वज्रमुद्यच्छति नैनं शक्नोत्युद्यन्तुम् (श० ब्रा० १।१।१।१८)। उक्तोऽर्थः। वज्रमसुरेभ्य उदयच्छत् (ऐ० ब्रा० २।३१)। उदयच्छत् = अवागुरत। परस्य दण्डं नोद्यच्छेत् (मनु ४।१६४)। भारमुद्यच्छते उत्क्षिप्य वहतीत्यर्थः। वेद-मुद्यच्छति वेदाध्ययन उद्यमं करोतीत्यर्थः। साष्टाक्षरा गायत्री प्रातः सवन-मुदयच्छत् (ऐ० ब्रा० ३।२८)। उद्यमो निर्वाह इति षड्गुरु०। उद्यच्छन्यद्-वदादित्यस्तमः सर्वं व्यपोहति। तद्वत्कल्याणमातिष्ठन्सर्वं पापं व्यपोहति (अङ्गिराः)॥ उद्यन्, उदयमानः। कल्याणं प्रायश्चित्तम्। उद्यच्छमाना गम-नाय पश्चात् (रघु० १६।२९)। उद्यच्छमाना प्रयतमाना। एष लोकविनाशाय रविरुद्यन्तुमुद्यतः (भा० आदि० २४।१५)। उद्यन्तुमुद्यत उदयोन्मुखः। उद्गन्तु-मिति पाठान्तरम्। शक्या दैवगतिर्लोके निवर्तयितुमुद्यता (रा० ६।११०।२५)। उद्यता प्रारब्धा फलं प्रसोतुम्। अभिपन्नमिदं लोके राज्ञामुद्यतदण्डनम् (भा० शां० ३२।२०)। उद्यतदण्डनम् उद्धतदमनम्। पाठभ्रंशोऽत्र भाति। कुपितेन च राज्ञा तस्य प्राणेषूद्यतो दण्डः (दशकु०)। उद्यतो निपातितः। मधुमदोद्यमिता वनिता (कि० ९।६६)। समीरिता, प्रयुक्ता उद्दीपिता। ततोहं स्वयम् उद्यम्य हयांस्तान् वातरंहसः (भा० उ० १८२।१८)। उद्यम्य संयम्य। उद्यम्य

कुञ्जरं पार्थस्तस्थौ परपुरञ्जयः (भा० द्रोण० १४०।८५)। पाणिमुद्यम्य (शा० कविवचनम्)। बाहुमूर्ध्वं कृत्वा। उद्बाहुर्भूत्वा। उद्यम्याग्निमाहवनीय उद्यतहोमं जुहोति (आप० श्रौ० ७।२।६।५)। आहवनीयाज्ज्वलन्तमिध्म-मुद्गृह्णाति तद् उद्यमनम् इति धूर्तस्वामी। उद्यम्योद्यम्य मे दम्यौ विषमेणेव धावतः (भा० शां० १७७।११)। उद्यम्योत्प्लुत्येति नील०। तां चापदं घोरतरां प्रवदन्ति मनीषिणः। यदुद्यम्य महत्कृत्यं भयादपि निवर्तते (भा० सौ० ६। २५)॥ उद्यम्य उद्योगं प्रक्रम्य, कृत्यनिष्पत्तौ व्यापृत्य। स्वसारमुद्यम्य तदा जरत्कारुमृषिं प्रति (भा० आदि० ४०।७)। ऋषये जरत्कारवे देयेत्युद्यतो भूत्वा। नाशक्नोत् त्रिष्टुप् त्र्यक्षरा माध्यन्दिनं सवनमुद्यन्तुम् (ऐ० ब्रा० ३।२८)। उद्यन्तुम् =निर्वोढुम्। निर्वर्तयितुम्। यावच्च राजा पाञ्चाल्यो नोद्यमे कुरुते मनः (भा० आदि० २०२।१४)। उद्यमः सङ्ग्रामः। शिक्यपाशं प्रतिमुञ्चते षडुद्यामम् (का० श्रौ० १६।५।६)। उद्यामा रज्जवः। उद्यम्यते यैस्त इति व्युत्पत्तेः। स्रुगुद्यमननिपातनयोः (३।२।९ सूत्रे वार्तिकम्)। उद्यमनमुद्ग्रहणम्। आवर्जयत वैदेहीं दण्डस्योद्यमनेन च (रा० ५।२२।३८)। उद्यमनम् अवगूरणम्।

—या (या प्रापणे)। तद्विसृष्टाः खमुद्ययुः (कु० ६।९४)। उद्ययुरुत्पेतुः। पतत्युद्याति (गीत० ४।१९)। उद्याति उत्तिष्ठति। हाहाकारो न चोद्ययौ (राज० ८।१७१)। नोत्तस्थावित्यर्थः। विरोधोऽन्योन्यमुद्ययौ (राज० ४। ६८७)। उद्ययौ उत्पेदे संववृते। त्वामुद्यातितराम् (मार्क० ६९।६०)। सुदूरमतिशेते। उद्यानं ते पुरुष नावयानम् (अथर्व० ८।२।६)। उद्यानम् ऊर्ध्वं गमनम्, उद्गमनम्। मृत्युपाशादिति शेषः। उद्याने क्रियमाणे तु मत्स्यानां तत्र रज्जुभिः (भा० शां० १३७।१४)। उद्याने ग्रथने। उद्यान-मिति सांशयिकः पाठः। व्रतोद्यापनं व्रतसमाप्तिः। सर्वदोद्यापनं पार्थ पादपानां प्रशस्यते (भविष्ये)। अर्थे सन्देहः।

—याच् (टुयाचृ याच्ञायाम्)। मह्यमेतद् ददस्वेति तद्रत्नमुदयाचत (बृ० श्लो० सं० ५।४१)। उदयाचत बलवत्प्रार्थयत बाढमवरयत।

—यु (यु मिश्रणामिश्रणयोः)। उत् पूषणं युवामहेऽभीशूंरिव सारथिः (ऋ० ६।५७।६)। उद्युवामहे उद्योजयामः। महीनां पयो सि इति दर्भपुञ्जी-लाभ्यां नवनीतमुद्यौति (आप० श्रौ० १०।२१।१२)। उद्यौति उद्ध‍रति। विष्णोः स्तूपो सीति कर्षन्निवाहवनीयं प्रति प्रस्तरमपादत्ते नोद्यौति न प्रयौति

(आप० श्रौ० २।३।८।५) । नोद्यौति नोद्गच्छति । अग्निष्टे निशमयतु यदि ते मन उद्युतम् (अथर्व० ७।१११।२) । उद्युतं क्षुभितं विह्वलं व्याकुलम् । उद्यत-मिति सायणः पठति । ग्रहविकारेणोद्भ्रान्तमित्येवं च व्याख्याति ।

—युज् (युजिर् योगे) । स ह तत एव शर्यातो मानव उद्युयुजे नेदपरं हिनसानीति (श० ब्रा० ४।१।५।७) । उद्युयुजे उच्चचाल, गन्तुं दध्रे, गमनाय मनो दधे । तदहरेव पौर्णमासेन हविषेष्ट्वोद्युञ्जीरन् (लाट्या० श्रौ० १०।१६।६।७) । उद्युञ्जीरन् गन्तुमिति शेषः । यथा हस्ती हस्तिन्याः पदेन पद-मुद्युजे (अथर्व० ६।७०।२) । उद्युजे संयुनक्ति । अव्यवहितमनुसरति गजी-मित्यर्थः । भवन्तमभियोक्तुमुद्युङ्क्ते (दशकु० ३।) । उद्युङ्क्ते संनह्यते, उज्जृम्भते, यतते । उद्युक्तो विद्यान्तमधिगच्छति । उद्युक्त उद्योगपरायणः । आखण्डलोद्योजितकाण्डाः चण्डाम्बुवाहाः (प्र० च) । उद्योजिताः प्रेरिताः प्रणुन्नाः ।

—युध् (युध सम्प्रहारे) । ता (प्रजाः) अस्मा उदवायोधंस्तासां मन्युमवा-शृणात् (            ) । उदयोधन्=उदयुध्यन्त संप्रजिहीर्षया क्रोधप्रयुक्ता वा समासदन् । उद्योधन्त्यभि वल्गन्ति तप्ताः फेनमस्यन्ति बहुलांश्च बिन्दून् (अथर्व० १२।३।२९) । आप इति शेषः । उद्योधन्ति उद्युध्यन्ते ऊर्मिमत्य आपः संघट्टन्ते ।

—रञ्ज् (रञ्ज रागे) । यस्मान्मे मन उदिव रारजीति (अथर्व० ६।७१।२) । भृशं संरज्यते ।

—राज् (राजृ दीप्तौ) । यस्मान्मे मन उदिव रारजीति (अथर्व० ३।७१।२) । उद्रारजीति भृशमुद्दीप्यते ।

—रिच् (रिचिर् विरेचने) । उत् ते शतान्मघवन्नुच्च भूयस उत् सहस्राद् रिरिचे कृष्टिषु श्रवः (ऋ० १।१०२।७) । उद्रिरिचे=उद्रिक्तम्, अतिरिक्तं बभूव । ममैवोद्रिच्यते जन्म...तव जन्मनः (भा०) । उद्रिच्यते ततोऽतिशायि भवति । उदिन्वस्य रिच्यतेंऽशः (अथर्व० २०।५९।३) । अभ्यधिको भव-तीत्यर्थः । उत्तरोत्तरमेतेभ्यो वर्षमुद्रिच्यते गुणैः (भा० भीष्म० ६।३९) । उद्रिच्यते उत्कृष्टतरं भवति । शिखरैः खमिवोद्रिक्तैः । (रा० गोरे० २।१०३।४) । खमुद्रिक्तैर्गगनातिगैः । उद्रिक्तचेता महामना मनस्वी (कथा० ३२।७३) । अनुद्रिक्तावनूनौ (मार्क० पु० ४६।५) । अनुद्रिक्तौ=अनभ्यधिकौ । वाजिनोद्रेकेण दिशः प्रतियजति (भा० श्रौ० ८।४।३) । उद्रेकः शेषः । उद्रेकेण पशुबन्धवद् दिशः प्रतीज्य (आप० श्रौ० ८।१।३।१२) । उक्तपूर्व एवार्थः ।

स्थालीस्थमग्निसंयोगाद् उद्रेकि सलिलं यथा (वि० पु० २।४।८६)। उद्रेकि उत्सेकि उत्सेचनवत्।

—रुच् (रुच दीप्तावभिप्रीतौ च)। त्वमग्ने क्रतुभिः...उदरोचथाः (अथर्व० १३।३।२३)। उदरोचथा उच्चैरदीप्यथाः।

—रुध् (रुधिर् आवरणे)। मेधावी राजा सर्वेभ्यो माऽन्तेभ्य उदरौत्सीत् (श० ब्रा० १४।७।१।४१)। बहिष्पराणुदत्, बलाद् बहिरकरोत्। यो वै संवत्सरस्यावरोधनं चोद्रोधनं च वेद स वै स्वस्ति संवत्सरस्य पारमश्नुते (ऐ० ब्रा० ४।२२)। उद्रोधनमन्त्योंशः।

—लङ्घ् (लघि गतौ)। को हि स्वशिरश्छायां विधेश्चोल्लङ्घयेद् गतिम् (कथा० ५२।२११)। उल्लङ्घयेत् अतिक्रामेत्। अम्भोभिरुल्लङ्घित-तुङ्गरोधसः (नद्यः)। उक्तोऽर्थः।

—लप् (लप व्यक्तायां वाचि)। यानेव शब्दान् वयमुल्लपामः। उच्चारयामः, व्याहरामः। श्रुता मयाऽऽर्यपुत्रस्योल्लापाः (उत्तर० ३)। व्याहृतानि, वचनानि। खलोल्लापाः सोढाः कथमपि तदाराधनपरैः (भर्तृ० ३।६)। उल्लापा उपालम्भाः। काक्वा वर्णनमुल्लापः। (वैजयन्ती)।

—लम्ब् (रबि लबि अबि शब्दे लबि अवस्रंसने च)। पादेनैकेन गगने द्वितीयेन च भूतले। तिष्ठाम्युल्लम्बितस्तावद् यावत्तिष्ठति भास्करः (मृच्छ० २।११)॥ उल्लम्बित ऊर्ध्वं लम्बितः। उत्थित ऊर्ध्वकायः। राजद्वारि स चीरिकाम्...उदलम्बयत् (कथा० ५१।१३०)। उल्लम्ब्य तरौ क्षिप्रं वधकैर-वशो हतः (कथा० ६४।५३)। ऊर्ध्वं लम्बयित्वा।

—लस् (लस शब्दे, शिल्पयोगे च)। उल्लसद्विस्मयोत्सुक्यसाहस—(कथा० २२।१०८)। उल्लसद् आविर्भवत्, उत्पद्यमानम्। उल्लासितः खड्गः शूद्रकेणापि (हितोप०)। उल्लासित उद्भ्रमितः। उल्लासयन्त्यः श्लथ-बन्धनानि गात्राणि (ऋतु० ६।८)। उल्लासयन्त्य उत्क्षिपन्त्यः, नर्तयन्त्यः। न तेषां युगपद् राजन् ह्रास उल्लास एव वा (भा० पु० ७।१।७)। उल्लासो वृद्धिः।

—लाघ् (लाघृ सामर्थ्ये)। उल्लाघयत्यातुरमौषधं हि (तन्त्रा० २।३।८८)। समर्थं गदान्निर्गतं करोतीत्याह। अम्भोजानि धनाघनव्यवहितोप्यु-ल्लाघयत्यंशुमान् (राज० ४।३६५)। उल्लाघयति विकासयति।

—लिख् (लिख अक्षरविन्यासे)। दक्षिणेनान्वाहार्यपचनं सकृदुल्लिखति (श० ब्रा० २।४।२।१३)। रेखां करोतीत्यर्थः। दुर्योधनः स्मितं कृत्वा चरणेनो-

ल्लिखन्महीम् (भा० वन० १०।२६)। उल्लिखन्नुत्किरन्। भूमौ चोल्लिखति (का० श्र० ७।३।२८)। शृङ्गेण भूमौ रेखां करोतीत्येवार्थः। स (चित्रकृत्) स्तम्भं वीक्ष्य सुश्लक्ष्णं तत्र गौरीं समालिखत्। रूपकरोपि शस्त्रेण क्रीडयैवोल्लिलेख तम् (कथा० ३७।६)॥ उल्लिलेख उत्कीर्णवान्। अलौकिकत्वादमरः स्वकोषे न यानि नामानि समुल्लिलेख (त्रिकाण्ड०)। न समुल्लिलेख न उल्लिलेख न न्यास, नोज्जहार। अथाममलसीभूतं साध्यं त्वरितमुल्लिखेत् (अष्टाङ्ग० सूत्र० ८।१५)। उल्लिखेत् उद्वमेत्। जलद-संहतिमुल्लिखन्त्यः (शिशु० ५।२०)। विदारयन्त्य इत्यर्थः। खमिवोल्लिखन् (रा० ३।१५।२५)। मृद्नन्। समासादयन्नियर्थः। विषाणोल्लिखितस्कन्धः (हितोप० ३।१३६)। उल्लिखितो घृष्टः। संस्कारोल्लिखितो महामणिरिव क्षीणोपि न लक्ष्यते (शा० ६।५)। संस्कारः शाणः। संस्क्रियतेऽनेनेति। उल्लिखितो घृष्टः; तीक्ष्णीकृतः, निशायितः। इति स्वहस्तोल्लिखितश्च मुग्धया रहस्युपालभ्यत चन्द्रशेखरः (कु० ५।५८)। उल्लिखित आलिखित चित्रेऽर्पितः। शृङ्गाभ्यां तदुदरमुल्लिख्य (पञ्चत०)। विदार्येत्यर्थः। स्वश्रृङ्गाग्रप्रहारेण तस्योदरमुल्लिख्य तस्मात्कथमप्युत्थितः (तन्त्रा० १।१३)। उक्तोर्थः। विरुद्धक्रियोल्लेखे समं तद् वृत्त्यसम्भवे (भामह-विवरणे सन्देहसंकरोदाहरणम्)। उल्लेखो वर्णनम्। संमार्जनोपाञ्जनेन सेकेनोल्लेखनेन च। गवां च परिवासेन भूमिः शुध्यति पञ्चभिः (मनु० ५।१२४)॥ उल्लेखनेन खात्वा कतिपयमृदपनयनेन। मासपञ्चतिथीनां च निमित्तानां च सर्वशः। उल्लेखनमकुर्वाणो न तस्य फलभाग्भवेत् (शब्दकल्पद्रुमे समुद्धृतं तिथ्यादितत्त्वम्)। उल्लेखनं कीर्तनम्। लङ्घनोल्लेखने शस्ते (चरके चि० २१।४४)। उल्लेखनं वमनम्। क्षुत्तृष्णोल्लेखनस्वेदरूक्षपानान्नभेषजम् (अष्टाङ्ग० सूत्र० १६।३३)। उक्तोऽर्थः।

—लिह् (लिह आस्वादने)। मणिः शाणोल्लीढः समरविजयी हेतिनिहितः (भर्तृ० २।३५)। तीक्ष्णीकृत इत्यर्थः।

—ली (लीङ् श्लेषणे)। जटाभिरुल्लापयते। पूजामधिगच्छतीत्यर्थः। श्येनो वर्तिकामुल्लापयते। न्यक् करोति अभिभवति, उदाकुरुते। बालमुल्लापयते। वञ्चयते विप्रलभते। इति पा० १।३।७० इत्यत्र वृत्तावुदाहृतयः। ततस्तां चिबुके शौरिरुल्लापनविधानवित् (वि० पु० ५।२०।६)। उल्लापनविधानम् ऋजूकरणविधिः।

—लुप् (लुप्लृ छेदने)। घृतादुल्लुप्तं मधुना समक्तम् (अथर्व० ५।२८।१४)। उल्लुप्तं बलादुद्धृतम्।

—लोक् (लोकृ दर्शने)। दूराद् ददर्श नृपतिः स वनस्पतीन्द्रमुल्लोक्यमानमधिराजमिवान्यवृक्षैः (अवदा० महाकपिजा० ७)। उल्लोक्यमानम् ऊर्ध्वं विलोक्यमानम् उद्वीक्ष्यमाणम्। अप्यत्र ज्ञायन्ते पुत्रकृतका वृक्षाः। जानामि जानामि। अवलोकितपत्रका उल्लोकयितव्याः सम्प्रति संवृत्ताः (प्रतिमा० ७)। उल्लोकयितव्या ऊर्ध्वमुत्क्षिप्य दृशं द्रष्टव्याः। स्थाने कवेरुदः प्रयोगः।

—वच् (वच परिभाषणे)। यथेन्द्र उद्वाचनं लब्ध्वा (अथर्व० ५।८।८)। उद्वाचनः कश्चिदसुरः।

—वद् (वद व्यक्तायां वाचि)। अथैक उद्वदति (श० ब्रा० ३।२।१।३६)। उद्वदति उच्चैर्वदति। अधस्पदान्म उद्वदत मण्डूका इवोदकात् (ऋ० १०।१६६। ५)। यावन्तो यज्ञायुधानामुद्वदतामुपाशृण्वन् (तै० ब्रा० ३।२।५।६)। औलूखलानुद्वादयते (श० ब्रा० ४।३।३।१६)। उच्चैर्वादयते इत्यर्थः। प्रणीतासु प्रणीयमानासु वाचं यच्छत्या हविष्कृत उद्वादनात् यदि वदेद् वैष्णवीं जपेत् (वै० श्रौ० २।२।३)। उद्वादनमुच्चैर्भाषणम्।

—वप् (डुवप बीजसन्ताने)। असुरास्त्वा न्यखनन् देवास्त्वोदवपन् (अथर्व० ६।१०६।३)। उदवपन् उदहरन्। प्राचः पांसूनुद्वपति (का० श्रौ० ६। २।१०)। अवटात् प्राच्यां निष्कासयति। लाङ्गलमुदिद् वपतु गामविम् (अथर्व० ३।१७।३)। उद्वपतु उत्खनतु। देवस्त्वा सवितोद्वपतु सुपाणिः स्वङ्गुरिः सुबाहुरुत शक्त्या (वा० सं० ११।६३)। उद्वपतु परास्यतु (भस्म तावकमित्यभिप्रैति)। निखातं वसूदिद् वपति दाशुषे (ऋ० ८।५५।४)। उद्वपति उदस्यति, उत्क्षिपति। यद् विद्वांसा निधिमिवापगूह्ळमुद्दर्शतादूपथुर्वन्दनाय (ऋ० १। ११६।११)। उदूपथुः=उद्वापं चक्रथुः। कथं हि लाङ्गलमुद्वपेदन्यत्र धान्यविक्रयात् (वसिष्ठ० २।३६)। उद्वपेत्=उत्पाटयेत्। गवादीनिति शेषः।

—वम् (टुवम उद्गिरणे)। गुणा अनुक्ता अपि ते स्वयं यान्ति प्रकाशताम्। छाद्यमानापि सौगन्ध्यमुद्वमत्येव मालती (तन्त्रा० २।१७)॥ उद्वमति निष्ठीव्यति उद्गिरति परिमलमित्याह। सा···तत्-संश्रुतौ वरौ। उदववामेन्द्रसिक्ता भूबिलमग्नाविवोरगौ (रघु० १२।५)। कर्कोटो विषं तीक्ष्णं मुखात्सततमुद्वमन् (भा० वन० ७२।३०)। समावुद्वान्तनिर्मदौ (अमरः)। हस्तिनमुद्दिश्य वचनम्। निर्मदो गज उद्वान्त उच्यत इत्यर्थः।

—वस् (वस निवासे)। चरुं श्रपयित्वाऽभिघार्योद्वासयति (श० ब्रा० २।५।३।५)। अग्नेः सन्तापादपनयति। अधः श्रयतीत्यर्थः। अथैतदाज्यमधि-

श्रित्योदगुद्वासयेत् (गो० गृ० १।७।२७)। उक्तोऽर्थः। उद्वासयन्ति पशुम् (श० ब्रा० ३।८।३।६)। अपाकुर्वन्ति, व्याकुर्वन्ति, अपनयन्ति। स दैवतगणांल्लोकानुद्वासयति दर्पितः (हरि० १।५८।२५)। उद्वासयति विनाशयति, विध्वंसयति, उद्वर्तयति। किमुद्वास्यमानं किमुद्वासितम् (श० ब्रा० ११।५।३।२)। अग्नेः सकाशाद् दूरं नीयमानम्। राक्षसोद्वासितां नगरीम् (हरि० ६२६६)। उज्जासितामित्याह। स्वभवनं राक्षसैरिवोद्वासितम् (अवदा० अविषह्य० जा०)। उक्तोऽर्थः। (अहीन्द्रम्) ह्रदाद् प्रसह्योद्वास्य (भा० पु० १०।२६।१२)। उद्वास्य निर्गृह्य, निर्गमय्य। समानमा हविषामुद्वासनात् (भा० श्रौ० ६।१७।७)। उद्वासनमधः श्रयणम्। गार्हपत्य आज्यमधिश्रित्योद्वास्य (श० ब्रा० १२।४।४।७)। उद्वास्य=अपनीय। पृथक् कृत्वा। अत्रोद्वासनमाहवनीयश्रापिणः (का० श्रौ० २।७।२४)। उद्वासनमग्नेरपनयनम्। न स्युर्विटा अथ कुतर्कपथस्थिताश्च नित्योद्वसेषु निरयेषु मृगाश्चरेयुः (राज० ५।३७६)। उद्वसो निर्वास्तव्यः, अनध्युषितः। उद्वसेष्विति निरयविशेषणम्।

—वह् (वह प्रापणे)। समाप्यामूद्वहन्ति (गो० गृ० २।२।१७)। ऊद्वहन्ति=उद्वहन्ति=प्रापयन्ति=नयन्ति=उद्गृह्य उच्चित्य नयन्तीत्यर्थः। उत्त्वा वहन्तु मरुतः (अथर्व० १८।२।२२)। उन्नयन्तु, उत्कर्षन्त्वित्यर्थः। उत्तरा यज्ञा ब्रह्मपूता वहन्ति (अथर्व० १३।१।४३)। ऊर्ध्वं नयन्तीत्याह। अपः समुद्राद् दिवमुद्वहन्ति (अथर्व० ४।२७।४)। उक्तोऽर्थः। उदु त्यं जातवेदसं देवं वहन्ति केतवः (ऋ० १।५०।१)। उदितचर एवार्थः। युवं भुज्युमव-विद्धं समुद्र उदूहथुरर्णसः (ऋ० ७।६९।७)। उदूहथुः=उज्जह्रथुः। श्यावाश्वमार्चनानसं सत्रमासीनं धन्वोदवहन् (पञ्च० ब्रा० ८।५।९)। उदवहन् उदगमयन्। उद्वहेयं भुजाभ्यां हि मेदिनीमम्बरे स्थितः (रा० ३।५५।६)। उत्थापयेयमित्यर्थः। उद्ववाह शरान्धोरान्रावणस्य सुतं प्रति (रा० ६।७०।६)। उद्ववाह=उदुवाह तूणीरान्निश्चकर्ष रावणि प्रत्यसिष्यामीति। श्रियमुद्वहति मुखं वालातपरक्तकमलस्य (विक्रम० ४।४२)। उद्वहति धत्ते। काषायमुद्वहति यो न च निष्कषायः (सौन्दर० ७।४६)। उद्वहति, धत्ते, परिधत्ते, वस्ते। अपक्रमेद्धि कालज्ञः समर्थो युद्धमुद्वहेत् (हरि० २।३९।८)। निर्वहेद् आचरेदित्याह। उद्वहेत द्विजो भार्यां सवर्णां लक्षणान्विताम् (मनु० ३।४)। उद्वहेत्=परिणयेत्, उपयच्छेत, परिगृह्णीत। नोद्वहेत्कपिलां कन्याम् (मनु० ३।८)। उक्तोऽर्थः। तमुद्वहन्तं पथि भोजकन्याम् (रा० ७।३५।७०)। उद्वहन्तमपहरन्तम् अपवाहयन्तम्। तेषां तंसुर्महावीर्यः पौरवं वंशमुद्वहन् (भा० आदि०

६४।१५)। उद्वहन् उन्नयन् । उदूढलोकत्रितयेन (शिशु० १।३६)। उदूढं धृतम् । आत्मानमुद्वोढुमशक्नुवन्यः (रघु० १६।६०) । उद्वोढुमवलम्बितुम् उत्तम्भितुम्। अथोद्वाहः । तत्र वरस्य गृहे बध्वा नयनम् । तद्यथा वधूवरौ यानमारोहयति (अथर्ववेदीय चतुर्दशकाण्डभूमिकाया उपक्रमे सायणः) । स्त्रियाश्चोद्वहने (पा० गृ० १।१०) । अनन्तरोदित एवार्थः । भारोद्वहनखिन्नाश्च तथेमे रथवाजिनः (रा० ६।८६।१५) । उद्वहनं कर्षणम् । भविष्यन्ति सुता राजंश्चत्वारस्ते कुलोद्वहाः (रा० १।१३।५६) । कुलोद्वहा वंशसमुन्नतिकराः । अभिपन्नस्तु राजेन्द्र स न्वो वृष्णिकुलोद्वहः (भा० वन० १६।१८) । वृष्णिकुलोद्वहो वृष्णिदायादः, वृष्णिवंशसन्तानः । शवोद्वहमु ह तं मन्यन्ते यस्तानि प्रतिगृह्णाति (श० ब्रा० १२।५।२।१४) । शवानां कुणपानां वोढारम् । यदा गतोद्वाहमकूजनाक्षं सुवर्णतारं रथमाततायी (भा० उ० ४८।२८) । गतोद्वाहमपगतोद्वृत्तगतिमनुकूलगतिमित्यर्थः । उत्तीर्णो वा कथं भीमाः सरितः कूलमुद्वहाः (भट्टि० ४।२२) । कूलमुद्वहास्तटाप्लाविनीः, रोधः प्रवाहिणीः ।

—वा (वा गतिगन्धनयोः) । अग्निर्वा उद्वान् वायुमनुप्रविशति (ऐ० ब्रा० ८।२८) । वातवेगेन निर्वाणतां गच्छन्नित्याह । उद्वानमुपशमनम् ।

—विज् (ओविजी भयचलनयोः) । अपां वेगासः पृथगुद् विजन्ताम् (अथर्व० ४।१५।३) । उद्विजन्तामुच्चलन्तु । इह विजिः शारीरे चलने कम्पने वर्तते, लोके तु मानसे प्रायेण । शयानस्य हि ते भूमौ कस्मान्नोद्विजते वपुः (हरि० २।३१।३५) । भयान्न वेपत इति विवक्षति । न प्रहृष्येत्प्रियं प्राप्य नोद्विजेत् प्राप्य चाप्रियम् (गीता० ५।२०) । उद्विजेत् = उद्विजेत = ग्लायेत्, विमनायेत । संमानाद् ब्राह्मणो नित्यमुद्विजेत विषादिव (मनु० २।१६२) । उद्विजेत त्रस्येत्, बिभीयात् । कच्चिन्नोग्रेण दण्डेन भृशमुद्विजसे प्रजाः (भा० सभा० ५।४४) । उद्विजसे उद्वेजयसि, त्रासयसि, भाययसि । अन्तर्भावितण्यर्थकोत्र विजिः । प्रायेणाकृतकृत्यत्वान्मृत्योरुद्विजते जनः । बिभेतीत्यर्थः । उद्वेजयति भूतानि क्रूरवाग् धनदोपि सन् (का० नी० सा० ३।२३) । वित्रासयति उत्त्रासयति । उद्वेजयति सूक्ष्मोपि चरणं कण्टकाङ्कुरः । व्यथयतीत्यर्थः । उद्वेजयति जिह्वाग्रं कुर्वंश्चिमचिमां कटुः (वाग्भट० १०।५) । सुश्रुते (२।२२।१४) नष्टसंज्ञस्य (जलप्रोक्षणेन) संज्ञाप्रतिलम्भनेऽर्थे उद्विजेः प्रयोगो ण्यन्तस्य । नोद्विग्नश्चरते धर्मं नोद्विग्नश्चरते क्रियाम् (भा० आदि० ४१।२८) । उद्विग्नोऽशान्तः, अस्वस्थचित्तः । नायमुद्विजितुं कालः स्वामिकार्याद् भवादृशाम् (भट्टि० ७।६२) । उद्विजितुं विचलितुम्, आत्मानं परिहर्तुम् ।

—वी (वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु) । वञ्चो धावन्ती वैश्वानर उद्वीता (ब्रह्मगवी) (अथर्व० १२।५।१८) । उद्वीता उदजिता ।

—वृ (वृञ् वरणे)। वेगं चक्रे महावेगः क्रोधादुद्वृत्यचक्षुषी (भा० द्रोण० २१।१५) । उद्वृत्य विस्फार्य उत्पाट्य ।

—वृत् (वृतु वर्तने) । तं यत्र देवा अघ्नंस् तस्य मूर्धोद्ववर्त (श० ब्रा० ४।४।३।४) । विपफाल, विदीर्णतां जगाम। नास्यास्माल्लोकात्प्रजोद्वर्तते (श० ब्रा० १४।५।१।५) । नोद्वर्तते नोत्सीदति, नावसानमुपैति । यदा वृक्ष आविर्मूलो भवत्यथोद्वर्तते (ऐ० आ० २।३।६।१०) । उद्वर्तते शीर्यते, निपतति, पराभवति । अपां फेनेन नमुचेः शिर इन्द्रोदवर्तयः । (ऋ० ८।१४।१, वा० सं० सं० १६।७१) । उदवर्तयः=अच्छिनः । उत्पूर्वो वृतिश्छेदने वर्तत इत्युवटः । अथ चेद्वेदनां दद्यात्तिलैरुद्वर्तयेत्ततः (का० सं० चि०) । उद्वर्तयेत्, मर्दयेत् । देव्यङ्गमुद्वर्तयते कराभ्याम् । (वामन पु० ५४।५७) । उक्तोऽर्थः । उद्वर्ततामन्तकाले समुद्राणामिव स्वनः (हरि० १३६७६) । उद्वर्ततां क्षुभ्यतां क्षोभमाणानां क्षुभ्नताम्, आन्दोल्यमानानाम् । मुखजेनाग्निना क्रुद्धो लोकानुद्वर्तयन्निव (भा० वन० २०४।२७, हरि० १।११।५१) । उद्वर्तयन् उज्जासयन् प्रध्वंसयन् । उद्वर्तयिष्यंस्त्रिदशेन्द्रसेनाम् (हरि० ३।५१।६१) । उन्मूलयिष्यन्नित्यर्थः । अपामुद्वृत्तानामुपदिशन्त्या स्थितिपदम् (मुद्रा० ३।८) । मर्यादातटमतिक्रम्य वहमानानाम् इत्यर्थः । मकरालयाश्चोद्वृत्तवेलाः (वामनपु० ६१।६) । अतिक्रान्तमर्यादा इत्याह । वारयामास संक्रुद्धो वेलेवोद्वृत्तमर्णवम् (भा० द्रोण० १६५।२३) , उद्वृत्तोऽतिप्रवृद्धोदकोच्चयः । नामृष्यत महाबाहुः क्रोधादुद्वृत्तलोचनः (भा० द्रोण० १३१।४२) । उद्वृत्तलोचनो विस्फारिताक्षः, उत्क्षिप्तप्रेक्षणः । उद्वृत्तनाभि...विद्यात् (कौ० अ० ४।६) । उद्गतनाभिमित्यर्थः । मेघाविव यथोद्वृत्तौ दक्षिणोत्तरवर्षिणौ (भा० शल्य० १०।१०) । उद्वृत्तौ= उत्थितौ । गर्जन्तमुद्वृत्तशिताग्रदंष्ट्रम् (रा० ६।५६।६५) । उद्वृत्ता (दंष्ट्राः) उन्नता उदञ्चिताः । सुश्रुते (२।२७४।१७) उद्वृत्तमित्युच्छूनमप्याह । उद्वृत्तं सततं लोकं राजा दण्डेन शास्ति वै (भा० आदि० ४१।२७) । उद्वृत्तमत्याचारम् अपचरितवन्तम् । उच्छृङ्खलम् । अद्य ते बलमुद्वृत्तं शमयेग्निमिवाम्भसा (रा० ४।६।७८) । उद्वृत्तमुद्धतं दृप्तम् । क्वचित् उद्वृत्तमृगपतिनादभीतेव कण्टकिता...भूमिः (काद० विन्ध्याटवीवर्णने) । उक्तोऽर्थः । उद्वर्तितेक्षणः (कथा० २६।८०) । उच्छूननेत्रः । व्यायाम-

क्षुण्णगात्रस्य पद्भ्यामुद्वर्तितस्य च (पा० ६।१।६३ सूत्रे वृत्तौ)। उद्वर्तितः कारितचेष्टः। अरण्यरुदितं कृतं शवशरीरमुद्वर्तितम् (तन्त्रा० १।८।१०५)। उद्वर्तितमुत्खातम्। उद्वर्तितमिदानीं प्रियसख्या रसान्तरेण लज्जालुत्वम् (महावीर० २)। उद्वर्तितमरोहितं व्यावर्तितम् व्यपवर्तितम्। उद्वृत्य नयने क्रुद्धो दिधक्षुरिव पाण्डवान् (भा० शल्य० ३२।४५)। उद्वृत्य = उत्क्षिप्य। अब्रवीत्तुभ्यं (=तव) क्रोधादुद्वृत्य चक्षुषी (भा० भीष्म० ५८।४१, द्रोण० २१।१५)। उक्तोऽर्थः। विघूर्ण्य चोद्वर्त्य च सागराम्भः (अवदा० जा० ३२)। उद्वर्त्य = उच्छाल्य। चटुलशफरोद्वर्तनप्रेक्षितानि (मेघ० ४२)। उद्वर्तनानि उत्प्लुतयः, इतस्ततः उच्चलनानि। अतितीक्ष्णश्च काकश्च (भा० उ० ३५।४७)। अत्र नीलकण्ठ आह — काकः काकवत् क्षतोद्वर्तनेन दुःखितस्यापि दुःखप्रद इति। इहोद्वर्तनेन चञ्च्वा प्रतोदनमुत्करणमुत्खननं वाऽभिप्रेतम्। या न जातु स्वयं पिंषे गात्रोद्वर्तनमात्मनः (भा० वि० २०।२३)। गात्रमुद्वर्त्यते उत्साद्यते मलं त्याज्यतेऽनेनेति सुरभिचन्दनादिमर्दनद्रव्यम्। नाक्रामेद् रक्तविण्मूत्रष्ठीवनोद्वर्तनादि च (याज्ञ० १।१५२)। उक्तोऽर्थः। वरोद्वर्तनार्थं चन्दनं समर्पयामि। इहोद्वर्तनं लेपक्रियामाचष्टे। उद्वर्तनमुत्सादनम् इत्यमरः। उद्वर्त इव सत्त्वानां समुद्राणामभूत् स्वनः (रा० ६।४४।१८)। उद्वर्तः संवर्तः, सम्प्लवः, प्रलयकालः। उद्वर्तः प्रमाणमुदाहरणं वा ग्रन्थान्तरादुद्धृतम्। उद्वर्तो हि ग्रन्थः समधिकफलमाचष्ट इति शब्दकल्पद्रुमे।

—वृह् (वृहू उद्यमने)। उद् वृह रक्षः सहमूलमिन्द्र (ऋ० ३।३०।१७)। उद्वृह = उद्धर। स चापि केशौ हरिरुद्ववर्ह शुक्लमेकमपरं चापि कृष्णम् (भा० आदि० १९७।३२)। उद्ववर्ह = उज्जहार। उद्बबर्हात्मनश्चैव मनः सदसदात्मकम् (मनु० १।१४)। उद्धृतवानित्यर्थः। शम्ये उद्वृहति (श० ब्रा० ३।३।४।२५)। उक्तोऽर्थः। विनिः श्वसंश्चासिमुद्ववर्ह (भा० कर्ण० ७०।२३)। उत्खातवान्, कोषादाकृष्टवान्। उद्ववर्ह सितं खड्गमाददानः शरावरम् (भा० द्रोण० १४।५६)। कोशादसिं काञ्चनभक्तिचित्रं बिलादिवाशीविषमुद्ववर्ह (बुद्ध० ६।५६)। उद्यतवान्, निरकृक्षत्। असीनुदववृहुर्दीप्तान् (भट्टि० १४।८)। उक्तोऽर्थः। उदववर्ह शरं नीलस्तस्य गात्रगतं तदा (रा० ४।२३।१७)। उज्जहारेत्यर्थः। अथ नीवीमुद्वृह्य नमस्करोति (श० ब्रा० २।४।२।२४)। जघनवासोग्रन्थिं विस्रंस्येत्यर्थः।

—वे (वेञ् तन्तुसन्ताने)। आदित्यं पञ्चभी रश्मिभिरुदवयन् (तै० ब्रा० १।२।४।२)। उदवयन् उदनह्यन्, उच्चैर्भागेऽबध्नन्नित्यर्थः।

—वेप् (टुवेपृ कम्पने)। द्यावापृथिवी हविषि गृहीत उदवेपेताम् (तै० ब्रा० ३।२।४)। उदवेपेताम् उदकम्पेताम्, बलवद् अव्यथेताम्। गृहीतहविष्कः किं वोद्दिश्य यक्ष्यतीत्यज्ञानाल्लोकयोः कम्पः प्राप्त इति सायणः। उद्वेपते ते हृदयं मनस्ते प्रतिसीदति (भा० उ० ७५।१८)।

—वेष्ट् (वेष्ट वेष्टने)। छिन्ना भुजाः...उद्वेष्टन्ते विचेष्टन्ते पतन्ति चोत्पतन्ति च (भा० कर्ण ५२।२५)। उद्वेष्टन्ते उच्छ्रिता भवन्ति। महाभुजगसंकाशा बाहवः परिघोपमाः। उद्वेष्टन्ति विचेष्टन्ति संचेष्टन्ति च सर्वशः (भा० द्रोण० ८९।१९)॥ उक्तोऽर्थः। पिण्डिकोद्वेष्टकट्यूरुपाद रुक्-सदनानि च (चरक० चि० १६।१४)। पिण्डिकोद्वेष्टः पिण्डिकापीडा। जङ्घापिण्डनिस्तोदः।

—वै (ओवै शोषणे)। यदा वा अग्निरुद्वायति (छां० उ० ४।३।१)। उद्वायति शाम्यति। अथ चेत् सर्वेऽग्नय उद्वायेयुः किं वा ततो भयमागच्छेत् (गो० ब्रा० पू० ३।१३)। यस्याहवनीयेऽनुद्वाते (अनुद्वाने) गार्हपत्य उद्वायेत्। उक्तोऽर्थः।

—व्यध् (व्यध ताडने)। शिखरैः खमिवोद्विद्धैः (रा० २।६४।४)। गगनोल्लेखिभिरित्याह।

—व्रज् (वज व्रज गतौ)। अध्यायमुदव्रजत् (पञ्च० ब्रा० १२।११।१०)। अध्ययनाय निरगादित्यर्थः।

—शल् (शल गतौ)। उच्छलच्छीकराच्छाच्छनिर्झराम्भःकणोक्षितः (काव्या० १।४८)। उच्छलन्त उद्गच्छन्त उत्पतन्तः (कणाः)।

—शिष् (शिष असर्वोपयोगे)। मामीषां कञ्चनोच्छिषः (वा० सं० १७।४५)। माऽवशिष्टं कुर्वित्याह। एतदेव तत उच्छिष्यते वागित्येव (ऐ० ब्रा० ५।३)। परिशिष्यते, उर्वरितं भवतीत्यर्थः। येषां दाराः प्रतीक्षन्ते सुवृष्टिमिव कर्षकाः। उच्छेषपरिशेषं हि तान्भोजय युधिष्ठिर (भा० अनु० १३।४६)॥ उच्छेषं भवतशेषम् उच्छिष्टम्।

—शी (शीङ् स्वप्ने)। तद्ये एते अभितः। पुच्छकाण्डं शिखण्डास्थे उच्छयाते (श० ब्रा० ४।५।७।५)। उच्छयाते उद्गते भवतः।

—श्रथ् श्रन्थ् (श्रथ श्लथ हिंसायाम्, श्रन्थ विमोचनप्रतिहर्षयोः)। उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय (अथर्व० ७।८३,३। १८,

४।६६) । उच्छ्रयाय = उच्छ्रथान = ऊर्ध्वमुन्मोचय । पाशभेदेन क्रियाया-मुपसर्गभेदोऽतिहृदयङ्गमः । उत्तममूर्ध्वभागे स्थितं पाशमुच्छ्रथानेत्याह, अधो-भागे स्थितमवाचीनमवश्रथानेति, मध्यमं च विश्रथानेति ।

—श्रि (श्रिञ् सेवायाम्) । उच्छ्रयस्व महते सौभगाय (ऋ० ३।८।२) । वर्धस्वेत्यर्थः । उच्छ्रयस्व वनस्पते वर्ष्मन् पृथिव्या अधि (ऋ० ३।८।३) । प्रांशुर् उन्नतो भवेत्याह । इहोभयत्रोत्पूर्वः श्रयतिरकर्मकः । तमुच्छ्रयति । उच्छ्रयस्व वनस्पत ऊर्ध्वः (श० ब्रा० ३।२।१।३५) । उच्छ्रितं करोतीत्यर्थः । उच्छ्रयस्व बहुर्भव (अथर्व० ६।१४२।६) । उत्तिष्ठेत्याह (धान्यं यवमभि-सम्बोध्य) । ऊर्जस्वती घृतवती पयस्वत्युच्छ्रयस्व (अथर्व० ३।१२।२) । उद्गता भवेत्याह । विजयसहजमस्त्रे वीर्यमुच्छ्राययिष्यन् (महावीर० १।८) । वर्ध-यिष्यन्नित्यर्थः । ध्वजमुच्छ्रयति । उन्नमयतीत्यर्थः । द्विपाद उच्छ्रिताश्चेरुः (श० ब्रा० ३।७।३।१) । उत्थिताः सन्तः चक्रमुः । भुजावुच्छ्रित्य शस्त्रं च शब्देन महता ततः (भा० शल्य० १२।२८) । उच्छ्रित्य उत्क्षिप्य उद्यम्य प्रगृह्य, उन्नमय्य । उच्छ्रित्य बाहू दुःखार्ता ताश्चान्याः प्रापतन्भुवि (भा० आश्व० ६६।२७) । दुःखार्ता पृथा । उक्तोऽर्थः । शक्यं चानेन किञ्चिदेव काष्ठमुच्छ्रित्यानुच्छ्रित्य वा पशुरनुबन्धुम् । (भाष्ये पस्पशायाम्) । उच्छ्रित्य सन्तक्ष्य । दम्भो धर्म नोच्छ्रयः (भा० वन०) । उच्छ्रय उन्नयनम् । शक्रपाते तथोच्छ्रये (याज्ञ० १।१४७) । शक्रध्वजस्यावरोपणदिवसे उच्छ्रायदिवसे चाहोरात्रमनध्याय इति स्मरत्गुपिः । दोषोच्छ्रयोपशान्त्यर्थम् (सुश्रुत० २।४।१४) । उच्छ्रयोऽभ्युत्थानमुपचयः । कियानस्यागारस्योच्छ्रायः (इति वयम्)। ऊर्ध्वमानम्, उत्सेध इत्यर्थः । ययौ च तत्प्रवहणं क्षणमूर्ध्वमधः क्षणम् । उच्छ्रायपातपर्यायं धनिनां दर्शयन्निव (कथा० २५।४४) ॥ उच्छ्रायः समुन्नतिः । मूले दर्शयद् इत्युचितम् । तथा सति च्छन्दोभङ्गप्रसङ्ग इत्यन्यत् । अनित्य-पतनोच्छ्राया विचित्रा भाग्यवृत्तयः (राज० ५।२६२) । उच्छ्राय उत्पतनम् ।

—श्रु (श्रु श्रवणे) । तस्मिन्मृते न दोषोस्ति द्वयोरुच्छ्रावणे कृते (याज्ञ० ३।२२७ मिताक्षरायामुद्धृतं विष्णुवचनम्) । उच्छ्रावणमुच्चैः श्रावणम् ।

—श्वञ्च् (श्वच श्वचि गतौ) । उच्छ्वञ्चस्व पृथिवि मा निबाधथाः (अथर्व० १८।३।५०) । उच्छूनावयवा पुलकिता भवेति सायणः ।

—श्वस् (श्वस प्राणने) । कुतो वायं प्रश्वसिति उच्छ्वसित्यपि वा पुनः (भा० आश्व० २०।४२) । वैरूपाक्षमारभ्योच्छ्वसेत् (खा० गृ० १।२।२१) । निरुद्धप्राणः स्यादित्यर्थः । नाद्याप्युच्छ्वसिति (उत्तर० ३) । सुखानु-

मूतेर्गमकं निश्वासं न करोति । न प्रकृतिं प्रत्यापद्यत इति त्वार्थिकोऽर्थः । त्वत्सन्निधावुच्छ्वसितीव चेतः (कि० ३।८) । उच्छ्वसिति हृष्यति मोदते । नोच्छ्वसिति तपनकिरणैः कुमुदम् (विक्रम० ३।१६) । नोच्छ्वसिति न विकसति । नोन्मीलति । आत्मेच्छया न शक्यमुच्छ्वसितुमपि (काद० १७५) । उच्छ्वसितुं प्राणितुम् । उच्छ्वो नार्थे विशेषं करोति । उच्छ्वसितालकं मुखम् (रघु० ८।५५) । विकीर्णचूर्णकुन्तलम् । पर्याकुलमूर्धजम् । किञ्चित्-समुच्छ्वसितपत्रलेखम् (कु० ३।३८) । समुच्छ्वसितं प्रमार्जितम् । केयूर-बन्धोच्छ्वसितैर्नुनोद (रघु० ६।६८) । उच्छ्वसितानि स्फुरणानि स्पन्दनानि । दशमुखभुजोच्छ्वासित-प्रस्थसन्धेः (मेघ० वा ६०) । उच्छ्वासितः शिथिलितः । एकोच्छ्वासात्ततः कुण्डं पिबति स्म महागलः (भा० आदि० १२८।७१) । एकोच्छ्वासात् सकृन्निश्वस्य, सकृद्ववानन्नित्यर्थः । यदि सुरभिमवाप्स्यस्तन्मुखो-च्छ्वासगन्धम् (विक्रम० ४।६४) । अश्रु च कपोलपतितं दृश्यमिदं वर्णकोच्छ्वा-सात् (शा० ६।१५) । उच्छ्वास उच्छूनता, स्फीतता । जलोच्छ्वासाः परीवाहा इति कोषः । तटाकादेरुत्पीडकस्य जलातिरेकस्य निर्गमद्वाराणि ।

—सञ्ज् (षञ्ज सङ्गे) । उत्सक्ताः पाण्डवा नित्यं तेभ्योऽसूये द्विजोत्तम (भा० आदि० १४०।३) । उत्सक्ताः=उत्कर्षेण सर्वत्र व्याप्ताः । उत्सङ्गो ऽङ्को भवति । पुत्रपूर्णोत्सङ्गा । सौधोत्सङ्गः । राजसदनतलम् । स हि (व्रणः) अल्पेनाप्यपचारेणाभ्यन्तरमुत्सङ्गं कृत्वा भूयो विकरोति (सुश्रुत० १।५।३६) । व्रणाशये हि चिरकालपूयावस्थानेनाममवदारितमन्तः-प्रदेशान्तरं निम्न-मुत्सङ्गतुल्यत्वादुत्सङ्ग इत्युच्यते इति डल्हणः । सपूतिमांसं सोत्सङ्गं सगतिं पूयगर्भिणम् । व्रणं विशोधयेत् (अष्टाङ्ग० ३९।४७) । उत्सङ्ग उन्नतिर्भवतीति टीकाकारः । सोऽस्य विभ्रमः । सर्वोत्सङ्गं साधु मन्येत तेभ्यः (भा० उ० २८। ६) । सर्वेषामुत्सङ्गं समीपं स्वधर्मसंयोगमापदनापदोरुचितम् इति नीलकण्ठः । सर्वोच्छेदमिति पाठान्तरम् । संमाननोत्सञ्जनाचार्यकरणभृतिविगणनव्ययेषु नियः (पा० १।३।३६) । उत्सञ्जनमुत्क्षेपणम् । अक्षिपात्रप्रान्तेऽन्तः पिटको-त्सङ्गिनीति शब्द्यते ।

—सद् (षद्लृ विशरणगत्यवसादनेषु) । दिवो मानं नोत्सदन्त्सोमपृष्ठासो अद्रयः (ऋ० ८।६३।२) । नोत्सदन् नोदसदन् नोदस्थाक्षुरित्याह । उत्सीदे-युरिमे लोका न कुर्यां कर्म चेदहम् (गीता० ३।२४) । उत्सीदेयुर्विनश्येयुः परि-भवेयुः । तं त्वै परिष्यन्द उत्सादयेत् (श० ब्रा० ६।२।१।१६) । उत्सादयेत्= उपरि धारयेत् उपरिष्टान्निदधीत । अग्नौ त्वेवोत्सादयेत् (श० ब्रा० ६।२।१।

२०)। उत्सादयेत् अधिश्रयेत्। उभाभ्यां चरिते प्रवर्ग्यमुत्सादयति (का० श्रौ० ८।३।१८)। प्रवर्ग्यपात्राणि तत्स्थानान्निष्कासयतीत्यर्थः। उत्सन्नमिव हीदं शिर: (श० ब्रा० १४।३।१।१)। उत्सन्नमुद्गतं (शरीरात्)। तेषामुत्सन्ना विषय: (का० श्रौ० )। उत्सन्ना विरताः, उच्छिन्नाः, अस्तं गताः। तथा युक्तमपि चैतन्नात्यर्थोत्सन्नपित्ते ज्वरे...प्रदेयम् (चरक० वि० ३।४५)। उत्सन्नं प्रवृद्धम्। इहोत्सन्नशब्दोऽवसन्नप्रतियोगी। तेऽग्निमन्वविन्दन्नृतुषूत्सन्नम् (तै० ब्रा० १।३।१।१)। वेदमाच्छाद्यावस्थितमित्याह। उत्सादित: कषायेण बलवद्भिः सुशिक्षितैः (भा० द्रोण० ८२।१०)। उत्सादितो मर्दित:। गौरसर्षपकल्केन साज्येनोत्सादितस्य च (याज्ञ० १।२७७)। उत्सादितस्य=उद्वर्तिताङ्गस्य। गौरसर्षपकल्कः सिद्धार्थपिष्टम्। उत्सादनं च गात्राणां स्नापनोच्छिष्टभोजने (मनु० २।२०९)॥ उत्सादनमुद्वर्तनं मर्दनम्। पादाभ्यां यन्मर्दनं तदुत्सादनमुच्यत इत्यापटेकृतकोषे यशोधरवचनम्। उत्सादनार्थं लोकानाम् (भा० वन० १०३।९)। उत्सादनं विनाशनम्। (सुश्रुत० १।१३४। ९) क्षतसंरोपणे क्षतसंरोहणाभ्युपाये वोत्सादनशब्दो व्यवहृतः।

—सह् (षह मर्षणे)। पितृभ्यश्चोदकदानं यथोत्साहम् (गौ० ध० १।५। ५)। यथोत्साहं यथाशक्ति। तवानुवृत्तिं न च कर्तुमुत्सहे (कु० २।६५)। नोत्सहे न धृष्णोमि, नालमस्मि। अज्ञवन्नोत्सहेथास्त्वम् (भट्टि० १९।१६)। अज्ञवन्माऽवसद इत्याह। शब्दमर्यादया तु नायमर्थः सुलभ:। क्षणमप्युत्सहते न मां विना (कु० ४।३६)। नोत्सहते=निर्वृतिं न लभते। मन्दोत्साहः कृतोस्मि मृगयापवादिना माढव्येन (शा० २)। उत्साहोऽभिलाष औत्सुक्यम्। ममोत्साहभङ्गं मा कृथा: (हित० ३)। उत्साहः क्रियासामर्थ्यम्।

—सि (षिञ् बन्धने)। मुक्षीजयेव पदिमुत्सिनाति (ऋ० १।१२५।२)। उद्गम्य सिनाति बध्नातीत्याह। उन्मुञ्च पाशांस्त्वमग्न एषां त्रयस्त्रिभिरुत्सिता येभिरासन् (अथर्व० ६।१२।२)। येभि: पाशैः परिवित्तो विबद्धोऽङ्गेऽङ्ग आर्पित उत्सितश्च (अथर्व० ६।११२।३)। उत्सित ऊर्ध्वं बद्धः। सायणस्तूत्थित इति पठति।

—सिच् (षिच क्षरणे)। उद्वा सिञ्चध्वमुप वा पृणध्वम् (ऋ०७।१६।११)। उत्सिञ्चध्वम् आमुखं पूरयत। (यां सुरां) सिञ्चन्ति परिषिञ्चन्त्य् उत्सिञ्चन्ति पुनन्ति च (वा० सं० २०।२८)। अनु तीर्थमप उत्सिञ्चेत् (बौ० ध० २।३।५। ३)। उत्क्षिपेत्, ऊर्ध्वं क्षिपेदित्यर्थ:। न तस्योत्सिषिचे मनः (रघु० १७।४३)। नोत्सिषिचे उत्सेकं गर्वं नाविशदित्यर्थः। भव्योस्मि भवितेत्येवं विचिन्त्योत्षिचे

च सः (राज० ८।२८५५)। उक्तोऽर्थः। स्तूयमाना नोत्सिच्यन्ते (काद०)। सम्भावितात्मानो न भवन्ति, आहोपुरुषिकां न संविदन्तीत्याह। उत्सिच्यमाने पयसि (भा० पु०)। ऊष्मणा फेनायमाने। अर्थवन्तो न चोत्सिक्ताः (भा० द्रोण० १४४।२६)। उत्सिक्ता गर्विताः। बालवृद्धातुराणां च साक्ष्येषु वदतां मृषा। जानीयादस्थिरां वाचमुत्सिक्तमनसां तथा (मनु० ८।७१)॥ उत्सिक्तमनसां चलचित्तानाम्, अव्यवस्थितमानसानाम्। उत्सिक्तमनसः प्रकृत्यैवोपप्लुता अधीरधिय इति मेधातिथिः। दर्पमुत्सिक्तमेतत्ते फाल्गुनो नाशयिष्यति (भा० द्रोण० १५६।१२)। उत्सिक्तं प्रवृद्धम्। अनुत्सिक्तं वै देवानां हविः (श० ब्रा० ३।२।२।१६)। अनुत्सिक्तं बाह्यवस्तुनाऽसम्पृक्तम्। तद्धैक उत्सिच्य छर्दयन्ति (श० ब्रा० १२।४।२।६)। उत्सिच्य=आमुखं पूरयित्वा। ताः (अपः) उत्सिच्योत्तरेण गार्हपत्यं सादयति (श० ब्रा० १।१।१।१८)। तत्प्रत्ययमुदकमुत्सिच्य (आप० ध० २।६।१५।६)। उत्सिच्य=उत्क्षिप्य। उत्सेच्या कलशीभिः (चन्द्रिका) (विद्ध०)। उत्सेच्या क्षारयितव्या, क्षारणार्हेत्यर्थः। तेषाम् (सत्त्वरजस्तमसाम्) अन्यतमोत्सेके विधानमुपदिश्यते (भा० शां० १६।१४, आश्व० १२।५)। उत्सेकोतिरेक उद्रेकः। वैराग्यवासनोत्सेकः श्लोकेनानेन सूच्यते (राज० ४।३८६)। उक्तोऽर्थः। नोत्सेकात्प्रवदाम्यहम् (रा० ५।३।१०)। उत्सेको गर्वः। उदा विविशुः शश्वन्नोत्सेकाः कोसलेश्वरम् (रघु० ४।७०)। अनुत्सेकः खलु विक्रमालङ्कारः (विक्रम० १)। अनुत्सेको गर्वाभावो विनयः शालीनता। मामकस्यास्य सैन्यस्य हतोत्सेकस्य संजय। अवशेषं न पश्यामि (भा० कर्ण० ७।१)। उत्सेको हृदयोल्लासः। उत्सेको जलौघश्च। केदारान् प्रति प्रापितोदकस्य क्षुद्रसरस इवेति नीलकण्ठः। तेषां प्रमादसुप्तप्रलापाः, कामादिरुत्सेकः (कौ० अ० १।१५।११)। आचार्याणां चोदकोत्सेचनमुभयत्र (गो० गृ० ३।३।१२)। उदकोत्सेचनं जलाञ्जल्युत्क्षेपणम्। उत्सेचनं सेकपात्रं भवत्युदकोदञ्चनम्।

—सिध् (षिध गत्याम्)। तस्मादुत्सेधं प्रजा भयेऽभिसंश्रयन्ति (श० ब्रा० १३।२।२।६)। उत्सेध उन्नतभूप्रदेशो वप्रादिः। उत्सेधमेति भूकोषकोटस्थोऽङ्कुरोत्करः (यो० वा० ४।३६।२०)। उत्सेधमेति ऊर्ध्वां गतिं गच्छति, उच्चैस्तिष्ठति। पयोधरोत्सेधविशीर्णसंहति (वल्कलम्) (कु० ५।८)। उत्सेध औन्नत्यम्। सोत्सेधैः स्कन्धदेशैः (मुद्रा० ४।७)। उक्तोऽर्थः। मामकस्यास्य सैन्यस्य हतोत्सेधस्य सञ्जय। अवशेषं न जानामि··· (भा० कर्ण० ६।६३)॥ उत्सेध उत्कर्षः। व्रातेन जीवति (पा० ५।२।२१)। अत्र वृत्तौ नानाजातीया

अनियतवृत्तय उत्सेधजीविनः सङ्धा व्राता इति स्थितम्। उत्सेधः शरीरम्। उत्सेधेन शरीरायासेन ये जीवन्ति त उत्सेधजीविनः।

—सिव् (षिवु तन्तुसन्ताने)। पुनरुत्स्यूतं वासः (तै० सं० १।५।२)। उत्स्यूतं छिन्नं सत् सूचीतन्तुभ्यां स्यूतम्। संहितच्छिद्रमित्यर्थः।

—सू (षूङ् प्राणिप्रसवे, षूङ् प्राणिगर्भविमोचने)। तमुत्सवे प्रसवे च साहसिम् (ऋ० १।१०२।१)। उत्सवः प्रक्रमः प्रारम्भः। उत्सूत उत्सूयते वा हर्षमित्युत्सवो महः।

—सृ (सृ गतौ)। तत उत्सारयामास शैलाञ्शतसहस्रशः (हरि० १।६।११)। उत्सारयामास पराणुनोद। धृष्टमुत्सार्यते सर्वस्तोपवनगतो जनः (स्वप्न० १।२)। उत्सार्यतेऽपसार्यते दूरं प्रेर्यते। दूरमुत्सृतः (बृ० श्लो० सं० ३।३३)। उत्सृतोऽपसृतोऽपसृप्तः। घृताक्तश्चीरवासास्त्वं मध्येनोत्सर्तुमिच्छसि (भा० वि० ४६।१५) (समिद्धं पावकम्)। उत्सर्तुमुत्स्रप्तुमुत्क्रम्य गन्तुम्। एक एकान्तमुत्सार्य रहो वचनमब्रवीत् (भा० उ० १८६।२०)। उत्सार्य=अपनीय एवमयं दोषो दूरमुत्सारितो भवति (इति वयम्)। अपास्तो भवतीत्यर्थः। आर्य किं कृतेयमुत्सारणा (स्वप्न० १)। लोकापसारणा। दूरमुत्सारणं तत्र कारयामास धर्मवित् (रा० ६।११४।२०)। उक्तोऽर्थः। शिबिकात उद्गमनेऽवतरणे साहाय्यकरणमप्युत्सारणं भवति। उत्सारणायामधिकृतो रक्षापुरुष उत्सारक उच्यते। यज्ञार्थं निधनं प्राप्ताः प्राप्नुवन्त्युत्सृतीः पुनः (मनु०) उत्सृतिर्जात्युत्कर्षः।

—सृज् (सृज विसर्ग)। ऋतूंरुत्सृजते वशी (अथर्व० ६।३६।२)। उद्गतावयवान् निर्मिमीत इत्यर्थ इति सायणः। व्यलीकनिश्वासमिवोत्ससर्ज (कु० ३।२५)। उत्ससर्ज मुमोच। नियतमात्मानमुत्स्रक्ष्यामि (काद०)। प्राणान्मोक्ष्यामीत्याह। तद्यथाऽनः सुषमाहितम्। उत्सर्जत् यायात् (श० ब्रा० १४।७।१।४२)। उत्सर्जत् उद्घ्नत्, संघर्षत्। गच्छ निद्रे मयोत्सृष्टा देवकीभवनान्तिकम् (हरि० २।२।२७)। उत्सृष्टाऽऽज्ञप्ता। शास्त्रातिगौरवभयादेतल्लक्षणमुत्सृष्टम् (नि० १।३।२ उपोद्घाते दुर्गः)। उत्सृष्टं त्यक्तं परिहृतम्। बुद्धिर्बुद्धिमतोत्सृष्टा हन्याद्राष्ट्रं सराजकम् (पञ्चत० १।२०६)। उत्सृष्टा प्रयुक्ता व्यापारिता। उत्सृज्य सर्वगात्रेभ्यो भूषणानि महायशाः (भा० वन० ६१।५)। उत्सृज्य अवरोप्य। एतमेव शब्दमुत्सृज्याधीयीत (आप० ध० १।३।१०।१८)। उत्सृज्य उच्चार्य। आत्मानं यूपमुत्सृज्य (भा० शां० ६७।१०)। उत्सृज्य

उच्छ्रित्य । सहस्रगुणमुत्स्रष्टुमादत्ते हि रसं रविः (रघु० १।१८) । उत्स्रष्टुं मोक्तुम् । प्रतिदातुमित्यर्थः । तोयोत्सर्गद्रुततरगतिः (मेघ० १९)। तोयोत्सर्गः= वारिमोचनम् । वातमूत्रपुरीषशुक्रोत्सर्गैः (सुश्रुत० १।९८।१२)। उत्सर्गस्त्यागः । श्रीलक्षणोत्सर्गविनीतवेषाः (कु० ७।४५)। उत्सर्गः=अवमोचनम् अवरोपणम् । वृषोत्सर्गः (पा० गृ० ३।९) । अप्रतिबद्धसंचाराय वृषभमोचनम् । अन्नस्य सुबहून् राजन्नुत्सर्गान्पर्वतोपमान् (भा० आश्व० ८५।३८) । उत्सर्गा राशयः । यद् गर्हितेनार्जयन्ति कर्मणा ब्राह्मणा धनम् । तस्योत्सर्गेण शुध्यन्ति...(मनु० ११।१९३) ॥ उत्सर्गस्त्यागः । आत्मनानुपयोग इत्यर्थः । असिद्धवदत्राभात् (पा० ६।४।२२) । अत्र वृत्तिः—असिद्धवचनमुत्सर्गलक्षण-भावार्थमादेश-लक्षणप्रतिषेधार्थम् इति । उत्सृज्यते निवर्त्यत आदेशेन इत्युत्सर्गः स्थानीति पदमञ्जरी । अपवादैरिवोत्सर्गाः कृतव्यावृत्तयः परैः (कु० २।२७)। अपवादैरि-वोत्सर्गं व्यावर्तयितुमीश्वरः (रघु० १५।७) । उत्सर्गः सामान्यशास्त्रम् । मित्रमुत्सर्गे (मनु० १२।१२१) । उत्सर्गः पायिन्द्रियम् । उत्सर्गे तु प्रधानत्वात् (मी० सू० ३।७।१९) । उत्सर्गः परिक्रय इति शबरस्वामी । पुष्ये तु च्छन्दसां कुर्याद् बहिरुत्सर्जनं द्विजः (मनु० ४।९६) । गृह्यानुसारेण च्छन्दोध्ययनविराम-विधिं कुर्यात् ।

—सृप् (सृप्लृ गतौ) । अधरोऽधर उत्तरेभ्यो गूढः पृथिव्या मोत्सृपत् (अथर्व० ६।१३४।२) । मोत्सृपत् ऊर्ध्वं मा गमत् । तं तु दृष्ट्वा यथासङ्गमुत्-सर्पति यथासुखम् (भा० वन० ७५।१९) । उत्सर्पति उन्नमति दीर्घं भवति । नोत्सर्पेत न शुष्येत सरिद्भिरिव सागरः (भा० पु० ११।८।६) । उत्सर्पेत= वर्धेत । मायाभिरुत्सिसृप्सत इन्द्र द्यामारुरुक्षतः (अथर्व० २०।२९।४) । उत्सिसृप्सत उत्सर्पणमिच्छत इत्यर्थः । उत्सिसृप्सन्ति ये दिवम् (भा० पु० ८।११।५) । दिवमतिक्रम्य मुक्तिं सप्तुं गन्तुमिच्छन्तीत्यर्थः । किमुत्सृप्यापाः (श० ब्रा० ११।५।३।४) । उत्सृप्य=अपसृप्य । अपसृत्य । अपसर्पिणी न तेषां वै न चैवोत्सर्पिणी द्विज (वि० पु० २।४।१३) । उत्सर्पिणी वृद्धिमती उत्कर्षवती । उत्सर्पिणी खलु महतां प्रार्थना । महती खलु महतां व्यपाश्रयणा याच्ञा भवतीत्याह । न हि महान्तः क्षुद्रमर्थं याचन्ते इत्यभिप्रायः ।

—स्तम्भ् (स्तम्भु सौत्रो रोधनार्थो धारणार्थो वा) । स्कन्धोत्तम्भित-तीर्थवारिकलशाः (वेणी० ६) । उत्तम्भिता धृताः । प्राणेन हीदं सर्वमुत्तब्धम् (बृ० उ० १।३।२३) । उत्तब्धम् विधृतम् ।

—स्था (ष्ठा गतिनिवृत्तौ)। इन्द्रस्य वृष्णो वरुणस्य राज्ञ आदित्यानां मरुतां शर्ध उग्रम्। महामनसां भुवनच्यवानां घोषो देवानां जयतामुदस्थात् (ऋ० १०।१०३।६)॥ उदस्थात् उदक्रमीत्, उत्थितोऽभूत्। आ पर्जन्यस्य वृष्ट्योदस्थामा मृता वयम् (अथर्व० ३।३१।११)। उत्थिता उल्लाघा अभूमेत्यर्थः। उद्वहन् मुदमुदस्थित क्रतौ (शिशु० १४।१७)। उदस्थितेत्युत्पूर्वस्य तिष्ठतेर्लुङि रूपम्। उत्थित उद्युक्तोऽभूदित्यर्थः। मुक्तात् तिष्ठते जनः (कि० ११।१३)। उत्तिष्ठते उद्युङ्क्ते। यत्रान्या ओषधयो म्लायन्ते अथैते (यवाः) मोदमाना इवोत्तिष्ठन्ति (श० ब्रा०)। उत्तिष्ठन्ति वर्धन्ते। यत्र वसन्ततौं। अनशनादुत्तिष्ठति। अनशनं समापयतीत्यर्थः। अस्माद् ग्रामाच्छतमुत्तिष्ठति (पा० १।३।२४ वृत्तौ)। उत्तिष्ठति उत्पद्यते। सोमस्योत्तिष्ठमानस्य पौर्णमास्यां बलिं हरेत् (भा० अनु० १३४।४)। उदयमानस्य चन्द्रस्येत्यर्थः। शुनं नो अस्तु चरितमुत्थितं च (अथर्व० ३।१५।४)। उत्थितमुत्पन्नं लाभयुक्तं धनम्। क्षमावन्तश्च धीराश्च धर्मकार्येषु चोत्थिताः (भा० अनु० २३।८८)। उत्थिता उद्युक्ताः। निरीक्ष्य चानुत्थितां सेनां तां च गङ्गां शिवोदकाम् (रा० २।८३।२२)। अनुत्थितां गमनेऽनुद्योगाम्। त्रिभिर्वर्षैः सदोत्थाय कृष्णद्वैपायनो मुनिः। महाभारतमाख्यानं कृतवानिदमद्भुतम् (भा० आदि० ६२।५२)॥ उत्थाय उद्यम्य। स्वाध्यायोत्थं योनिमन्तं प्रशान्तम् (व० धर्मशा० ५।३०)। स्वाध्याये वेदानुवचने उत्तिष्ठत उद्युङ्क्त इति स्वाध्यायोत्थः। मेदश्छेदकृशोदरं लघु भवत्युत्थानयोग्यं वपुः (शा० २।५)। उत्थानमुद्योगः। सुश्रुते (२।७।१।१७) उत्थानं विरेचनमाह। पुण्याहे दीक्षा क्रयः प्रसव उत्थानम् (का० श्रौ० ७।१।२५)। उत्थानं समाप्तिः। प्रक्रमोत्थाने विरोधे (का० श्रौ० ७।१।२६)। उक्तोऽर्थः। पूर्वोत्थायी चरमं चोपशायी (भा० आदि० ६१।२)।

—स्ना (ष्णा शौचे)। आर्द्रः प्रथस्नुर्भुवनस्य गोपाः शृत उत्स्नाति जनिता मतीनाम् (तै० ब्रा० १।७।५।२)। उत्स्नाति जलादुत्तरति, निर्गच्छति। त उत्स्नाय रयिमभिप्र तस्थुः (ऋ० २।१५।५)। उक्तोऽर्थः।

—स्मि (ष्मिङ् ईषद्धसने)। उत्स्मयन्तस्तदा पार्थमिदं वचनमब्रुवन् (भा० वन० २४४।१३)। स्मितं कुर्वन्त इत्यर्थ। उच्छ्वदः स्मितस्य प्राकट्यमाह। परां च प्रीतिमगमदुत्स्मयंश्च पिनाकधृक् (भा० शां० २८३।५०)। उक्तोऽर्थः। उत्स्मयन्प्रणतः प्राह कुन्तीं वैकर्तनो वृषः (भा०)। उत्स्मयन् उत्पन्नविस्मयः। आदाय शुक्लाम्बरमाल्यदाम जगाम कुन्ती सुतमुत्स्मयन्ती (भा० १८८।२७)।

(उत्तमपतिलाभाद्)। अत्यन्तं गर्वं कुर्वती। लोकान्स मां व्यसृजदुत्स्मयन्तीं तदन्ते (भा० पु० १।१६।३३)। उत्स्मयन्तीम्=अभिमानिनीम्। उत्स्मयो विस्मयः स्मयो गर्वः।

—हन् (हन हिंसागत्योः)। इयती ह वा इयमग्रे पृथिव्यास प्रादेशमात्री... ताम् एमूष इति वराह उज्जघान (श० ब्रा० १४।१।२।१२)। उज्जघान उद्धृतवान्। उच्चखान। मा त्वा (शकुन्तिम्) श्येन उद्वधीन्मा सुपर्णः (ऋ० २।४२।२)। उद्घ्नन्ति। यदेवास्या अमेध्यम्। तदपहन्ति (तै० ब्रा० १।१।३)। भूमेरूर्ध्वं भागं खनित्रादिना खनतीत्युक्तं भवति। यावत्येव निवप्स्यन्स्या-त्तावदुद्धन्यात् (श० ब्रा० १३।८।१।१०)। उक्तोऽर्थः। अधिदेवनं काष्ठा-दिनोद्घ्नन्ति। उच्चैर्हन्तीत्यर्थः। उद्व ऊर्मिः शम्या हन्तु (अथर्व० १४।२।१६)। उद्धन्तु = उत्कीलयतु। तेषामेतान् दक्षिणान्ग्रहानुज्जघ्नुः (श० ब्रा० ४।२।४। १६)। उज्जघ्नुः पातयामासुः, भ्रंशयामासुः। उद्धते वा अवोक्षितेऽग्नि-मादधति (श० ब्रा० ६।४।४।१८)। उद्धते उत्थित उन्नते प्रदेशे। बभूव तिमिरं घोरमुद्धतं रोमहर्षणम् (रा० ३।२३।८)। उद्धतं सान्द्रम् प्रवृद्धम्। लाङ्गूलमुद्धतं धुन्वन् (भट्टि० ६।७)। उद्धतमुदस्तमुदञ्चितम्। प्रातमोद्धतैरपि रजोभिरलङ्घनीयाः (शा० १।८)। उद्धतैरुत्थापितैः। अनु-गन्तुमशक्तास्त्वां मूलैरुद्धतवेगिनः (रा० २।४५।३०)। उद्धतवेगिनः=अत्यन्तं हतवेगाः। यथाग्निरुद्धतशिखः कक्षं दहति सानिलः (वि० पु० ६।७।७४)। उद्धतशिख उत्थितार्चिः, उदर्चिः। तेन चोद्धतहस्तेन तात मा मेति वारितः (बृ० श्लो० सं० ७।५४)। उद्धतहस्तेन=उन्नमितकरेण। सभाया मध्येऽधि-देवनमुद्धत्यावोक्ष्याक्षान् निवपेत् (आप० ध० २।२५।१२)। लगुडादिना ऽऽहत्येत्याह। न प्राची वेदिरुद्धत्या (आप० श्रौ० ८।४।१३।५)। उद्धत्या उद्धननीया उत्खननीया। उद्घातः प्रणवो यासाम् (कु० २।१२)। उद्घातः प्रारम्भ उपक्रमः। आकुमारकथोद्घातं शालिगोप्यो जगुर्यशः (रघु० ४।२०)। उक्तोऽर्थः। अनुद्घातसुखं रथमुपस्थापय। अनुद्घातस्तिमितगतिः (रथः) (शा०     )। ययावनुद्घातसुखेन सोऽध्वना (शिशु० १२।२)। उद्घातः प्रतिघातः। एतावद्भिः श्वासप्रश्वासैः प्रथम उद्घातः (यो० सू० २।५० सूत्र-भाष्ये)। उद्घातो नासिकया श्वसनम्। आशाप्रतिबद्धचित्तः पिशितलोभतया गोमायुस्तज्जिघृक्षुः सम्पीडितोद्घातात् सद्यः पञ्चत्वमगमत् (तन्त्रा० १।३)। उद्घातः क्षतम्। केनाप्युद्घातेन काञ्चनमालां वीणायोग्यां कुर्वतीं प्रेक्ष्य शिक्षितु-कामासीत् (प्रतिज्ञा० २)। यत्र काष्ठे काष्ठं निधाय तक्ष्यते स उद्घनः (पा०

३।३।८० वृत्तौ)। वेदिस्तु संमार्जनखननोद्धननादिसंस्कारविशेषैः परिष्कृता भूमिः (कुतूहल० १।३१५)। ग्रन्थानामुद्धतिर्येयं सा ह्रस्वायैव जायते (यो० वा० ५।८२।२०)। उद्धतिरौद्धत्यं वैयात्यम् उच्छृङ्खलता।

—हा (ओहाङ् गतौ)। तासामास्थानादुज्जिहतामोषधयः सुपिप्पलाः (वा० सं० ११।३८)। उज्जिहताम् उद्गच्छन्तु। अपां वा आस्थानादुज्जिहत ओषधयः सुपिप्पलाः (श० ब्रा० ६।४।३।२)। उक्तोऽर्थः। आविर्भूतानुरागाः क्षणमुदयगिरेरुज्जिहानस्य भानोः (मुद्रा० ४।२२)। उज्जिहानस्य उदयमानस्य आक्रममाणस्य। शिरसा यूपमुज्जिहीते (का० श्रौ० १४।५।१०)। सौमित्रि-रक्षिभ्रुवमुज्जिहानः (भट्टि० ३।४७)। अत्राप्योहाङ् सकर्मकः। ऊर्ध्वं नयने उत्क्षिपन्नित्यर्थः।

—हृ (हृञ् हरणे)। यथोद्धरति निर्दाता कक्षं धान्यं च रक्षति (मनु० ७।११०)। उद्धरति उन्मूलयति उद्वर्तयति आवृहति। एष तेऽद्य शिरः कायाद् उद्धरामि सुदुर्मते (भा० द्रोण० १५६।६)। उद्धरामि अपहरामि। वृषरूपं समास्थाय उज्जहार महारथम् (भा० कर्ण० ३४।१०१)। उदञ्चयामास, उन्नमयामासेत्यर्थः। आगमस्तु कृतो येन सोऽभियुक्तस्तमुद्धरेत् (याज्ञ० २।२८)। उद्धरेद् भावयेत् साधयेत्। अभियुक्तः पृष्टः। प्रेहि प्रेहि पथिभिः पूर्व्येभिरिति पञ्चानां तृतीयामुद्धरेत् (आश्व० श्रौ० ६।१०)। उद्धरेत्=त्यजेत्। तेऽब्रुवन्। अग्नयः स्विष्टकृतोऽश्वस्य वयमुद्धारमुद्धरामहै...ते लोहित-मुदहरन्त (श० ब्रा० १३।३।४।२)। भागविशेषमाददीमहि, ते लोहितं शोणितमाददत। स्वाध्याये भोजने चैव दक्षिणं पाणिमुद्धरेत् (मनु० ४।५८)। ऊर्ध्वं कुर्यात्। वाससो बहिष्कुर्यादित्यर्थः। शल्यं निखातमुदहारयतामुरस्तः (रघु० ६।७८)। गुर्वर्थं दारुमुज्जिहीर्षम् (व० धर्मशा० १४।१३)। उद्धृतासि वराहेण कृष्णेन शतबाहुना (तै० आ० १०।१।८)। उद्धृता=उन्नीता, उदञ्चिता। उद्धृते दक्षिणे पाणावुपवीत्युच्यते द्विजः (मनु० २।६३)। वस्त्रा-त्सूत्राद्वा बहिष्कृत इत्याह। तत्रोद्धृतममत्रेभ्यः (पा० ४।२।१४)। अत्र वृत्तिः—शराव उद्धृत ओदनः शारावः। भुक्तोच्छिष्टमुद्धृतमुच्यते यस्योद्धरणमिति प्रसिद्धिः। भुक्त्वा चोज्झितमुद्धृतम् इति शाश्वतः। पञ्च पिण्डान-नुद्धृत्य न स्नायात्परवारिषु (याज्ञ० १।१५९)। अनुद्धृत्य=अदत्त्वा, अन्युप्य अनिरुप्य। विषमस्थं हि राजानं शत्रवः परिपन्थिनः। बहवोऽप्येकमुद्धर्तुं यतन्ते पूर्वतापिताः (भा० शा० १३८।५)॥ उद्धर्तुमुन्मूलयितुम्। सैषा कामदुघे-

वेन्द्रस्योद्धारः (श० ब्रा० ४।२।३।६)। उद्धारस्तत्कृते पूर्वक्लृप्तो भागः। अपोद्धार इति यावत्। राज्ञश्च दद्युरुद्धारम् (मनु० ७।९७)। उद्ध्रियत इत्युद्धारः। जितधनादुत्कृष्टधनं सुवर्णरजतकुप्यादीति कुल्लूकः। सोऽस्योद्धारो यथा श्रेष्ठस्योद्धारः (श० ब्रा० ३।६।४।६)। उद्धारो विशिष्टोंऽशः। स महान् भूत्वा देवता अब्रवीद् उद्धारं म उद्धरत (तै० सं०)। सर्वेभ्यो भागेभ्यो य उद्ध्रियते श्रेष्ठाय दातुं सोऽधिकोंश उद्धारो नामेति भट्ट-भास्करः। यत्नाभावे तूत्कर्षो भवति नोद्धारः (आश्व० गृ० १।४।७ इत्यत्रानाविलायां हरदत्तः)। स्यादृणं पर्युदञ्चनम्। उद्धार इत्यमरः। आवापोद्धाराभ्याम् (सा० द० १०)। उद्धार उद्वापः। शल्योद्धरणम् (सुश्रुत० १।१४।३)। कण्टकोद्धरणे नित्यमातिष्ठेत्यत्नमुत्तमम् (मनु० ९।२५२)। चौरसाहसिकादिनिराकरण इत्यर्थः। सुश्रुते (१।१७१।२१) परिधानीयावरोपणेष्युद्धरणशब्दप्रयोगः। स बन्धुर्यो विपन्नानामापदुद्धरणक्षमः (हित०)। उद्धरणं परित्राणम्। जग्धस्य मोहाद्धि विशुद्धिमन्धसो जुगुप्सितस्योद्धरणं प्रचक्षते (भा० पु० ४।४।१८)। उद्धरणं वमनम्, छर्दनम्। का० श्रौ० (१।३।२६) इत्यत्र गार्हपत्यादग्नेराहवनीयस्य प्रणयनमुद्धरणमुक्तम्।

—हृष् (हृष तुष्टौ, हृषु अलीके)। उद्धर्षन्तां मघवन् वाजिनानि (अथर्व० २।१९।६)। उत्कृष्टहर्षयुक्तानि स्युरित्याह। उद्धर्षय मघवन्नायुधानि (वा० सं० १७।४२)। उद्गतहर्षान्नो योधान्कुर्वित्यर्थः। योधानुद्धर्षयामास (भा० शां० ९९।२)। समुत्साहयामास। इत्यब्रवीद्धृषीकेशः पार्थमुद्धर्षयन् गिरा (भा० उ० ५९।३०)। समुत्साहयन्नित्यर्थः। शीतेनोद्धृषितस्य माषशिमिवच्चिन्तार्णवे मज्जतः (राज० ३।१८१)। उद्धृषितस्य रोमाञ्चितस्य। अनर्थक उच्छब्दः, केवलेनापि हृषितशब्देन हृष्टलोमा कण्टकितगात्र उच्यते। हृषित इति हृषु अलीक इत्यस्य निष्ठायामिटि रूपम्। निदर्शनान्युपायांश्च बहून्नुद्धर्षणानि च (भा० उ० १३५।३२)। उत्साहजनकानि वाक्यानि। कृतमुद्धर्षणं पूर्वं मया वः सीदतां नृपाः (भा० आश्रम० १७।१)। उद्धर्षणम् उत्साहवर्धनम्। हितमुद्धर्षणं चैव उवाच प्रथितं वचः (रा०)। उक्तोऽर्थः। अमर्षजनितोद्धर्षाश्चक्रुः कर्माण्यभीतवत् (रा० ६।५२।६)। उद्धर्ष उत्कृष्टो हर्षः। आपूर्यत बलोद्धर्षैर्वायुवेगैरिवार्णवः (रा० ६।७४।३५)। उद्धर्ष उद्रेकः।

—हृष् (हृष गतौ च्छान्दसः)। अथ यदुच्च हृष्यति नि च हृष्यति तदस्य (अग्नेः) मैत्रावरुणं रूपम् (ऐ० ब्रा० ३।४)। उद्धृष्यति उद्गच्छति। निहृष्यति नीचैर्गच्छति। अत्र भट्टभास्करः—यस्मादयमग्निर्दाहारम्भे

दाह्यसंयोगादुद् धृष्यति ऊर्ध्वज्वालो भवति । अथ भस्मीकृतदाह्यो निहृष्यति निभृतज्वालो भवति । ज्वलतोऽग्नेरौन्नत्यमुद्धर्षः । ज्वालाशान्त्या नीचत्वं निहर्ष इति सायणः ।

—ह्वे (ह्वेञ् स्पर्धायां शब्दे च) । उदह्वमायुरायुषे क्रत्वे दक्षाय जीवसे (अथर्व० १८।२।२३) । उदह्वम् उच्चैः स्वरेणाह्वयामि ।

उदव (उद्+अव)

—सो (षो अन्तकर्मणि) । आहिताग्निश्चेदुपतपेत् प्राच्यामुदीच्याम-पराजितायां वा दिश्युदवस्येत् (आश्व० गृ० ४।१।१) । उदवस्येत्=निष्क्रम्य वसेत् । ततश्चतुर्षु मासेष्वाषाढ्यां श्रावण्यां वोदवसाय वरुणप्रघासैर्यजेत् (आप० श्रौ० ८।५।१) । अध्युषितपूर्वाद् देशान्निर्गत्येत्यर्थः । उदवसाय शालीन आदधीतानुदवसाय यायावरः (आप श्रौ० ५।१।३।२२) । उदवसाय विप्रोष्य । उदवसानं देशान्तरगमनमिति धूर्तस्वामी । जानीषे रेभिलस्योदवसितम् (मृच्छ० ४) । उदवसितं गेहम् । सांशयिकी व्युत्पत्तिः । स्यतेर्वा सिनोतेर्वा व्युत्पाद्यताम्, अर्थसंगतिस्तु सममस्फुटा भवति ।

उदाङ् (उद्+आङ्)

—इ (इण् गतौ) । वाचाऽऽहूताः पशव उदायन्ति । वाचाऽऽसिद्धा आवर्तन्ते (काठक० ३४।१२) । उदायन्ति उत्थाय यन्ति । आसिद्धाः प्रति-षिद्धाः । उदेहि मृत्योर्गम्भीरात्कृष्णाच्चित्तमसस्परि (अथर्व० ५।३०।११) । उदेहि निष्क्रम्यायाहीत्याह । स (राजा) ह प्रातः सभाग उदेयाय (छां० उ० ५।३।६) (गौतमम्) । प्रत्युज्जगामेत्याह । सभागः सभायां स्थितः । उदागां जीव उषसो विभातीः (अथर्व० १४।२।४४) । विभातीरुषसः प्रति गृहान्निर-क्रामम् ।

—कृ (डुकृञ् करणे) । उद्रुस्रा आकर्वि हि तिस्र आवः (ऋ० १०।६७।४)। (बृहस्पतिः) । उस्रा उदाकः उदाकार्षीत् उदाजीत्, उदकालयत् । ता (गाः) होदाचकार (श० ब्रा० १४।६।१।३) । उक्तोऽर्थः । या रोहिणी सा वार्त्रघ्नी, यामिदं राजा सङ्ग्रामं जित्वोदाकुरुते (श० ब्रा० ३।३।१।१४) । वशे कुरुते । तासां विलिप्त्यं (=विलिप्तीम्) भीमामुदाकुरुत नारदः (अथर्व० १२।४।४१) । उदाकुरुत स्वस्मै पृथक् चकार, वरयामासेत्यर्थः । श्येनो वर्तिकामुदाकुरुते (पा० १।३।३२ वृत्तावुदाहरणम्) । अधिकुरुते प्रसहते भर्त्सयते ।

—ख्या (ख्या प्रकथने)। दश वीर्याण्युदाख्यायाह (श० ब्रा० ३।३।३।४)। सस्वरं गणयित्वेत्याह।

—चक्ष् (चक्षिङ् व्यक्तायां वाचि)। यदध्वर्युरेव गोवीर्याण्युदाचष्टे (श० ब्रा० ३।३।३।४)। उच्चैर्ब्रवीतीत्यर्थः।

—चर् (चर गतिभक्षणयोः)। सहस्रशृङ्गो वृषभो यः समुद्रादुदाचरत् (ऋ०७।५५।७)। उदाचरत्, उदञ्चत्, उदतिष्ठत्, निरगच्छत्, प्राभवत्। गुरोरुदाचारेष्वकर्ता स्वैरिकर्माणि (आप० ध० १।१।३।१५)। येषु प्रवेशेषु गुरुरुदाचरति पौनःपुन्येन चरति विहरति तेषु। उदाचारेषु चास्यैतानि न कुर्यात्कारयेद्वा (आप० ध० १।८।३)। दृष्टिगोचरेषु प्रवेशेष्वित्यर्थः। गुरुसंश्रवे गुरुसन्दर्शे वेति तात्पर्यम्।

—दा (डुदाञ् दाने)। उदात्तदन्तानां कुञ्जराणाम् (रा० २।१००।१०)। उदात्ता उन्नताः। पुरा क्रूरस्य विसृपो विरप्शिन्नुदादाय पृथिवीं जीवदानुम् (वा० सं० १।२८)। उदादाय उत्क्षिप्य उद्‌गृह्य। एतस्य लोकस्योदात्तये (गो० ब्रा० पू० २।२४)। उदात्तय उद्ग्रहणाय।

—द्रु (द्रु गतौ)। प्राङुदाद्रवति (श० ब्रा० १२।४।४।७)। उद्‌गुह्य उद्‌गृह्याग्रे सरतीत्यर्थः।

—धा (डुधाञ् धारणपोषणयोः)। एतस्योत्तरोऽर्धं उदाहिततरो भवति (श० ब्रा० ७।५।१।३८)। उदाहिततर उन्नततरः।

—नी (णीञ् प्रापणे)। अश्वं निक्त्वोदानयति (श० ब्रा० १३।४।२।१)। उदानयति निष्क्रमयति। स्नपितान् (अश्वान्) वोदानीतान् (श० ब्रा० ५।१।४।५)। तानुन्नेतोदानयेद् (अवभृथात्) (लाट्या० श्रौ० ४।४।१३)। नेष्टः पत्नीमुदानय (तै० सं० ६।५।८।५, श० ब्रा० ३।८।२।१)। अथैनां प्राचीमुदानयति (भा० श्रौ० ७।१३।१०)। पूर्वां दिशम्प्रति प्रणयतीत्यर्थः। ततः प्रतिप्रस्थाता पत्नीमुदानयति (आप० श्रौ० ७।६।१८।१)। स्वायतनाद् वेदिसमीपं प्रापयतीत्यर्थः। यज्ञोपवीतिनमप आचमय्य देवयजनमुदानयति (बौ० गृ० २।५।७।८)। विनेष्ये वा प्रियान्प्राणान् उदानेष्येऽथवा यशः (भट्टि० ८।२१)। आहरिष्यामीत्याह। उन्नमयिष्यामीत्यक्षरार्थः।

—मन्त्र् (मन्त्रि गुप्तपरिभाषणे)। व्युपतोदव्युपजापव्यभिहासोदामन्त्रणानि गुरोर्वर्जयेत् (आप० ध० १।२।८।१५)। उदामन्त्रणमुच्चैः सम्बोधनं यथा बधिरस्य क्रियते।

—यम् (यम उपरमे)। सूर्यस्त्वा मृत्योरुदायच्छतु रश्मिभिः (अथर्व० ५।३०।१५)। उदायच्छतु=उद्वहतु उद्गमयतु। उदायंस्त कूपादुदकम् (पा०

१।२।१५ वृत्तौ प्रत्युदाहरणम्)। उद्धृतवानित्यर्थः। उदायंस्त पादम् इति च तत्रैव। अपकृष्टवानित्यर्थ इति पदमञ्जरी। उदायतेति च सूत्रोदाहरणम्। गन्धनं सूचनम् परेण प्रच्छाद्यमानस्यावद्यस्याविष्करणम्। अनेकार्थत्वाद् धातूनां यमिस्तत्र वर्तते। उदाङौ तदर्थस्य द्योतकौ।

—या (या प्रापणे)। सभामुदायाति (कौ० सू० १७।२३)। उच्चलति, उत्थाय यातीत्यर्थः।

—यु (यु मिश्रणामिश्रणयोः)। मेक्षणेन त्रिः प्रदक्षिणमुदायौति (कौ० सू० २।१८)। ऊर्ध्वमीषन्मिश्रयतीत्याह। पृथङ् मेक्षणाभ्यां प्रदक्षिणमुदायुवन् (गो० गृ० ४।१।४)। उक्तोऽर्थः।

—रुह् (रुह बीजजन्मनि)। पृथिव्या अहमुदन्तरिक्षमारुहम् (वा० सं० १७।६७, अथर्व० १८।१।६१)। उच्छब्दो नार्थेऽन्तरं करोति। आरुक्षमित्येवार्थः।

—वह् (वह प्रापणे)। ततो मां कश्मलाविष्टं सूतस्तूर्णमुदावहत् (भा० उ० १८०।१५)। उदावहत्=निरवहत्। आजानेया बलिनः साधु दान्ता महाबलाः शूरमुदावहन्ति (भा० वन० २७०।१०)। उदावहन्ति अपवाहयन्ति। यन्तुः प्रेष्यकरा राजन्राजपुत्रमुदावहन् (भा० द्रोण० २३।२७)। नाकुलि शतानीकं शालपुष्पनिभा हयाः। आदित्यतरुणप्रख्याः श्लाघनीयमुदावहन् (भा० द्रोण० २१।३०)॥ दत्तास्तुम्बुरुणा दिव्याः शिखण्डिनमुदावहन् (भा० द्रोण७ २३।२०)। उक्तोऽर्थः। भगिनीं वासुदेवस्य सुभद्रां भद्रभाषिणीं भार्यामुदावहत् (भा० आदि० ९५।७८)। उपायच्छत, पर्यणयतेत्यर्थः। नकुलस्तु चैद्यां करेणुमतीं नाम भार्यामुदावहत् (भा० आदि० ९५।७९)। उक्तोऽर्थः। अत्रार्थे उभयोरुदाङोः प्रयोगो विरलः, केवलस्योवस्तु बहुलः। एष व्यवहारः। गृहेषु द्व्यष्टसाहस्रं स्त्रिय एक उदावहत् (भा० पु० १०।७१।२)। उक्तोऽर्थः।

—वृत् (वृतु वर्तने)। उदिता गान्धर्वमावीवृताम (अथर्व० १४।२।३६)। उदावीवृताम निरगमयाम बहिरकुर्म। स्रोतांस्युदावर्तयति पुरीषं चातिवर्तयेत् (सुश्रुत० २।५१६।९)। उदावर्तयति श्लेष्मादि त्याजयति। उदावर्त इति मलमूत्रवायुनिःसरणरोधकरो रोगविशेषो भवति। उदावर्तेति स्त्रियां कृच्छ्रिणी फेनिला रजोमुक्तिः स्त्रीणाम्।

—शंस् (आङः शसि इच्छायाम्)। यद्वै सवासा अरण्यं नोदाशंसते निधाय वै तद्वासोऽतिमुच्यते। (श० ब्रा० ५।२।३।५)। अरण्यं न कामयत इत्याह। उच्छब्दो नार्थे विशेषं करोति। व्रतचर्यां वा नोदाशंसीत (आप० श्रौ० ९।१।

४।७६)। न शक्ष्यामि कर्तुमित्युदीक्ष्य नाशंसीत नेच्छेदित्यर्थ इति रघुवत्तः।

—सृ (सृ गतौ)। उत्प्रतिभ्यामाङि सर्तेरुपसंख्यानम् (पा० ३।२।७८) सूत्रे काशिकायाम् उदासारिण्यः प्रत्यासारिण्य इत्युदाहरणे।

—स्था (ष्ठा गतिनिवृत्तौ)। द्वारपालेप्युदास्थित इति वैजयन्ती। उदास्थितः प्रतीहार इति स्वामिनाऽमरोद्घाटने समुद्धृतो दुर्गकोषः। भग्नप्रव्रज्याव्रतो यतिरप्युदास्थित उच्यते। आह च कौटिल्यः—प्रव्रज्याप्रत्यवसितः प्रजाशौचयुक्त उदास्थितः (कौ० अ० १।११।७)। कृत्स्नं चाष्टविधं कर्मेत्यादि (७।१५४) मानवं शास्त्रं व्याचक्षाणः कुल्लूक आह—प्रव्रज्यारूढपतित उदास्थित इति। इत्थम्भूतः परिव्राजकपूर्वश्चारकर्मणि नियुज्यत इत्यन्यदेतत्।

—हृ (हृञ् हरणे)। त्वां कामिनो मदनदूतिमुदाहरन्ति (विक्रम० ४।११)। मदनदूतीति नाम्ना व्यपदिशन्तीत्यर्थः। उदाजहार द्रुपदात्मजा गिरः (कि० १।२७)। उदाजहार व्याजहार उच्चारयामास उदीरयामास। भोजनवेलातिक्रमे चिकित्सका दोषमुदाहरन्ति (माल० २)। उदाहरन्ति प्रवदन्ति। त्वमुदाह्रियस्व कथमन्यथा जनैः (शिशु० १५।२९)। उदाह्रियस्व व्यपदिश्येथाः। संभावनायां लोट्। वैष्णवं यूपमासाद्य वाग्भिरग्निमुदाहर (रा० १।६२।१९)। उदाहर स्तुहि (स्तुवीहि)। यदेव मित्रं गुरुभारमावहेत् तदेव सुस्निग्धमुदाहरेद् बुधः (भा० शां० १२०।५५)॥ उदाहरेत् प्रशंसेत्। यत्ते प्रथमं राजन्मन्वन्तरमुदाहृतम् (हरि० १।७।११)। उदाहृतमुपवर्णितम्। तत्तेऽनुपूर्व्या वक्ष्यामि भीष्मेणोदाहृतं यथा (हरि० १।१६।८)। उदाहृतमाख्यातम्। उपोद्घात उदाहार इत्यमरः। समूलघातमघ्नन्तः परान्नोद्यन्ति मानिनः। प्रध्वंसितान्धतमसस्तत्रोदाहरणं रविः (शिशु० २।३३)॥ उदाहरणं निदर्शनं दृष्टान्तः। प्रध्वंसितमन्धतमसं येन स रविः। जयोदाहरणं बाह्वोर्गापयामास किन्नरान् (रघु० ४।७८)। गीतविशेषो जयशब्दोपक्रमः स्तुतिपरो जयोदाहरणम्। अथाङ्गिरसमग्रगण्यमुदाहरणवस्तुषु (कु० ६।६५)। कथाप्रसङ्गेष्वित्यर्थः। ललितार्थबन्धं पत्रे निवेशितमुदाहरणं प्रियायाः (विक्रम० २।१४)। उदाहरणं दोषप्रख्यापनम्, उपन्यासः।

## उन्नि (उद्+नि)

—धा (डुधाञ् धारणपोषणयोः)। इत्युक्त्वैकेन हस्तेन यतन्त्युन्निदधेऽम्बरम् (भा० पु० १०।३०।२०)। उन्निदधे नम्नमयामास उच्चिक्षेप।

## उत्प्र (उद्+प्र)

—अस् (असु क्षेपे)। सोत्प्रासं सोल्लुण्ठम्। उत्प्रास्यतेऽन्यः सामर्षः क्रियतेऽनेनेति व्युत्पत्तिरिति स्वामी। उत्प्रासनं तूपहासो योऽसाधौ साधुमानिनि (सा० द० ६।२०१)।

—ईक्ष् (ईक्ष दर्शने)। भगवति किमुत्प्रेक्षसे कुतस्त्योऽयमिति (उत्तर० ४।६)। उत्प्रेक्षसे तर्कयसे। उत्प्रेक्षामो वयं तावन्मतिमन्तं बिभीषणम्। सर्वार्थेषु पराभूता गुरुं शिष्यगणा इव (रा० ५।८५।८)॥ तद्वचनश्रवणार्थं तम्प्रत्युच्चक्षुषो विलोकयाम इत्युक्तं भवति। तदुत्प्रेक्ष्योत्प्रेक्ष्य गतांस्तांश्च दिवसान्। न जाने को हेतुर्दलति शतधा यन्न हृदयम् (अमरु० ३८)॥ उत्प्रेक्ष्योत्प्रेक्ष्य =अनुसन्धायानुसन्धाय, ध्यायं ध्यायम्।

—हस् (हसे हसने)। उत्प्रहसित इव भवनेनानेन स्वर्गः (अवि० ३)। उत्प्रहसित उच्चैर्हसितः।

## उद्वि (उद्+वि)

—ईक्ष् (ईक्ष दर्शने)। भवदुद्वीक्षणाच्चैव पाण्डुना पृथिवीक्षिता। ... सुपरिपालिताः (वयम्) (भा० आश्रम० १०।२०)॥ उद्वीक्षणमत्रेक्षा। उद्वीक्ष्योद्वीक्ष्य नयनैस्त्रस्ताविलेक्षणाः (रा० ३।५२।४१)। नयनैर्भयादिव विलक्षणैरिति पाठान्तरम्। उद्वीक्ष्य ऊर्ध्वं वीक्ष्य। न चास्ति शक्तिस्त्रैलोक्ये कस्यचित् पुरुषोत्तम। पतिव्रतामिमां साध्वीं तवोद्वीक्षितुमच्युत (भा० अनु० २।८१)॥ उद्वीक्षितुम् उदीक्षितुम्। नार्थो विना।

# अभि

—अज् (अज गतिक्षेपणयोः)। यत् सम्यञ्चा मिथुनावभ्यजाव (ऋ० १।१७६।३)। अभ्यजाव संगच्छावहै, सङ्गतौ संयुतौ संयुक्तौ सम्पृक्तौ स्याव।

—अञ्ज् (अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु)। अञ्जते व्यञ्जते समञ्जते क्रतुं रिहन्ति मधुना भ्यञ्जते (अथर्व० १८।३।१८)। अभ्यञ्जते नवनीतेन माधुर्योपेतेनाभ्यक्तशरीरं कुर्वन्तीत्यर्थः। नवनीतेनाभ्यञ्जन्ति। (ऐ० ब्रा० १।३)। अभ्यञ्जन्ति म्रक्षयन्ति, अनुलिम्पन्ति। अञ्जानो अजरैरभि

(ऋ० २।८।४) । उक्तोऽर्थः । भारस्योद्वहनार्थं च रथाक्षोऽभ्यज्यते यथा (सौन्दर० १४।१२) । अभ्यज्यते उपस्निह्यते । अक्तोऽभ्यक्तो वेष्ट्रित्युपवेष्टी (आप० ध० १।८।२) । अक्तोऽञ्जनेनाक्ष्णोरभ्यक्तस्तैलेन । वेष्टिती वेष्टित-शिराः । कटिप्रदेशो द्वितीयेन वाससा वेष्टितो यस्य स उपवेष्टिती ।

—अत् (अत सातत्यगमने) । अतिथिरभ्यतितो गृहान्भवति (नि० ४।५।१) । अभ्यतितः पर्यटितः, अभ्यागतः ।

—अम् (अम गत्यादिषु, अम रोगे) । अग्ने त्वमस्मद् युयोध्यमीवा अनग्नित्रा अभ्यमन्त कृष्टीः (ऋ० १।१८९।३) । अभ्यमन्ति रुजन्ति उपताप-यन्ति, उपपीडयन्ति, आक्रामन्तीति वा । किं शूरपत्नि नस्त्वमभ्यमीषि वृषाक-पिम् (ऋ० १०।८६।८) । अभ्यमीषि विप्रकरोषि, कदर्थयसि वेगेनाभियासीति वा ।

—अर्च् (अर्च पूजायाम्) । इम उ त्वा पुरुशाक प्रयज्यो जरितारो अभ्यर्चन्त्यर्कैः (ऋ० ६।२१।१०) । अभ्यर्चन्ति पूजयन्ति । अभिर्नार्थान्तरं करोति ।

—अर्ह् (अर्ह पूजायाम्) । परशुरामो माल्यवन्तमभ्यर्हयति (महावीर० २) । अर्हयतीत्येवार्थः । नार्थोऽभिना । अभ्यर्हितं पूर्वं निपतति (वा०) ।

—अव् (अव रक्षणादिषु) । सोमो मीढ्वाँ अभि नो ज्योतिषावीत् (ऋ० ९।९७।३९) । अभ्यावीत् अतीतृपत्, प्रत्यग्रानकरोत्, प्रत्याश्वस्तान-चारीत् ।

—अश् (अश् व्याप्तौ) । विश्वा इत् स्पृधो अभ्यश्नवाव (ऋ० १।१७९।३) । अभिभवेवेत्यर्थः । तदस्य प्रियमभि पाथो अश्याम् (ऋ० १।१५४।५) । अभ्यश्याम् प्राप्नुयाम्) । अभ्याशो ह यदस्मै स कामः समृध्येत् यत्कामः स्तुवीत (छां० उ० १।३।१२) । अभ्याश आशा ।

—अस् (अस भुवि) । विश्वा जातान्यभ्यस्मि मह्ना (ऋ० ८।१००।१४)। अभ्यस्मि – अभिभवामि । कृष्टीर्यो विश्वा अभ्यस्त्येक इत् (ऋ० ८।२४।१९)। अभ्यस्ति अभिभवति । ते हि यज्ञेषु यज्ञियास ऊमाः सधस्थं विश्वे अभि सन्ति देवाः (ऋ० ७।३९।४) । अभिभवन्तीति स्कन्दः । अभितिष्ठन्तीति दुर्गः । त्वया वीरेण वीरवोऽभि ष्याम पृतन्यतः (ऋ० ९।३५।३) । इन्द्रेण मन्युना वयमभि ष्याम पृतन्यतः (अथर्व० ७।९७।१) । उक्तोऽर्थः । यदत्र ममाभिष्यात् (पा० १।४।९१ सूत्रवृत्तौ) । यदत्र माम्प्रति स्यात्, योऽत्र मे भागः स्यादित्यर्थः ।

लक्षणाद्यर्थविरहात्कर्मप्रवचनीयत्वाप्राप्तेरुपसर्गत्वावस्थितेरुपसर्गप्रादुर्भ्यामस्ति-यच्परः (पा० ८।३।८७) इति षत्वम् । पृणन्नापिरपृणन्तमभि ष्यात् (ऋ० १०।११७।७) । अतिशयीत, विशेषयेत्, अतिक्रामेत् । अभ्यहं विश्वाः पृतना यथासानि (अथर्व० ६।६७।१) । अभ्यसानि=अभिभवानि । अपो येन सुक्षितये तरेमाऽध स्वमोको अभि वः स्याम (ऋ० ७।५६।२४) । अभिष्याम प्राप्नुयामेत्यर्थः ।

—अस् (असु क्षेपे) । धन्यो वन्यमतङ्गजः परिचयप्रागल्भ्यमभ्यस्यति (मालती० ६।३२) । अभ्यस्यति शीलयति । इयन्ति वर्षाणि तया सहोग्रमभ्यस्यतीव व्रतमासिधारम् (रघु० १३।६७) । शीलयति, आसेवते । शरभृष्टीरादीप्ताः प्रतिदिशमभ्यस्यति (कौ० सू० ३३।१३-१४) । अभ्यस्यति अभितः प्रक्षिपति । नान्यो राजानमभ्यस्येदराजन्यः कथं चन (भा० शां० ६६।७) । अभिमुखं शस्त्रं क्षिपेदित्यर्थः । वेदमेव सदाऽभ्यस्येत् (मनु० २।१६६) । वेदाध्यायं शीलयेत्, स्वाध्यायमधीयीतेत्यर्थः । मृगकुलं रोमन्थमभ्यस्यतु (शा० २।६) । कामं रोमन्थं वर्तयत्वित्यर्थः । काममभ्यस बा मा वा, न त्वां योत्स्ये कथंचन (भा० भीष्म० १०८।४३) । प्रक्षिपेत्यर्थः । शरानिति शेषः । शीघ्रमभ्यस्यतो बाणान् सन्दधानस्य चानिशम् । नान्तरं ददृशे किञ्चित्कौन्तेयस्य यशस्विनः (भा० आदि० १३८।४१) ॥ उक्तोऽर्थः । अभ्यस्यमाने शक्त्यस्त्रे (भा० शल्य० ४६।७०) । प्रास्यमान इत्यर्थः । इहोदाहृतिष्वभिः क्वचिदाभिमुख्ये वर्तते क्वचिदाभीक्ष्ण्ये इति यथायोगमूह्यम् । कुकर्मजामिवाभ्यस्यन्भविष्यन्तीमधोगतिम् (कथा० २४।६४) । अभ्यस्यन्भूयो भूयः संस्मरन् । अभ्यसन् सिद्धिकायं हि विष्णुं दृष्ट्वा हि तस्थिवान् (हरि० १।२६।१३) । जपन् विष्णुं ध्यायन्वेति नीलकण्ठः । अदान् मृदुमार्दवमुदितयुक्त्या युक्तं तदीया जनतासु जिह्वा । लोला स्वयं स्थैर्यगुणं तु सम्यानभ्यासयन्ती कुतुकाय किं नः (जै० कु० १।४३) ॥ अभ्यासयन्ती असकृद् ग्राहयन्ती । बहुभिस्तेन चाभ्यस्तस्तं विव्याध ततोधिकैः (भा० द्रोण० १४।२६) अभ्यस्तो विद्धः । अभ्यस्तो बहुभिर्बाणैः (भा० द्रोण० १४७।२०) । असकृन्निहत इत्यर्थः । त्वयाऽभ्यस्तः पुनः पुनः (भा० द्रोण० १५१।२०) । अभ्यस्त आवर्तितः, गुणितः । कोप इति शेषः । अयुतं नियुतं प्रयुतं तत्तदभ्यस्तम् (नि० ३।१०।१) । उक्तोऽर्थः । अनभ्यस्तरथचर्या वयम् (उत्तर० ५) । अनभ्यस्ताऽशीलिता । सहस्रकृत्वस्त्वभ्यस्य बहिरेतत् त्रिकं द्विजः (मनु० २।७९) । सहस्रावृत्ति जपित्वा, सहस्रवारमावर्त्येत्यर्थः । सकृदेवानतं शेकू रथमभ्यसितुं परे (भा० वि० ५५।२०) । अभ्यसितुं परिचेतुं

वेवितुम् । स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते (गीता० १७।१५) । अभ्यसनमभ्यास आवृत्तिः पुनः पुनः करणम् । विद्यामभ्यसनेनेव प्रसादयितुमर्हसि (रघु० १।८८) । वेदाभ्यासजडः कथं नु...। निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः (विक्रम० १।८) ।। उक्तोऽर्थः । एतेन सर्वे व्याख्याता व्याख्याता (ब्र० सू० १।४।२८) । इति पदाभ्यासोऽध्यायपरिसमाप्ति द्योतयतीति तत्र शङ्करः । तद्यथाभ्यासमभिधीयताम् (उत्तर० १) । यथाभ्यासं यथाशीलम् । वेदस्वीकरणं पूर्वं विचारोऽभ्यसनं जपः । तद्दानं चैव शिष्येभ्यो वेदाभ्यासो हि पञ्चधा ।।

—आप् (आप्लृ व्याप्तौ) । स त्वां कुरुकुलश्रेष्ठ किंचिदर्थमभीप्सति (भा० आश्रम० ११।४) । किञ्चित्कार्यं कर्तुमभितः प्राप्तुमिच्छतीत्यर्थः ।

—इ (इण् गतौ) ।...तत्र चाभ्यागात् कोप्यपूर्वो द्विजः पुरि (कथा० ३३।१३३) । अभ्यागात् आगन्तुक इत्यागात् । सूर्यो देवीमुषसं रोचमानां मर्यो न योषामभ्येति पश्चात् (ऋ० १।११५।२) । अभ्येति=अव्यवहितमन्वग् गच्छति । निरन्तरमनुसरति । वृषेव पत्नीरभ्येति रोरुवत् (ऋ० १।१४०।६)। अभ्येति वेगेनोपधावति । रेक्णस्वत्यभि या वाममेति (ऋ० १०।६३।१६) । अपान्यदेत्यभ्यन्यदेति (ऋ० १।१२३।७) । अभ्येति अभिवर्तते, उपैति । तामौक्षणैश्चर्मभिः पश्चात्प्राञ्चो विभजमाना अभीयुः (श० ब्रा० १।२।५।२) । प्रेह्य भीहि धृष्णुहि न ते वज्रो नि यंसते (ऋ० १।८०।३) । अभीहि संनिवेहि उपेहि । अभीहि मन्यो तवसस्तवीयान् (अथर्व० ४।३२।३) । अभिमुखं गच्छेत्याह । अस्मानत्तुमभ्येति परिग्लानो बुभुक्षया (भट्टि० ७।८४) । उपसर्पति, उपैति, उपक्रामतीत्यनर्थान्तरम् । यो अन्येद्युरुभयद्युरभ्येति (अथर्व० १।२५।४) । अभ्येति=आयाति । रामोऽभ्येति पुरीं लङ्कामस्माकमुपरोधकः (रा० ६।६।१६) । लङ्कामुपरोत्स्यामीत्यभिवर्तत इत्याह । प्राज्ञस्य मूर्खस्य च कार्ययोगे समत्वमभ्येति तनुर्न बुद्धिः (अवि० ५।५) । अभ्येति प्राप्नोति । देहो वा जीवतोऽभ्येति जीवो वाभ्येति देहतः (भा० शां० २८।५१) । अभ्येति= उत्पद्यते, जायते, आविर्भवति । वनं पदाभ्यैः केन हेतुना (भट्टि० ५।६७) । अभ्यैः=अभ्यागाः । उपायाः । लङि रूपम् । शुनं कीनाशा अभि यन्तु वाहैः (ऋ० ४।५७।८) । सीरमादाय क्षेत्राण्यभिलक्ष्य यन्तु बलीवर्दैर्हालिका इत्यर्थः । देहान् यथेष्टमभ्येति हित्वेमां मानुषीं तनुम् (भा० आश्व० १६।३१) । अभ्येति सङ्क्रामति, प्राप्नोति । सतीव योषित्प्रकृतिः सुनिश्चला पुमांसमभ्येति

भवान्तरेष्वपि (शिशु० १।७२) । **उक्तोऽर्थः ।** पावके विनिवृत्ते तु नीलो राजाऽभ्यगात् तदा (भा० सभा० २१।५८) । **अभ्यगात् उपागमत् । प्राविक्षदित्यर्थः ।** गन्धर्वराजोऽप्सरसमभ्यगादुर्वशीं वराम् (भा० वन० ४५।४) । **उपासर्पदित्यर्थः ।** स ह्याहं यशसां यशः श्वेतं...लिन्दु माऽभिगाम् (छां० उ० ८।१४।१) । **लिन्दु स्त्रीव्यञ्जनं गर्भवासं मा प्रापम्, तत्र मा प्रविक्षमित्याह ।** स ब्रह्म परमभ्येति वायुभूतः खमूर्तिमान् (मनु० २।८२) । **अभ्येति आभिमुख्येन गच्छति ।** मारुतं पुरुहूतं च गुरुं पावकमेव च । चतुरो व्रतिनोऽभ्येति ब्राह्मं तेजोऽवकीर्णिनः (मनु० ११।१२१) ॥ **अभ्येति सङ्क्रामति ।** नाविविदिषुमभ्येति सम्पत् (भट्टि० ७।६६) । **उपैतीत्यर्थः ।** पूर्वं त्वामुपयास्यामि ततोऽभ्येष्यामि तं पतिम् (कथा० ८४।२५) । **निगदव्याख्यातम् ।** रयादभीयाय परान् रुषा वृत्र इवामरान् (शि० भा० १३।११८) । **अभीयाय=अभिदुद्राव, प्रार्थयाञ्चक्रे ।** तामृश्यो भूत्वा रोहितं भूतामभ्यैत् (ऐ० ब्रा० ३।३३) । **अभिगतवान्, मिथुनधर्मं प्राप्तवान् । रोहितं भूताम् । भू प्राप्तौ । लोहितं लोहितत्वं प्राप्ताम् । ऋतुमतीं जातामित्यर्थः ।** यशसा वा एषोऽभ्येति य आर्त्विज्येन (ऐ० ब्रा० ६।३४) । **युक्तो भवतीत्यर्थः ।** अष्टमेऽब्दे चतुर्वेदी द्वादशे सर्वशास्त्रवित् । षोडशे कृतवान्भाष्यं द्वात्रिंशे मुनिरभ्यगात् ॥ शङ्करोद्दिश्यकोक्तिः । **अभ्यगात् समाधिस्थोऽभूदित्यर्थः । प्राणान्मुमोचेत्युक्तं भवति ।** सप्त मर्यादाः कवयस्ततक्षुस्तासामेकामिदभ्यंहुरोगात् (ऋ० १०।५।६) । **अभिगात् अभिगच्छति अतिक्रामति ।** विश्वा अभीती रपसो युयोधि (ऋ० २।३३।३) । **अभीतयो भियानानि, आक्रमणानि ।** याः सेना अभीत्वरीः (वा० सं० ११।७७) । **अभीत्वरीः=अभियायिन्यः ।**

—**इष्** (**इष इच्छायाम्**) । निधिं निधिपा अभ्येनमिच्छात् (अथर्व० १२।३।४२) । **निधिं वरयेत्, वनुयात्, याचेत, कामयेत ।**

—**इष्** (**इष आभीक्ष्ण्ये**) । सरस्वती त्वा मघवन्नभीष्णात् (तै० ब्रा० १।४।२।१) । **भिषज्यत्वित्यर्थः । अडभावश्छान्दसः ।**

—**ईक्ष्** (**ईक्ष दर्शने**) । सोग्निमेवा भीक्षमाणो व्रतमुपैति (श० ब्रा० १।१।१।२) । **अग्नौ दृशं पातयन्नित्यर्थः ।**

—**उक्ष्** (**उक्ष सेचने**) । यदिष्ट-रूपरसगन्धस्पर्शं प्रोक्षितमभ्युक्षित च तच्छुचि । **सामान्येन जलेन धौतमभ्युक्षितमिति श्रौतपदार्थनिर्णयः ।** प्रोक्षिताऽभ्युक्षिताः सौम्याः (भा० अनु० ६८।३४) । **प्रोक्षणाभ्युक्षणावोक्षणानीत्थं विविञ्चन्ति कोविदाः**—उत्तानेनैव हस्तेन प्रोक्षणं परिकीर्तितम् ।

न्यञ्चनाभ्युक्षणं प्रोक्तं तिरश्चावोक्षणं स्मृतम् ॥ संचारमभ्युक्ष्य (का० श्रौ० ३।४।१)। अभ्युक्ष्य =अभिषिच्य =अभिवृष्य । शिरसि शकुन्तलामभ्युक्ष्य (शा० ४)।

—उच् (उच समवाये)। अभि वा एष एतानुच्यति येषां पूर्वापरा अन्वञ्चः प्रमीयन्ते (तै० सं० २।२।२।५)। अभ्युच्यति आभिमुख्येन समवैति। एषोऽग्निस्तान्रुचिविषयं करोति सोत्सुकं मार्गतीति संस्कृतशार्मण्यकोषः।

—उन्द् (उन्दी क्लेदने)। तस्मादसाविमां वृष्ट्याभ्युनत्ति (ऐ० ब्रा० २।१)। क्लेदयति आर्द्रां करोतीत्यर्थः।

—ऊर्णु (ऊर्णुञ् आच्छादने)। अभ्यूर्णोति यन्नग्नं भिषक्ति विश्वं यत् तुरम् (ऋ० ८।७९।२)। अभ्यूर्णोति अभित आच्छादयति। प्रावृणोति। माता पुत्रं यथा सिचाभ्येनं भूम ऊर्णुहि (अथर्व० १८।२।५०)। जायापतिमिव वाससाभ्येनं भूम ऊर्णुहि (अथर्व० १८।२।५१)। उक्तोऽर्थः।

—ऊह् (ऊह वितर्के)। तस्माद्यदेव किञ्चानूचानोऽभ्यूहत्यार्षं तद् भवति (नि० १३।१२)। अभ्यूहति तर्कयति मीमांसित्वा विजानाति। अथाङ्गारैरभ्यूहति (कपालानि) (श० ब्रा० १।२।१।१३)। आच्छादयति, उपदधाति। आस्तृणाति। पुरीषेणाभ्यूहति (तै० सं० ५।२।३।७)। उक्तोऽर्थः। अदेवो यदभ्यौहिष्ट देवान् (ऋ० ६।१७।८)। अभ्यौहिष्ट पर्यवास्थित, परिपन्थिभूत्, देवान् प्रत्युपशयस्थोऽस्थात्। उत्तरं सूत्रमभ्युह्य स्वयमेव मयोदितम् (कथा० ७।११)। अभ्युह्य स्वबुद्ध्योन्नीय।

—ऋ (ऋ गतिप्रापणयोः)। अभि कृष्णेन रजसा द्यामृणोति (ऋ० १। ३५।९)। अभ्यृणोति =आसादयति। सवितेति शेषः।

—ऋष् (ऋषी गतौ)। अभि त्वा सिन्धो शिशुमिन्न मातरो वाश्रा अर्षन्ति पयसेव धेनवः (ऋ० १०।७५।४)। अभ्यर्षन्ति =अभ्यृषन्ति =अभि स्वरन्ते, वेगेनाभिमुखं यान्ति। अभी नो अर्ष दिव्या वसूनि (ऋ० ९।९७।५१)। अभ्यर्ष इत आवह। अभ्यर्ष महानां देवानां वीतिमन्धसा (ऋ० ९।१।४)। वीतिं यज्ञभागं गच्छेत्याह। अभ्यर्ष गुह्यं चारु नाम (ऋ० ९।९६।१६)।

—कम् (कमु कान्तौ)। न च कामसम्पदमभिकामयते (कि० १८।२३)। अभिकामयते कामयते प्रार्थयते। अभिर्धात्वर्थं न विशिनष्टि। दासी-कन्या-सहस्रेण शर्मिष्ठामभिकामये (भा० आदि० ८०।१६)। अभिकामयेऽभिलषामि।

—कम्प् (कपि चलने)। सोमविक्रयिणं हिरण्येनाभिकम्पयति (का० श्रौ० ७।८।१५)। अभिकम्पयति विचालयति प्रलोभयति, गर्धयति।

—काङ्क्ष् (काक्षि वाक्षि इच्छायाम्)। नात्यर्थमभिकाङ्क्षामि मृगयां सरयूवने (रा० २।४६।१५)। अभिकाङ्क्षामि काङ्क्षामि इच्छामि।

—काश् (काशृ दीप्तौ)। तया नस्तन्वा शन्तमयाभि चाकशीहि (वा० सं० १६।२)। अभिचाकशीहि=उद्भासय=विभापय। घृतस्य धारा अभि चाकशीमि (ऋ० ४।५८।५)। अभिचाकशीमि सम्पश्यामि प्रेक्षे।

—कुष् (कुष निष्कर्षे)। न बालकर्णनासास्रोतोदशनविवराण्यभिकुष्णीयात् (सुश्रुत० १।१४५।२)। अभितो निष्कर्षेदित्यर्थः।

—कृ (डुकृञ् करणे)। गर्भमेवैतत्सन्तमभिजुहोति गर्भं सन्तमभिकरोति (श० ब्रा० २।३।१।४)। अभिकरोति उपकरोति, अनुगुणमाचरति। यथाभिचक्र देवास्तथाऽप कृणुता पुनः (अथर्व० ३।६।१)। अभिचक्र=संविदधथुः, उपचक्रथुः। निःसपत्नौ कुरुक्षेत्रे निवेशमभिचक्रतुः (भा० आदि० २१०।२७)। अभिचक्रतुः=निर्ममतुः।

—कृष् (कृष विलेखने)। अथ सर्वे रणं मुक्त्वा प्रयाताः खचरा दिवम्। अस्मानेवाभिकर्षन्तो दीनान्मुदितमानसाः (भा० वन० २४८।११)॥ अभिकर्षन्तो दमयन्तो न्यग्भावयन्तः।

—कॄ (कॄ विक्षेपे)। ततस्ते बहुभिर्योगैः कैवर्ता मत्स्यकाङ्क्षिणः। गङ्गायमुनयोर्वारि जालैरभ्यकिरस्तदा (भा० अनु० ५०।१५)॥ अभ्यकिरन्=आकिरन्, तत्र वारिणि जालानि विस्तारितवन्त इत्यर्थः। अभ्यकीर्यत शोकेन भूय एव महीपतिः (रा० २।१४।५६)। शोकाप्लुतः शोकेन परीतो भूदित्यर्थः।

—क्लृप् (कृपू सामर्थ्ये)। वासन्तिकावृतू अभिकल्पमानाः (वा० सं १३।२५)। अभिकल्पमानास्तद्योग्याः सम्पद्यमानाः। अभिजिताभिक्लृप्ता (श० ब्रा० १२।३।१।४)।

—क्रन्द् (क्रदि आह्वाने रोदने च)। अभि क्रन्दति हरितेभिरासभिः (ऋ० १०।९४।२)। अभिक्रन्दति=अभितः क्रन्दति शब्दायते। अभि क्रन्द प्र त्रासय (अथर्व० ५।२१।४)। अभिक्रन्द शब्दायस्व वाशयस्व रोरुहि। अभिक्रन्दन्नृषभो वासितामिव (अथर्व० ५।२०।२)। स्त्रीगवीमभिगर्जन्नित्यादि।

—क्रम् (क्रमु पादविक्षेपे)। अभि स्रुचः क्रमते दक्षिणावृतः (ऋ० १।१४४।१)। स्रुचोऽभिक्रमते=ता अभि वर्तते, ता अभिमुखं याति। स्पृधो

अदेवीरभि च क्रमाम विश आदेवीरभ्यश्नवाम (ऋ० ६।४६।१५) । अभिक्रमाम अभिभवाम । ते सरांसि गिरीन्सर्वान्संकटानि वनानि च । दरीदुर्गांश्च शैलांश्च कृत्स्नांस्तानभिचक्रमुः (रा० ४।४७।३) ॥ अभिचक्रमुः पर्यादुः । यो हिंसार्थमभिक्रान्तं हन्ति (आप० ध० १।२६।७) । अभिक्रान्तम् अभिपतितम् । अभिक्रान्तापक्रान्तानि (सामानि) भवन्ति (पञ्चविं० ५।८।३) । अभिक्रान्तमारोहः । अपक्रान्तमवरोहः । अभिक्रामं सायं जुहोत्यवक्रामं प्रातः (आप० श्रौ० ६।३।१०।५) । अभिक्रम्याभिक्रम्याहवनीयस्य समीपम् । तमभिक्रम्य सर्वेऽद्य वयं चार्थामहे वसु (भा० वन० ६८।२०) । अभिक्रम्य=उपेत्य । नेहाभिक्रमनाशोस्ति प्रत्यवायो न विद्यते (गीता० २।४०) । अभिक्रम उपक्रमः, प्रारब्धं कर्म । अहितान्प्रत्यभीतस्य रणे यानमभिक्रमः (अमरः) । आरोहणमभिक्रम इति वैजयन्ती । द्वाभ्यामभिक्रम्य (ऋ० प्रा० १०।२) । प्रारभ्येत्यर्थः । अभिक्रमणं वचनाददृष्टेन (गौ० ध०) । अभिक्रमणमुपसर्पणम् ।

—क्री (डुक्रीञ् द्रव्यविनिमये) । एकं वा एष क्रीयमाणोऽभिक्रीयते छन्दसामेव राज्याय (श० ब्रा० ३।३।२।६) । किञ्चित् प्रयोजनमुद्दिश्य क्रयणमभिक्रयणम् ।

—क्रुश् (क्रुश आह्वाने रोदने च) । तं भूतान्यभ्यक्रोशन् ब्रह्महन्निति (तै० सं० २।५।१।२) । अभ्यक्रोशन् सनिन्दमाह्वयन् सक्रोधं समबोधयन् । ततो वालिनमुद्यम्य सुग्रीवः शिबिकां तदा । आरोपयदभिक्रोशन्नङ्गदेन सह प्रभुः (रा० ४।२५।२८) ॥ अभिक्रोशन् विलपन् परिदेवयमानः । आरोपयत विक्रोशन्नङ्गदेन सहैव स्विति पाठान्तरम् ।

—क्षम् (क्षमूष् सहने) । ऽभी नु मा वृषभ चक्षमीथाः (ऋ० २।३३।७) । दयस्व मामनुगृहाण मां वेत्याह । यूयं नः पुत्रा अदितेरदब्धा अभि क्षमध्वं युज्याय देवाः (ऋ० २।२८।३) । सानुग्रहा भवतेत्यर्थः । अभि नो वीरो अर्वति क्षमेत (ऋ० २।३३।१) । उक्तचर एवार्थः ।

—क्षर् (क्षर संचलने) । ये ते पवित्रमूर्मयोऽभिक्षरन्ति धारया (ऋ० ९।६१।५) । अभिक्षरन्ति=अभिस्रवन्ति=अभिष्यन्दन्ते । शिवा अभि क्षरन्तु त्वापो दिव्याः पयस्वतीः (अथर्व० ८।२।१४) । सिन्धुर्न निम्नमभि वाज्यक्षाः (ऋ० ९।९७।४५) । अक्षा इति क्षरतेरीडभावे लुङि रूपम् । मनो वै सम्राट् परमं ब्रह्म नैनं मनो जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति (श० ब्रा० १४।६।१०।१५) । उदितपूर्व एवार्थः ।

—क्षिप् (क्षिप प्रेरणे)। महेन्द्रो मन्द्रगर्जाभिरभिक्षिपति गर्जतः (यो० वा० ६ (२)।११८।१६)। तर्जयते भर्त्सयत इत्यर्थः। रथीव कशयाश्वाँ अभिक्षिपन् (ऋ० ५।८३।३)। अभिक्षिपन् प्रसभं प्राजन्नित्यर्थः। अभिक्षिपन्तमैक्षिष्ट रावणं पर्वतश्रियम् (भट्टि० ८।५१)। अभिक्षिपन्तमतिशयानम्। चतुष्पथगदायुद्धे (भा० आदि० ६८।१२)। अत्र भारतभावदीपे नीलकण्ठ आह—चत्वारः प्रक्षेप-विक्षेप-परिक्षेपाभिक्षेपाख्याः पन्थानोऽस्य। अभिक्षेपोऽग्रेण ताडनम् इति।

—खन् (खनु अवदारणे)। यो हीहाभिखनेदप त्वाऽभि विन्देत् (श० ब्रा० ११।१।६।१६)। अभिखनेत् =उत्खनेत्। उदोऽर्थेऽभिः।

—ख्या (ख्या प्रकथने)। कदा मृळीकं सुमना अभिख्यम् (ऋ० ७।८६।२)। अभिख्यम्=पश्येयम्। चक्षिङ् ख्याञ् (चक्षिङ आदेशः)। ख्या च वेदे बहुलं दर्शने वर्तते। दीर्घं यदाजिमभ्यख्यदर्यः (ऋ० ४।२४।८)। अभि ख्यः पूषन्पृतनासु नस्त्वम् (ऋ० ६।४८।१९)। अनुग्रहबुद्धया पश्य। अवेक्षस्व नः। अस्मासु प्रतिजागृहीति वा। अभि प्रयांसि सुधितानि हि ख्यः (ऋ० ६।१५।१५)। नमः पितृभ्यो अभि ये नो अख्यन् (तै० सं० ३।२।८।३)। अभिख्या नो मघवन्नाधमानान् (ऋ० १०।११२।१०)। अभिख्या भासा बृहता शुशुक्वनिः (ऋ० ८।२३।५)। इह सर्वत्र निर्विशेषोऽनन्तरोदीरित एवार्थः। अभिख्याता मर्डिता सोम्यानाम् (ऋ० ४।१७।१७)। अभिख्याताऽवेक्षकः प्रेक्षकः। तृजन्तमेतत्। पुण्यमेतदभिख्यातं त्रिषु लोकेषु भारत (भा० अनु० ६६।१६)। अभिख्यातं प्रख्यातं प्रतीतं विदितम्। स्वयमुपहतः, विप्रकृतः पापकर्माभिख्यातः...चेति भीतवर्गः (कौ० अ० १।१४।३)। अभिशस्त इत्यर्थः। काप्यभिख्या तयोरासीद् व्रजतोः शुद्धवेषयोः (रघु० १।४६)। अभिख्या शोभा। कानि वाऽस्य पुण्यभाञ्जि भजन्त्यभिख्यामक्षराणि (हर्ष० प्रथम उच्छ्वासे)। मिथ्याऽभियोगोऽभिख्यानम् इति वैजयन्ती। अमरोपि मिथ्याभियोगोऽभिख्यानमिति पठति। कलहकण्टक इत्यभिख्यापिताख्यः (दशकु० पृ० १३६)। अभिख्यापिता प्रसिद्धिं गमिता।

—गम् (गम्लृ गतौ)। तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् (मुण्डको० १।२।१२)। अभिगच्छेत् उपेयात्, प्रतिपद्येत, उपपद्येत। तां शीघ्रमभिगच्छ त्वमभिगम्यां तपस्विनीम् (रा० २।११७।१६)। ताम् (अनसूयाम्) अभिगच्छ उपेहि। आ देवो दूतो अजिरश्चिकित्वान् त्वद् देवापे अभि मामगच्छत् (ऋ० १०।९८।२)। मामभ्यगच्छत् मामुपैत्, मामभ्यवर्तत। त्यक्त्वा ज्ञातिजनम्...। अनुरागाद्वने रामं दिष्ट्या त्वमभिगच्छसि (रा० ३।२।२१)। अभिगच्छसि

अनुसरसि । ततस्त्वां ब्राह्मणः...अभ्यगच्छत्कोसलायामृतुपर्णनिवेशने (भा० वन० ७६।२८) ॥ अविन्दत् समगच्छत् । श्रमेणानड्वान् कीलालं कीनाशश्चाभिगच्छतः (अथर्व० ४।११।१०) । अभिगच्छतः = अधिगच्छतः = अर्जयतः । (मनसा) उशिजो जग्मुरभि तानि वेदसा (ऋ० ३।६०।१) । अधिजग्मुरवजग्मुरजानन् । यद्वै हृदयेनाभिगच्छति तज्जिह्वया वदति (तै० सं० ६।३।१०।४) । अभिगच्छति सञ्चेत्ति, अनुभवति । अभ्यागच्छः पतिं यत्त्वं भजमानम् (भा०) । मिथुनीभावं प्राप्नोरित्याह । आसीनस्य स्थितः कुर्यादभिगच्छंस्तु तिष्ठतः (मनु० २।१९६) । अभिगच्छन् अभिमुखं गच्छन् । मया पूर्वं बहुशोऽभिगतो हि सः (रा० ४।५६।११) । अभिगतः प्रपन्न उपहृष्टः । पूर्वं चाभिगतं सन्तो भजन्ते पूर्वसारिणः (भा० उ० ७।१४) । अभिगतमभिमुखं प्राप्तम् । पूर्वसारिणः पूर्वाचारानुकारिणः । आशावतेऽभिगताय सद्यः (बुद्ध० २।४०) । अभिगताय = अभ्यागताय = अभ्युपेताय । नावमन्येदभिगतं न प्रणुद्यात्कथं चन (भा० अनु० ६३।१३) । उक्तोऽर्थः । अस्मानभिगतश्चासि वयं च त्वामुपस्थिताः (भा० शां० ३५८।६) । उक्तपूर्व एवार्थः । सर्वदाऽभिगतः सद्भिः (रा० १।१।१५) । अभिगतः पर्युपासितः । नो ह्यनभिगतं मनसा वाग्वदति (श० ब्रा० ४।६।७।१९) । अनभिगतमविषयीकृतमविज्ञातम् । अधृष्यश्चाभिगम्यश्च यादोरत्नैरिवार्णवः (रघु० १।१६) । अभिगम्यः सुखमुपगम्यः । स्पृह्यो रुच्य इति तूपचारात् । अभिगमनीयाश्च गुणाः सर्वस्य (हर्ष०) । इहोक्तपूर्व औपचारिक एवार्थः । विषवृक्षो नियोगी च यदेवाश्रित्य वर्धते । चित्रं करोति तस्यैव स्थानस्यानभिगम्यताम् (राज० ८।९१) ॥ अनभिगम्यताऽनुपेयता, उपगमानर्हता । तथा प्यनभिगमनीयो लोकस्य (मृच्छ० ४) । मनुमेकाग्रमासीनमभिगम्य महर्षयः (मनु० १।१) । अभिगम्य = अभिमुखं गत्वा । अभिगम्य हताशो हि निवृत्तो दहते कुलम् (भा० उ० ११५।८) । उक्तोऽर्थः । अभिगम्य तु विप्रोष्य (गौ० ध० १।६।२) । अनस्तमितमादित्यमभिगन्तुं समुत्सहे (रा० ४।६७।१५)। प्रत्युद्गन्तुमित्यर्थः । अभिगन्तैव ब्रह्मा कर्ता क्षत्रियः (श० ब्रा० ४।१।४।१) । अभिगन्ता = प्रतिपत्ता = बोद्धा । अभिगन्तास्मि भगिनीं मातरं वा तवेति ह (याज्ञ० २।२०५) । अभिगन्तास्मि = प्रकर्तास्मि = परामर्ष्टास्मि । प्रसह्य दास्यभिगमे दण्डो दशपणः स्मृतः (याज्ञ० २।२९१) । अभिगमः प्रकर्म पारदार्यम् । वधूसंयानं वा तदभिगमनोपस्थितमिदम् (मृच्छ० ६।४) । अभिगमनम् उपगमनम् । योजनं गच्छति (पा० ५।१।७४) इत्यत्र ततोऽभिगमनमर्हतीति च क्रोशशतयोजनशतयोरुपसंख्यानम् इति वार्तिकम् । यौजनशतिक आचार्य इत्युदाहरणम् । शतयोजनादभिगमनमर्हतीत्यर्थः । आदरप्रयुक्तमभिमुखं गमनमभिगमनम् ।

—गर्ज् (गर्ज शब्दे)। शार्दूलाविव चान्योन्यमामिषार्थेऽभ्यगर्जताम् (भा० द्रोण० १३३।३०)। अभ्यगर्जताम् आह्वयेताम्, आहूतिपूर्वमवाश्येताम्। उदनर्दताम्।

—गाह् (गाहू विलोडने)। अभि गोत्राणि सहसा गाहमानः (ऋ० १०। १०३।७)। अभिगाहमानो विलोडयमानः, सुदूरमन्तः प्रविशन्नित्यर्थः।

—गुप् (गुपू रक्षणे)। तेन नः सर्वतोऽभिगोपाय (श० ब्रा० २।३।४।४०)। अभिगोपाय गोपाय रक्ष। अनर्थकोऽभिः। तदर्थस्य सर्वत इत्यनेनोक्तत्वात्। लङ्कायामभिगुप्तायां सागरेण समन्ततः (रा० ४।५८।२६)। स्वचरित्राभिगुप्ता (रा० ५।५१।१७)। उक्तोऽर्थः।

—गुर् (गुरी उद्यमने)। अभी नो अग्न उक्थमिज्जुगुर्याः (ऋ० १।१४०। १३)। अभिजुगुर्याः=अभिनन्देः=अनुमन्येथाः=सहर्षं प्रतीच्छेः। इष्टं वीतमभिगूर्तं वषट्कृतं तं देवासः प्रतिगृभ्णन्त्यश्वम् (ऋ० १।१६२।१५)। अभिगूर्तं प्रशस्तमभिनन्दितम्। उतो तेषामभिगूर्तिर्न इन्वतु (ऋ० १।१६२।१२)। अभिगूर्तिः स्तुतिः।

—गॄ (गॄ शब्दे)। पूर्वमेवोदितमुत्तरेणाभिगृणाति (तै० सं० ५।१।४। १९)। अभिगृणाति=अनुवदति। अभि यं (सवं) देव्यदिति गृणाति (ऋ० ७।३८।४)। अभिगृणाति स्तवीति, जुषते वा। अभि यज्ञं गृणीहि नः (ऋ० १।१५।३)। अभिगृणीहि=अभिरोचय=अभिनन्द=जुषस्व। तां त्वा विश्वे अभिगृणन्तु देवाः (वा० सं० १४।४)। उक्तोऽर्थः। विश्वावसुरभि तन्नो गृणातु (ऋ० १०।१३९।५)। एहि स्तोमाँ अभि स्वराऽभि गृणीह्या रुव (ऋ० १।१०।४)। इमां वाचमभि विश्वे गृणन्तः (वा० सं० २।१८)। स्तुवन्त इत्यर्थः। अन्तर्वेद्यभिगरो बहिर्वेद्यपगरः (वाराह श्रौ० ३।२।५।३३)। अभिनन्दता प्रशंसता ऋत्विजाऽऽह्वानमभिगरः।

—गै (कै गै शब्दे)। अभि सोभरे गिरा। गाय गा इव चर्कृषत (ऋ० ८।२०।१९)। अभिगाय कीर्तय। प्राणांस्त्वं भूमानमभिगायतात् (छां० उ० १।५।४)। उक्तोऽर्थः। इन्द्रगाथाभिर्वै देवा असुरानभिगायाथैनानत्यायन् (ऐ० ब्रा० ६।३२)। अभिगाय गीतैर्विमुग्धान्कृत्वा। योद्धुमाभिमुख्येन प्राप्येति तु सायणः। तत्रभवान् गाङ् गतौ इत्यस्य ल्यपि रूपं पश्यति। तदपि शक्यग्रहम्। धातुस्तु विरलप्रयोगः। अपघ्नन्नेषि पवमान शत्रून् प्रियां न जारो अभिगीत इन्दुः (ऋ० ९।९६।२३)। अभिगीतः प्रशस्तः। भृङ्गराजाभिगीतानि (वनानि) (रा० ६।१५।११)। मधुरैर्गुञ्जारवैरनुनादितानीत्याह।

—ग्रह् (ग्रह उपादाने)। अभिजग्राह सौमित्रिर्विनद्योभौ पतत्त्रिभिः (भा० वन० २८७।२२)। अभिजग्राह प्रतिजग्राह प्रत्युज्जगाम। अभिहारो ऽभिग्रहणमित्यमरः। अभियोगः, अवस्कन्द आस्कन्द इत्यर्थः।

—घ्रा (गन्धोपादाने)। अभिजिघ्रन्ती भुवनस्य नाभिम् (ऋ० १।१८५। ५)। अभिजिघ्रन्ती लालयन्ती स्फालयन्ती। तस्मादसाविमां वृष्ट्याभ्युनत्त्य- भिजिघ्रति (ऐ० ब्रा० १।७)। अभिजिघ्रति चुम्बति। अभिघ्राणमुपभोगः। मृगतं हविर्योऽपभुङ्क्त इत्यर्थ इति षड्गुरुशिष्यः। अभिघ्राणं भौमरसादान- मिति भट्टभास्करादयः। लोके प्रायेणोपाङ्पूर्वस्य जिघ्रतेः प्रयोगः। वत्सं जातं गौरभिजिघ्रति (तै० सं० ६।४।११।४)। उक्तोऽर्थः।

—चक्ष् (चक्षिङ् व्यक्तायां वाचि, छन्दसि दर्शने प्रायेण)। इति ब्रुवाणं विदुरम् मुनिरभ्यचष्ट (भा० पु० ३।१३।५)। अभ्यचष्ट अभ्यभाषत। यत्काय- मभिचक्षते (भा० पु० ३।१२।५२)। अभिचक्षतेऽभिवदते। यो मा पाकेन मनसा चरन्तमभिचष्टे अनृतेभिर्वचोभिः (ऋ० ७।१०४।८)। अभि- चष्टेऽभिशपति, परुषं वदति। मित्रः कृष्टीरनिमिषाऽभि चष्टे (ऋ० ३।५९। १)। अभिचष्टेऽभितः पश्यति। अभि यो विश्वा भुवनानि चष्टे (ऋ० ७।६१। १)। उक्तोऽर्थः। कदा चिकित्वो अभि चक्षसे नः (ऋ० ५।३।९)। अनुग्रह- बुद्ध्या करुणाकटाक्षेण द्रक्ष्यसीत्याह। ऋजु मर्तेषु वृजिना च पश्यन्नभि चष्टे सूर्यो अर्य एवान् (ऋ० ६।५१।२)। अभि ब्रह्माणि चक्षाथे ऋषीणाम् (ऋ० ७।७०।५)। उक्तोऽर्थः। अथापि यत्र च्छिद्र इवादित्यो दृश्यते रथनाभिरिवाभि- ख्यायेत (ऐ० ब्रा० ३।२।४)। अभिख्यायेत प्रतीयेत। वेदाहं तस्य भेषजं चीपुद्रुरभिचक्षणम् (अथर्व० ६।१२७।२)। अभिचक्षणं वशीकरणमन्त्रमभि- चारमन्त्रं वा।

—चर् (चर गतिभक्षणयोः)। यथैवाहं नाभिचरे कदाचित्पतीन् (भा० वि० १६।६)। व्यभिचरामीत्यर्थः। विद्योतक इति त्यक्तः। पतिं या नाभि- चरति मनोवाग्देहसंयता (मनु० ९।२९)। उक्तोऽर्थः। यथा नाभिचरेतां तौ वियुक्तावितरेतरम् (मनु० ९।१०२)। अत्राप्यभिचरणमतिचरणमाह। तत्र विराधदनुकबन्धप्रभृतयः केप्यभिचरन्तीति नः श्रुतम् (महावीर० २)। अभिचरन्ति अपचरन्ति दुर्व्यवहरन्ति। वेदे दुर्धिया जिहिंसिषया वा वैरिषु मन्त्रादिप्रयोगेऽभिचरतिः प्रसिध्यति। तथा चोदाहृतयः—मा नो घोरेण चरताभि धृष्णु (ऋ० १०।३४।१४)। तं त्वष्टा हतपुत्रोऽभ्यचरत् सोऽभि- चरणीयमपेन्द्रं सोममाहरत् (श० ब्रा० १२।७।१।१)। अथो हैनयाप्यभिचरेत्

(एनया = उद्वासनीयेष्ट्या) एतया वै भद्रसेनमजातशात्रवयाऽऽरुणिरभिचचार (श० ब्रा० ५।५।५।१४)। मायायोगविदो वेदविदो वधं वाभिचरेयुः (कौ० अ० ४।३।११)। **मन्त्रप्रयोगेणातिवृष्टिं शमयेयुरित्यर्थः।** अमुष्येति द्विषच्छब्देऽभिचरन् (का० श्रौ० २।४।२७)। **वैरिमारणानुकूलो व्यापारोऽभिचारः, तं फलत्वेनाभिलषन्नित्यर्थः।** अभिचार्यमाणोपि तां दिशं गत्वा (का० श्रौ० १५।२।६)। **अभिचारकर्मणा मार्यमाणोपीत्यर्थः।** वृष्ट्यायुः पुष्टिकामो वा तथैवाभिचरन्नपि (याज्ञ० १।२९५)। **अदृष्टोपायेन परपीडाऽभिचार इति मिताक्षरा।** पूर्वाभिचरिता (मागधी नदी) राम सुक्षेत्रा सस्यमालिनी (रा० १। ३२।१०)। **पूर्वाभिचरिता पूर्वदिग्गामिनी।** वक्षोभिचारि चरुभाण्डमिव स्तनं यो देव्या विदेहदुहितुर्विददार काकः (हनुमन्नाटके ६।३२)। **वक्षोभिचारि वक्षोभिचरतीति वक्षोपचरणशीलः। क्लीबत्वं दुःसमाधानम्।** उपचाराभिचाराभ्यां धर्ममावाहयस्व वै (भा० आदि० २२२।४३)। **अभिचारो देवताकर्षणशक्तिरिति नीलकण्ठः।** धर्मं धर्मराजम्। ब्रह्मद्विषो ह्येष निहन्ति सर्वानाथर्वणस्तीव्र इवाभिचारः (महावीर० ११६२)। **पूर्वतर एवार्थः।** ध्रुवं कर्तुः श्रद्धाविधुरमभिचाराय हि मखाः (महिम्नः २१)। **अभिचाराय हिंसायै विनाशाय।** अनुप्लवः सहायश्चानुचरोभिचरः समाः (अमरः)। **अभिसर इति पाठान्तरम्। तत्साधीयः।**

—**चुद्** (**चुद संचोदने**)। ऋषिः कश्चिदागत्य मम जन्माभ्यचोदयत् (भा० आदि० ७१।१६)। **अभ्यचोदयत् = अपृच्छत्। नार्थोऽभिना।** असुरास्तत्र मां दृष्ट्वा कस्त्वमित्यभ्यचोदयन् (भा० आदि० ७६।३७)। **उक्तोऽर्थः।**

—**जन्** (**जनी प्रादुर्भावे**)। कामात्क्रोधोऽभिजायते (गीता०)। **आविर्भवति, संभवतीत्यनर्थान्तरम्।** शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते (गीता० ६।४१)। **अभिजायते पुनर्जायते।** तस्याः स्पृष्ट्वैव सलिलं नरः शैलोभिजायते (रा०)। **सद्यो जायत इत्यर्थः। अभिः सामीप्ये।** कामं क्रोधं च लोभं च दम्भं दर्पं च भूमिपः। सम्यग् विजेतुं यो वेद स महीमभिजायते (भा० उ० १२९।३३)। **महीं शासितुमर्हति।** एवं ज्येष्ठो प्यथोत्सिक्तो न राज्यमभिजायते (भा० उ० १४९।१३)। **प्रथमज इति न राज्येधिक्रियत इत्युक्तं भवति।** इषं स्वरभिजायन्त धूतयः (ऋ० १।१६८।२)। **इषि स्वश्च निसर्गतोऽधिकृता भवन्तीत्यर्थः।** जायमानाऽभिजायते देवान्त्सब्राह्मणान्वशा (अथर्व० १२।४।१०)। **संभवत्यभिजातानामभिमानो ह्यकृत्रिमः** (कथा० १८।५५)। **अभिजाताः कुलोद्गताः = महति कुले संजाताः।** जात्यस्तेनाभि-

जातेन शूरः शौर्यवता कुशः (रघु० १७।४)। संकीर्णं नाभिजातेषु नाप्रबुद्धेषु संस्कारं (वदेत्)। उक्तोऽर्थः। प्रजल्पितायामभिजातवाचि (कु० १।४५)। अभिजाता वल्गुमधुरा। अभिजातं खल्वस्य वचनम् (विक्रम० १)। अभिजातं दक्षिणं सदाक्षिण्यम्। अभिजातमभिहितं देवेन (हर्ष०)। अभिजातमुदात्तं युक्तं सुन्दरम्। क्षीणवृत्तेरभिजातस्येव मणेः (योग० सू० १।४०)। अभिजातस्य मणेः = अनुपहतप्रसादस्य स्वभावनिर्मलस्य स्फटिकस्य। अभिजातं हि ते मन्ये यथा मातुस्तथैव च (रा० २।३५।१५)। अभिजातमभिजननं स्वभाव इति भूषणम्। परचक्राभिजातस्य दुर्बलस्य बलीयसा (भा० शां० १३१।३)। परचक्रमभिजातं संमुखं यस्य, परचक्रेणाभिभूतस्येत्यर्थः। मा शुचः सम्पदं दैवीमभिजातोसि पाण्डव (गीता० १६।५)। दैव्या सम्पदा सहैव जातोऽसीत्यर्थः। सो भिजात्या च भक्त्या च (भा० द्रोण० ११०।६६)। अभिजातिराभिजात्यम्, कौलीन्यम्। आढ्योऽभिजनवानस्मि (गीता० १६।१५)। अभिजन उच्चैः कुलम्। तुल्योप्यभिजने जातो न कश्चित्पर्युपासते (भा० शां ३६०।७)। पतिं देवं त्यक्त्वा भुवनपतिमुच्चैरभिजनम् (मुद्रा० ६।६)। अभिजनः कुलमन्वयोऽन्ववायः। तुल्याभिजनेषु राज्ञां वृत्तिरीदृशी (माल० १)। विवादे विद्याभिजनसम्पन्ना वृद्धा मेधाविनो धर्मेष्वविनिपातिनः (आप० ध० २।२९।५)। श्रुतं तन्माहात्म्यं यदभिजनतो यच्च गुणतः (मालती० २।१३)। अभिजन आभिजात्यम्। येषामभिजनं प्राप्य मतिः क्रोधसमन्विता (रा० ५। ८७।१५)। उक्तोऽर्थः। कल्याणाभिजनः साधुरदीनः सत्यवागृजुः (रा० २। १।२१)। कल्याणानां जन्मभूरित्यर्थः। अभिजनो ह्येष वेतसावकयोः (मी० शा० भा० १।२।१।१०)। अभिजनः प्रभवः। एष इत्यनेनैता आपः परामृश्यन्ते। विशुद्धवंशाभिजनाग्रहस्तः...राघवगन्धहस्ती (रा० ३।३१।४६)। अभिजनो जन्म। अभिजनश्च (पा० ४।३।९०) इति सूत्रे भाष्ये निवासो नाम यत्र सम्प्रत्युष्यते। अभिजनो नाम यत्र पूर्वैरुषितम् इत्युक्तम्। वृत्तिश्च— अभिजनः पूर्वबान्धवः। तत्सम्बन्धाद्देशो प्यभिजन इत्युच्यत इति। पूर्वबान्धवेऽर्थे वृत्तिकारवचः प्रमाणम्। सर्वो प्यभिजनः श्रीमाञ्श्रीमतः सत्यवादिनः (रा० २।१९।३६)। अभितो वर्तमानो जनः, परिजनः परिवार इत्यर्थः। वयसा शास्त्रतो धैर्यात्कुलेनाभिजनेन च (भा० उ० १२।१५)। सह सा सहसाऽभिजनैः स्निग्धैः कुञ्जमन्दिरम् (सा० द० ७।१५ इत्यत्रोदाहरणम्)। उक्तोऽर्थः।

—जल्प् (जप जल्प व्यक्तायां वाचि)। ये क्षन्तारो नाभिजल्पन्ति

चान्यान् (भा० अनु० १०२।३१)। **अपवदन्ति, निन्दन्तीत्यर्थः।** सोऽयमित्य-भिसम्बन्धाद् रूपमेकीकृतं यदा। शब्दस्यार्थेन तं शब्दमभिजल्पं प्रचक्षते (वा० प० २।१२८)।। **निगदव्याख्यातम्।**

**—जि (जि जये, जि त्रि अभिभवे)।** प्रामुं जयाऽभीमे जयन्तु (अथर्व० ६।१२६।३)। **अभिजयन्तु शत्रूनभिमुखं गच्छन्तो जयं प्रतिपद्यन्तामित्यर्थः।** सर्वांल्लोकान्पशुबन्धयाज्यभिजयति (आप० श्रौ० ७।१।१।१)। **पूर्वेण समोऽर्थः।**

**—जीव् (जीव प्राणधारणे)।** यस्य सीता भवेद्भार्या...। अभिजीवेत्स सर्वेषु लोकेष्वपि पुरन्दरात् (रा० ३।३४।१८)। **अभिजीवेत् = अभ्यधिकं जीवेत्।**

**—ज्ञा (ज्ञा अवबोधने)।** पितृपक्षे ते पार्था मातृपक्षे च वृष्णयः। द्वौ पक्षावभिजानीहि त्वमेतौ पुरुषर्षभ (भा० उ० १४०।१०)।। इदं तु नाभि-जानामि तव धीरस्य नित्यशः (भा० उ० ५४।२)। यथाहमभिजानीयां ब्राह्मणं लक्षणैः (भा० आदि० २८।६)। न पापमभिजानासि साध्वी साधुव्रते स्थिता (भा० वि० ३।२२)। **अभिजानासि जानासि। अपार्थोऽभिः।** कुब्जे त्वां नाभिजानामि श्रेष्ठां श्रेष्ठाभिवादिनीम् (रा० २।६।३८)। **नाभिजानामि न सम्यग् जानामि।** नहीदृशमहं भावमवशः प्राप्य केवलम्। यदेवमभिजानामि का व्यथा मे विजानतः (भा० शां० २२४।८)।। **उक्तोऽर्थः।** न पुत्रमभि-जानामि त्वयि जातं शकुन्तले (भा० आदि० ७४।७३)। **नाङ्गीकरोमि। ममेदमपत्यमिति नैव प्रतिपद्ये।** अहं तन्नाभिजानामि यत्कृतं न मया पुरा (भा० आदि० ६३।११)। **उक्तोऽर्थः।** नूपुरे त्वभिजानामि नित्यं पादाभि-वन्दनात् (रा० ४।६।२२)। **अभिजानामि प्रत्यभिजानामि। परिचिनोमि।** अभिजज्ञे महाबुद्धि (विदुरं) महाबुद्धिर्युधिष्ठिरः (भा० आश्रम० २६।२३)। **प्रत्यभिजज्ञावित्यर्थः।** अभिज्ञानं नरेन्द्राणां विक्षतं प्रेक्ष्य संयुगे (भा० शल्य० ४।५)। **अभिज्ञानम् केतुम्।** तस्यै भर्तुरभिज्ञानमङ्गुलीयं ददौ कपिः (रघु० १२।६२)। **अभिज्ञानं परिचायकं चिह्नम्।** वत्स योगिन्यस्मि मालत्य-भिज्ञानं धारयामि (मालती० )। **अभिज्ञानम् प्रत्यभिज्ञानलक्षणम्।** पूर्ववृत्तमभिज्ञानं भूयः सम्प्रत्यभाषत (रा० ५।६८।१)। **अभिज्ञानं संस्मरणम्।** राजभावस्त्वभिज्ञातो भवेत् (शा० १)। **अभिज्ञातो विदित उद्भिन्नो विवृतः।** अभिज्ञावचने लृट् (पा० ३।२।११२)। **अभिज्ञा स्मरणम्।**

—डी (डीङ् विहायसा गतौ)। आभिमुख्येन गमनमभिडीनं प्रचक्षते (भा० कर्ण० ४१।२७)।

—तड् (तड आघाते)। उल्काभिताडितशिखः शिखी शिवः (व० बृ० सं० ११।६१)। अभिताडिता ग्रस्ता। वाक्शरैरभिताडितः (रा०)। आहतः क्षत इत्यर्थः।

—तन् (तनु विस्तारे)। तद्वो यामि द्रविणं सद्य ऊतयो सेना स्वर्ण ततनाम नॄँरभि (ऋ० ५।५४।१५)। अभिततनाम=अभिततान् करवाम। अभि व्रजं तत्निषे गव्यमश्व्यम् (ऋ० ९।१०८।६)। अभितत्निषे सन्दानितचरणं कुरु।

—तप् (तप सन्तापे)। तानथर्वण ऋषीनाथर्वणांश्चार्षेयानभ्यश्राम्यदभ्यतपत् समतपत् (गो० ब्रा० १।१।५)। अभ्यतपत्=ऊष्मणाऽकदर्थयत् सोष्मणोऽकरोत्, घर्ममन्वभावयत्। घर्म इवाभितपन् दर्भ (अथर्व० १९।२८।३)। अभितस्सन्तापं कुर्वन्नित्यर्थः। तस्मात् किमभितप्यन्तं वाक्शरैरुपकृन्तसि (भा० द्रोण० १५१।२७)। अभितप्यन्तं दुःख्यन्तम् दूयमानम्। 'अभितप्तमयोपि मार्दवं भजते कैव कथा शरीरिषु (रघु० ८।४३)। अभितप्तम् उत्तप्तम्। सन्तप्तम्। सम्यक् तापं प्राप्तम्।

—तर्ज् (तर्ज भर्त्स भर्त्सने)। तां परुषै र्वाक्यैरभितर्ज्य (रा० ३।५५।३२)।

—तस् (तसु उपक्षये)। बृहस्पते अभि ये नस्ततस्रे (ऋ० ४।५०।२)। अभिततस्रे=अभितेसिरे=उपक्षपयामासुः=लुलुण्ठुः=मुमुषुः।

—तृद् (उतृदिर् हिंसानादरयोः)। अभ्यभि हि श्रवसा ततर्दिथोत्सम् (ऋ० ९।११०।५)। ततर्दिथ चकर्तिथ रेदिथ विववरिथ। अभि गन्धर्वमतृणदबुध्नेषु रजःस्वा (ऋ० ८।७७।५)। अभ्यातृणत्=अहिनत्।

—तॄ (तॄ प्लवनतरणयोः)। उभा तेरते अभि मातरा शिशुम् (ऋ० १।१४०।३)। अभितेरते=उपेतः। तरतिरिह गतिसामान्ये प्रयुक्तः। (हयाः) कथं नाभ्यतरंस्तात पाण्डवानामनीकिनीम् (भा० द्रोण० ९।२०)। नाभ्यतरन् नासादयन्। नोपायन्।

—त्यज् (त्यज हानौ)। जनपदान्ते ध्रुवनिधिमापदर्थमभित्यक्तैः कारयेत् (कौ० अ० २।५।४)। अभित्यक्तो घोषितवधदण्डः।

—दस् (दसु उपक्षये)। यो अस्माँ अभिदासति (ऋ० १०।९७।२३)।

उ[illegible]र्थः । [illegible] । यश्चैनमभि-
दासति (छां० उ० १।२।८) । पीडयतीत्यर्थः ।

—दिव् (दिवु क्रीडाविजिगीशव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्ति-
गतिषु) । प्राणान्संत्यजतां युद्धे प्राणद्यूताभिदेवने (भा० शल्य० १५।८) ।
अभिदेवनम् अभिदेवनफलकं यत्राक्षैर्दीव्यते ।

—दिश् (दिश अतिसर्जने, दिशिरुच्चारणक्रिय इति भाष्यम्) । यां
यामभ्यदिशत् सा सैनमकामयत (पञ्च० ब्रा० १२।११) । अभ्यदिशद् निर-
दिशत् प्रत्यवामृशत् । अभ्यध्यायदिति वा ।

—दीप् (दीपी दीप्तौ) । सोऽस्त्रं तदभिदीप्यन्तमापतन्तं शितैः शरैः ।
तस्तम्भे बाणजालेन (हरि० २।७३।४६) ॥ अभिदीप्यन्तम्=अभिदीप्यत्,
अभिमुखं ज्वलत् । अभिदीप्यन्तमापतन्तमिति पुंसि प्रयोगो दृष्यतः ।

—दृश् (दृशिर् प्रेक्षणे) । रजस्वलाभिदृष्टं च तं भागं रक्षसां विदुः
(भा० अनु० २३।४) । अभिदृष्टमभिलक्षितं दृग्विषयीभूतम् । द्रौपद्या नः
सहासीनान् अन्योन्यं योऽभिदर्शयेत् । स नो द्वादश वर्षाणि ब्रह्मचारी वने
वसेत् (भा० आदि० २१२।२९) ॥ अभिदर्शयेदात्मानमिति शेषः । अन्योऽन्यस्य
संमुखे संनिदधीतेति तात्पर्यार्थः । गिरिमिमं सदा । नाशक्नुवन्नभिद्रष्टुं कुत
एवाधिरोहितुम् (भा० वन० ११०।१४) ॥ अभिद्रष्टुमुल्लोकयितुम् । उदीर्थे-
ऽभिः । स यैः स्पृष्टोऽभिदृष्टो वा संविष्टोऽनुगतोपि वा (भा० पु० ६।११।२२)।
अपार्थोऽभिः । दृष्ट इत्येवार्थः । यत्तातो मामभिद्रष्टुं करोति प्रवणं मनः
(मार्क० पु० २३।८९) । इहापि नार्थोऽभिना । अभिद्रष्टुं मनः प्रवणं कुरुते=
दर्शनोन्मुखं करोति दर्शनोत्को भवति दिदृक्षत इति यावत् । अभियोगस्तु
विज्ञेयः शङ्कातस्त्वाभियोगतः । शङ्काऽसतां तु संसर्गात् तत्त्वं ह्योढाभिदर्शनात्
(याज्ञ० २।५ इत्यत्र मिताक्षरायामुद्धृतं नारदवचनम्) ।

—द्युत् (द्युत दीप्तौ) । अभिद्योतिष्यते रामो भवन्तमचिरादिह (भट्टि०
८।८९) । अभिद्योतिष्यते त्वदन्तिके विराजिष्यते । अभिः सामीप्यमाह ।

—द्रा (द्रा कुत्सायां गतौ) । न तं तिग्मं चन त्यजो न द्रासदभि तं गुरु
(ऋ० ८।४७।७) । अभिद्रासत् आसादयति । द्रातेः पञ्चमे लकारे तिपि
रूपम् ।

—द्रु (द्रु गतौ) । सिन्धो यद्वाजां अभ्यद्रवस्त्वम् (ऋ० १०।७५।२) ।
अभ्यद्रवः=अभ्यधावः । अभ्यद्रवन्मत्स्यराजं रथव्रातेन सर्वशः (भा० वि०

३३।४) । उक्तोऽर्थः । पयस्यभिद्रवति भुवं युगावधौ सरित्पतिर्नहि समुपैति रिक्तताम् (शिशु० १७।८०) । भुवं पयसि जलेऽभिप्लवमाने सतीत्याह । अभिद्रवत्ययस्कान्तमयो निश्चेतनं यथा (भा० शां० २११।३) । अभिद्रवति अभिमुखं सरति । मकरन्देन प्रतिहतो जामाता बलात्कारेणाभिद्रवन् (मालती० ७) । अभिद्रवन् उपद्रवन् आस्कन्दन् । गजा इवान्योन्यमभिद्रवन्तः (मृच्छ०) । उक्तोऽर्थः । अभिद्रुतमिवारण्ये सिंहेन गजयूथपम् (रा० २।८।३६) । अभिद्रुतम् आक्रान्तमास्कन्नम् । जन्ममृत्युजराव्याधि-वेदनाभिरभिद्रुतम् । अपारमिव चास्वस्थं संसारं त्यजतः सुखम् (भा० शां० ९।३३) ॥ अभिद्रुतमाक्रान्तं परीतमुपहतम् । अपरेद्युरुद्यति द्युमणावुद्दामद्युतावभिद्रुततारके (हर्ष० उ० १) । अभिद्रुतास्तारका न्यक्कृतास्ताराः । अभिद्रवणमाप्लावमवस्थानं सविग्रहम् (रा० ६।४०।२५) । अभिद्रवणं युद्धमार्गविशेषः । भारते शल्यपर्वणि ५७।१६ इत्यत्रापि गदायुद्धाङ्गत्वेनोपन्यस्तम् । वगेनाभ्यागमनमर्थः ।

—द्रुह् (द्रुह जिघांसायाम्) । अभिद्रुग्धा परे चेन्नो भेतव्यं परन्तप (भा० उ० ५५।१८) । अभिद्रुग्धा जिघांसिता द्रोहविषयं नीताः । मया पुनरेभ्य एवाभिद्रुग्धमज्ञेन (उत्तर० ६) । उक्तोऽर्थः । चतुर्थी तु दुरुक्ता । द्वितीया तु युक्ता । नित्यमस्मच्छरीरमभिद्रोग्धुं यतते (मुद्रा० १) । पूर्वेण समोर्थः ।

—धा (डुधाञ् धारणपोषणयोः) । चकितमभिधत्ते श्रुतिरपि (महिम्नः २) । वर्णयति निर्दिशति निरूपयति । अभिधास्ये च ते राजन्नक्षय्यं द्रव्यमुत्तमम् (भा० आश्व० ७।२४) । अभिधास्ये वक्ष्ये कथयिष्ये । कोऽभिधास्यति...स्वयमात्मनः स्तवे कथाम् (रा० ३।३५।२२) । प्रभवन्तं पदस्थं च परुषं कोऽभिधास्यति (रा० ६।१२।७) । उक्तचर एवार्थः । साक्षात्संकेतितं योऽर्थमभिधत्ते स वाचकः । तन्नाम येनाभिदधाति सत्त्वं तदाख्यातं येन भावम् (ऋक् प्रा० १२।५) । निगदव्याख्यातम् । कैनोत्क्रमते कथं बाह्यमभिधत्ते कथमध्यात्मम् (प्रश्नोप० ३।१) । अभिधत्ते धारयति यच्छति । रशनाभिर्दशभिरभ्यधीताम् (ऋ० १०।४।६) । अबध्नीताम् (तस्करौ) । अभिपूर्वो दधातिश्छन्दसि बहुलं बन्धने वर्तते । इमाश्च काश्चन दिशः—प्रतूर्त्तं वाजिन्नाद्रवेत्यश्वमभिदधाति (तै० सं० ५।१।२।१) । रज्ज्वा वै वत्सं च मातरं चाभिदधाति (जै० ब्रा० १।१६) । यस्त्वा मृत्युरभ्यधत्त जायमानं सुपाशया (अथर्व० ३।११।८) । शतेन पाशैरभिधेहि वरुणैनम् (अथर्व० ४।१६।७) । भ्रातृव्यगवीं वाऽभिदध्याद् गोष्ठे वा न्यसेत् (सत्या० श्रौ० २२।२।२६) । अभि तं निर्ऋतिर्धत्तामश्वमिवाश्वाभिधान्या (अथर्व० ४।३६।१०) । मुञ्च गां वरुण

पाशात् द्विषन्तं मेऽभिधेहि (गो० गृ० ४।१०।१८)। मन्त्र ब्रा० २।८।१३ इत्यत्राप्येवम्। जीवान्नो अभि धेतनादित्यासः पुरा हथात् (ऋ० ८।६७।५)। रिरक्षिषथा परीत न, परितो नोऽवस्थिता भवतेत्याह। विजित्य युधि कौन्तेयो मगधानभ्यधाद् बली (भा० सभा० ३०।१६)। सेनयाऽरुधदित्यर्थः। पतिर्यद् वध्वो वाससा स्वमङ्गमभिधित्सते (ऋ० १०।८५।३०)। अभिधित्सते परिधातुमावरीतुमिच्छतीत्युक्तं भवति। ददर्श गां (भुवम्) तत्र सुषुप्सुरग्रे यां जीवधानीं स्वयमभ्यधत्त (भा० पु० ३।१३।१०)। अभ्यधत्त प्रतिसमहरत्, अन्तरधापयत्। मा कस्मै धातमभ्यमित्रिणे नः (ऋ० १।१२०।८)। अभिधातम् परादातम्। बृहस्पते यो नो अभि ह्वरो दधे (ऋ० २।२३।६)। ह्वरो जिह्मता। तदस्मदभिमुखी करोति, तल्लक्ष्यं नः करोतीत्यर्थः। अभि वो देवीं धियं दधिध्व प्र वो देवत्रा वाचं कृणुध्वम् (ऋ० ७।३४।९)। उक्तोऽर्थः। यो ऽभिधास्यति (भा० पु० ६।१८।३७)। अभितो धारयिष्यतीत्यर्थः। तेनाभिहितम्। मयाऽभिहितम्। तेनोक्तम्। मयोक्तमित्यर्थः। यत्र वह्निरभिहितो दुद्रवद् द्रोण्यः पशुः (ऋ० ५।५०।४)। अभिहितो धुरि युक्तः। पुनरभिहितो रथः पुनरुत्स्यूतं (आप० श्रौ० ५।२९।३)। अभिहितो युक्तस्तुरङ्गैः। सर्वाः प्रजा रश्मिभिः प्राणेष्वभिहिताः (श० ब्रा० २।३।३।७)। अभिहिता बद्धाः। यदि स्थ तमसावृता जालेनाभिहिता इव (अथर्व० १०।१।३०)। उक्तोऽर्थः। ते मौञ्जीभिरभिधानीभिरभिहिता भवन्ति (श० ब्रा० ६।३।१।२६)। पूर्वोदित एवार्थः। अथो यो अर्वतः शिरोऽभिधाय निनीषति (अथर्व० १९।५०।५)। अभिधाय बद्ध्वा। तेनाभिधाय दस्यूनां शक्रः सेनामपावपत् (अथर्व० ८।८।५)। अभिधाय परिवेष्ट्य। वागेव मे नाभिधेयविषयमवतरति त्रपया (काद०)। अभिधेयं वक्तव्यम् प्रतिपाद्यम्। पूर्वमेवाक्षरं (अक्षरं श्रेयः) नान्यदभिधेयं ततः परम् (भा० अनु० ६९।९)। अभिधेयं वाच्यं निन्द्यम्। भवताप्यकृपणशौण्डीर्यमभिधातव्यम् (मृच्छ०)। अभिधातव्यं वक्तव्यम्। एतावतामर्थानामिदमभिधानम् (नि० १।२०)। अभिधानं नाम, वाचकम्। अभिधानं मम माल्यवानितीदम् (कथा० ७।११२)। अभिधानं नामधेयं समाख्या। षट्पादतन्त्री मधुराभिधानम् (रा० ४।२८।३६)। अभिधानं गानम्। अभिधानप्रगल्भस्य तव प्रत्ययघातिनी (रा० ३।३०।३)। अभिधानप्रगल्भस्य वाचि प्रौढस्य, प्रवचनपटोः। समुत्पन्नाभिधानोऽस्मि वाङ्माधुर्येण तेऽनघ (भा० शां० ३५४।१)। समुत्पन्नाभिधानो जातबन्धनः। अश्वाभिधानीमादत्ते (तै० सं० ५।१।२।१)। अभिधानी बन्धनरज्जुः। ते मौञ्जीभिरभिधानीभिरभिहिता भवन्ति (श० ब्रा० ६।३।१।२६)। उक्तोऽर्थः।

अभिधानी निदाने चत्वारि विशाखदामानि (सत्या० श्रौ० २४।२।६)। अभिधानी गोबन्धनार्था रज्जुः। निदाने पादबन्धनार्थे रज्जू। वत्सबन्धनार्थानि द्विशिरस्कानि दामानि। अभिधा व्यञ्जना लक्षणा इति तिस्रो वृत्तयः। अयं शब्द इममर्थमभिदधात्विति संकेतोऽभिधा। अभिधा असि भुवनमसि यन्ताऽसि (तै० सं० ७।१।११।१)। अभिधा इति क्विप्प्रत्ययान्तम्। हेऽश्व त्वं बन्धनीयोसीत्याह।

—धाव् (धावु गतिशुद्ध्योः)। एष वृषा कनिक्रदद् दशभिर्जामिभिर्यतः। अभि द्रोणानि धावति (ऋ० ९।२८।४)। अभिधावति = अभित्वरते। कान्तेव कृतसङ्केता (नदी) समुद्रमभिधावति (रा० ४।४१।२४)। प्रदीप्य यः प्रदीप्ताग्निं प्राक् चिरं नाभिधावति। भस्मापि न स विन्देत शिष्टं क्वचन भारत (भा० सभा० ६४।१०)॥ अभिधावति = अभित इतस्ततो धावति। मरीचितोयप्रायांस्तान् एवाभिधावति (भा० पु० ५।१४।१०)। अनुध्यायंस्तान् प्रति सरभसं प्रवर्तते। ग्रामघाते हिताभङ्गे पथिमोषाभिदर्शने। शक्तितो नाभिधावन्तो निर्वास्या सपरिच्छदाः (मनु० ९।२७४)॥ अभिधावन्तो रक्षार्थमभित्वरमाणाः। हिताभङ्गे जलसेतुभङ्गे इति कुल्लूकः। क्षेत्रोत्पन्नसस्यनाशने वृतिभङ्गे चेति तु मेधातिथिः।

—धृ (धृञ् धारणे)। युध्यमानं महेष्वासं...सर्वे ते नाभ्यधारयन् (भा० भीष्म० १०९।९)। नाभ्यधारयन् नासहन्त।

—धृष् (ञिधृषा प्रागल्भ्ये धृष प्रसहने)। न बहवः समशकन्नार्भका अभि दाधृषुः (अथर्व० १।२७।३)। नाभिदाधृषुः = न प्रसेहिरे = नाधिचक्रिरे नाभिबभूवुः। अर्भकाः = अल्पाः। तान्नाभ्यधृष्णुवन् (काठक० २५।६)। ञिधृषोपि धर्षणेऽर्थे प्रयोगः। ततो देवाः क्रियावन्तो दानवानभ्यधर्षयन् (भा० आश्व० ३।७)। उक्तोऽर्थः।

—ध्मा (ध्मा शब्दाग्निसंयोगयोः)। अभि दस्युं बकुरेणा धमन्तोरु ज्योतिश्चक्रथुरार्याय (ऋ० १।११७।२१)। अभिधमन्त उपधमन्तो वातेनाग्निं संयोजयन्तः।

—ध्यै (ध्यै चिन्तायाम्)। तं (सोमं) देवाश्च ऋषयश्चाभ्यध्यायन् कथमयमस्मान् सोमो राजागच्छेदिति (ऐ० ब्रा० १।२७)। अभ्यध्यायन् निरन्तरमचिन्तयन्। तासां रोहिणीमभ्यध्यायत् (तै० ब्रा० ३।१।४।२)। या वै श्रीरभ्यध्यासिषमिमास्ताः (श० ब्रा० ६।२।१।७)। उक्तचर एवार्थः। यं यं देवमभिध्यायेद् भक्तियुक्तेन चेतसा (वराह पु० १६६।४०)। पूर्वेण

**समोऽर्थः** । प्रजापतिर्वै स्वां दुहितरमभ्यध्यायत् दिवमित्यन्य आहुरुषसमित्यन्ये (ऐ० ब्रा० ३।३३) । **भार्यात्वेन ध्यानमकरोदिति सायणः** । प्रजापतिर्वै स्वां दुहितरमभिदध्यौ । दिवं वोषसं वा । तां सम्बभूव (श० ब्रा० १।७।४।१) । **अभिदध्यौ चकमे कामयाञ्चक्र इत्यर्थः** । अग्निर्ह ता अपोऽभिदध्यौ मिथुन्याभिः स्यामिति (श० ब्रा० २।१।१।५) । **इमाश्च कामेऽर्थेऽभिध्यायतेर्दिशः काश्चन दृश्याः**—सोमो वै राजा दिशोऽभ्यध्यायत् स दिशोऽनुप्राविशत् (तै० सं० ६।४।४।१८) । यज्ञो दक्षिणामभ्यध्यायत् (तै० सं० ६।१।३।२२) । स पुनरिमं लोकमभ्यध्यायत् (तै० सं० १।५।६।४) । आपो वरुणस्य पत्नय आसन् ता अग्निरभ्यध्यायत् (तै० ब्रा० १।१।३।८) । ता (अपः) अग्निरभ्यध्यायत् (तै० ब्रा० १।१।३।८) इति । आद्वारमनुवव्राज मङ्गलान्यभिदध्युषी (रा० २। १६।२१) । **अभिध्यायन्तीत्यर्थः** । इह **परार्थस्य सतृष्णं चिन्तनं नार्थः** । **चिन्तनमात्रं त्वर्थः** । स यद्येनं मनसाऽभिध्यातः । यज्ञो नोपनमेत् (श० ब्रा० १२।६।१।३) । **अभिध्यातः संकल्पितः, चिन्तितः** । सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः (मनु० १।८) । **अभिध्याय विचिन्त्य** । तथा तदनभिध्येयं वाक्यं यादवनन्दन (भा० शां० ४६।२७) । **अनभिध्येयम् अविचारणीयम्** । अभिध्योपदेशाच्च (ब्रह्म सू० १।४।२४) । **अभिध्या = इच्छा** । न चाचिकीर्षीत्परवस्त्वभिध्याम् (बुद्ध० २।४४) । **ममेदमस्त्विति सङ्कल्पोऽभिध्या** । अभिध्या वै प्रथमं हन्ति लोकान् (भा० उ० ४२।११) । **अभिध्या विषयस्मरणम्** । कामाभिध्या स्वशरीरं दुनोति (भा० उ० २६।५) । **कामाभिध्या विषयध्यानम्** । **अभिध्या तु परस्य विषये स्पृहेत्यमरः** । अनभिध्या परस्वेषु सर्वसत्त्वेषु सौहृदम् (भा० अनु० १३।५) । **अनभिध्याऽलोभः** । अभिध्याऽप्रख्यता चैव सर्वं लोभात्प्रवर्तते (भा० शां० १५८।५) । **अभिध्या चिन्ता दौर्मनस्यम्** । ईश्वरस्तमनुगृह्णात्यभिध्यानमात्रेण (योगसूत्रे १।२३ भाष्ये) । परद्रव्येष्वभिध्यानम् (मनु० १२।५) । **परधनमन्यायेन गृह्णामीत्येवं चिन्तनम्** । यो निर्वदेत संमोहाद् ब्राह्मणं वेदपारगम् । सोऽभिध्यानाद् ब्राह्मणस्य पराभूयादसंशयम् (भा० शां० ३२७।५०-५१) ।। **अभिध्यानात् शापाद्, अनुव्याहारात्** ।

—ध्वंस् (ध्वंसु अवस्रंसने, गतौ च) । पुत्राधिभिरभिध्वस्ताम् (भा० उ० ९०।९०)। **मनः पीडारजोवकीर्णाम् इत्याह** । **अभिप्लुतामिति पाठान्तरम्** । निशोऽभि वातमभिध्वंसयन् परीयात् (काठक० ११।६) । यदभिध्वंसयेत्पात्राणि (काठक० २७।८) । **उक्तोऽर्थः** ।

—नद् (नद शब्दे)। अन्येऽन्तरिक्षेऽभ्यनदन् घर्मान्त इव तोयदाः (भा० सभा० १२७।१४८)। अभ्यनदन् आक्रोशन्, उच्चैराक्रन्दन्। ननाद च महानादं त्रैलोक्यमभिनादयन् (हरि० २।१२६।१५)। प्रतिशब्दितं कुर्वन्। किन्नरोद्गीतमधुराः प्रतिश्रुत्याभिनादिताः (वाचः) (हरि० २।२८।४१)। अभिनादिता नादेन पूर्णाः।

—नन्द् (टुनदि समृद्धौ)। दैवहता बहुबुद्धयो विनश्यन्ति स्वल्पधियोपि विधिरक्षिता अभिनन्दन्ति (पञ्चत० )। अभिनन्दन्ति समृध्यन्ति। रिपुं निहत्याभिननन्द वै तदा। ह्यलम्बुषं पक्वमलम्बुषं यथा (भा० द्रोण० १०६। ३६)॥ अभिननन्द जहर्ष। अभिनन्दन्ति भूतानि विनाशे पापकर्मणः (रा० ५।२१।१३)। नन्दन्ति प्रसीदन्तीत्यर्थः। नाभिनन्दन्ति केलिकलाः (मालती० ३)। केलिकलासु न रमन्त इत्यर्थः। आत्मविडम्बनामभिनन्दन्ति (काद० )। विडम्बनया तुष्यन्ति, तां रोचयन्ते। अतस्ते वचो नाभिनन्दामि (शा० २)। न रोचये, नेदमभिमतं ममेत्यर्थः। नाभिनन्देत मरणं नाभिनन्देत जीवितम् (मनु० ६।४५)। अभिनन्देत=अभिनन्देत् इच्छेत्। नोभयेन प्रतिहृष्येत्, उभयत्रोदासितः स्यादित्यर्थः। अचिन्त्यं शीलगुप्तानां चरित्रं कुलयोषिताम्। इति चाभिननन्दुस्तामुपकोशां सभासदः (कथा० ४।८३)॥ अभिननन्दुः प्रशशंसुः शश्लाघिरे। साध्वित्यवदन्। ततोऽभ्यगच्छत् सहसा मन्दपालोपि भारत। अथ ते सर्व एवैनं नाभ्यनन्दंस्तदा सुताः (भा० आदि० २३३।२०)॥ नाभ्यनन्दन् नान्वमोदन्त, न मुदा प्रत्यगृह्णन्। हीनाङ्गं पृथिवीपालं नाभिनन्दन्ति देवताः (भा० उ० १४६।२५)। तत्र तल्लक्षणे राज्ञि न प्रसीदन्तीत्याह। वर्षोपवर्षौ तद् बुद्ध्वा साध्वीं तामभ्यनन्दताम् (कथा० ४।८६)। दानमानाभ्यां पर्यतोषयताम् इत्यर्थः। अभिनन्दस्व गच्छेयम् (रा० ४।१०।३३)। अभिनन्दस्व अभिनन्द अनुमन्यस्व। गमनं मेऽनुजानीहीत्याह। सम्यक् प्रणिहितं चार्थं पृष्टः सन्नाभिनन्दति (मनु० ८।५४)। नाभिनन्दति न प्रतिपद्यते नाभ्युपैति। न समाधत्त इति तु कुल्लूकः। यन्मे बभस्ति नाभिनन्दति (अथर्व० ६।२।२)। नाभिनन्दति न रोचते, नाह्लादयति। गान्धर्वेण विवाहेन बह्व्यो राजर्षिकन्यकाः। श्रूयन्ते परिणीतास्ताः पितृभिश्चाभिनन्दिताः (शा० ३।२१)॥ अभिनन्दिता अनुमोदितकर्माणः। द्वावप्यभूतामभिनन्द्यसत्त्वौ (रघु० ५।३१)। अभिनन्द्यं स्तुत्यं प्रशस्यम्, वन्द्यम्। आशीर्भिश्चाभिनन्द्यैतां जग्मुर्नगरमेव हि (भा० आदि० १४५।१८)। अभिनन्द्याभिवर्ध्य। अभिनन्दा विष्फुलिङ्गाः (श० ब्रा० १४।६।१।१६)। अभिनन्दाः प्रमदानुभूतयः। दाहप्रपाकौ शिशिराभिनन्दा धूमायनं पित्ताभिपन्ने नयने भवन्ति (सुश्रुत० २।२१३)। अभिनन्दोऽभिलाषः, कामः।

—नम् (णम् प्रह्वत्वे शब्दे च)। देवान्वै यज्ञो नाभ्यनमत् (शाङ्खा० ब्रा० १०।१)। देवान् प्रति प्रवणो नाभूदित्यर्थः। अभिनत इवोदरेण (क्षुधितः)। अभिनतो भुग्नः।

—नश् (णश अदर्शने)। छन्दसि तु व्याप्तौ वर्तते। मा नो दीर्घा अभिनशन् तमिस्राः (ऋ० २।२७।१४)। निगदव्याख्यातम्।

—नह् (णह बन्धने)। यथा सोम्य पुरुषं गन्धारेभ्योऽभिनद्धाक्षमानीय (छां० उ० ६।१४।१)। अभिनद्धाक्षः पटसंवृताक्षः। तस्य यथाभिनहनं प्रमुच्य प्रब्रूयात् (छां० उ० ६।१४।१)। अभिनहनं बन्धनम्।

—नी (णीञ् प्रापणे)। अभि सूयवसं नय (ऋ० १।४२।८)। अभिनय= इतो नय। स नः स्वर्गमभि नेष लोकम् (अथर्व० १२।३।१६)। अभिनेष= नय। पञ्चमो लकारः। सरस्वत्यभि नो नेषि वस्यो (ऋ० ६।६१।१४)। अभिनेषि समीपं नय। ऽभि मा वपुर्दृशये निनीयात् (ऋ० ७।८८।२)। अभि-निनीयात्=प्रापयेत्। सूदारालिकव्यञ्जनो वा रसप्रयोगार्थं राजवचनमर्थं चास्य लोभनीयमभिनयेत् (कौ० अ० १२।२।२३)। अभिनयेत् संमुखं नयेत्। केनोपायेन वै शक्यम् (रा० २। )। इत्यादिना राज्ञश्चिन्तामभिनयति (इति तत्र रामष्टीकाकारः)। स्वरूपमुपन्यस्यतीत्यर्थः। क्रोधमभिनयति। क्रोध-साभिमुख्यं नयति नाटयतीत्यर्थः। दृष्ट्वा शरं ज्यामभिनीयमानम्( भा० वन० १६।२०)। अभिनीयमानम् आरोप्यमाणम्। मित्रार्थमभिनीतस्त्वम् (रा० ४। २८।१३)। अभिनीतः प्रवणोऽनुकूलः। आशंसा प्रधारितोऽर्थोऽभिनीतश्चानभि-नीतश्च (पा० ३।३।१३२ सूत्रे भाष्ये)। अभिनीतः कारणयोग्यवशाच्छ्रय-प्राप्तिः। एतावदभिनीतार्थमुक्त्वा स जननीं वचः (रा० २।३६।३६)। अभिनी-तार्थं निर्णीतार्थम्। वाक्यं हितमुवाचेदमभिनीतार्थमर्थवत्(भा० शां० १३८।७२)। अभिनीतार्थं युक्तार्थम्। युक्तेऽतिसंस्कृते मर्षिण्यभिनीत इत्यमरः। तटाभि-नीतेनाम्भसा (कि० ८।३२)। तटाभिमुखं नीतं तटाभिनीतम्। अभिनीताश्च शिक्षाभिः (गजाः) (भा० भीष्म० ४६।६)। अभिनीता अभिविनीताः शिक्षिताः। अभिनीतानि शस्त्राणि (भा० शां० १००।१०)। संस्कृतानीत्यर्थः। गीतानि रम्याणि जगुः प्रहृष्टाः कान्ताभिनीतानि मनोहराणि (हरि० ८४४८)। अभिनीतान्यङ्गचेष्टाविशेषैर्युतानि। अक्षिभ्रुवौष्ठहस्तैरभिनीतं (पठेत्) (सुश्रुत० १।१३।६)। उक्तोऽर्थः। राजापथ्यकारिणोऽमात्यराक्षसस्य गृहजनं स्वगृहमभिनीय रक्षसि (मुद्रा० १।५)। अभिनीय प्रापय्य। आवितोस्मि श्रियं शत्रोरभिनीय च दर्शितः (मुद्रा० ६।१५)। अभिनीय=इहानीय। तान्

ब्राह्मणान्स्वभवनमभिनीय (अवदा० जा० १३)। उक्तोऽर्थः। ते ह्यपरिगृहीत-मभिनीय विक्रीणीरन् (कौ० अ० ५।२।२५)। अभिनीय दर्शयित्वा। ते भिनी-यैवाहः पशुमालभन्त। तेनाभिनीयैव रात्रेः प्राचरन् (तै० ब्रा० १।५।६।६)। अभिनीय=परिणमय्य=नीत्वा=गमयित्वा (इति सं० शार्०को०)। प्राप्येति तु सायणः। अभिनीय निशां प्रातः प्रतिष्ठामहे (बृ० श्लो० सं० ८।३०)। अभिनीय नीत्वेत्यर्थः। नार्थोऽभिना। श्रुतिमभिनीय (शा० ३ इत्यत्र कवि-वाक्यम्)। श्रवणं प्रयोगेण दर्शयित्वा, किञ्चिच्छ्रूयत इति रूपयित्वा। शिक्षा नरः समिथेषु प्रहावान् वस्वो राशिमभिनेतासि भूरिम् (ऋ० ४।२०।८)। अभिनेतासि=आहर्तासि। ताच्छील्ये तृन्नन्तमेतत्। तद्यत्तत्र यजुः पुरस्तादेत्य-भिनेतैव तदेति (श० ब्रा० १०।१।१।४)। आभिमुख्यं नयन्नर्थान् विज्ञेयोऽभि-नयो बुधैः (अग्निपु० ३४१ तमे अध्याये)। आभिमुख्यं नयन्=स्वरूपमुपन्य-स्यन्। ललिताभिनयं तमद्य भर्ता मरुतां द्रष्टुमनाः सलोकपालः (विक्रम० २।१८)। भावव्यञ्जकोङ्गचेष्टाविशेषोऽभिनयः। स्वर्गस्य लोकस्याभिनीत्यै (तै० सं० ६।६।१।१)।

—नु (णु स्तवने)। अभी नवन्तेऽद्रुहः प्रियमिन्द्रस्य काम्यम् (ऋ० ६।१। १००)। अभि त्वा शूर नोनुमः (ऋ० ७।३२।२२)। भृशं पुनः पुनर्वा स्तुम इत्यर्थः।

—नुद् (णुद प्रेरणे)। दण्डकाष्ठाभिनुन्नाङ्गी चचाल भृशमाकुला (भा० आश्व० ५८।२६)। अभिनुन्नम्=अभितः क्षिप्तम्। ततोऽभ्यनोदयत्कृष्णो युज्यतामिति दारुकम् (भा० आश्व० ५२।१)। अभ्यनोदयत् प्रैरयत् प्राचोद-यत्। तां यदर्वाचीमभिनुदन् गायत्यात्मन्नेव तद् वाचं प्रतिष्ठापयति (जै० ब्रा० १।१०२)।

—नू (णू स्तवने)। अभि वाणी ऋषीणां सप्त नूषत (ऋ० ९।१०३।३)। अभिनूषत स्तुवीत। स्वर्विदो अभ्यनूषत व्राः (अथर्व० २।१।१)। आभिमुख्येन स्तुवन्तीत्यर्थः। तमापो अभ्यनूषत वत्सं संशिश्वरीरिव (ऋ० ८।५८।११)। अभि कण्वा अनूषतापो न प्रवता यतीः (ऋ० ८।६।३४)।

—पच् (डुपचष् पाके)। क्षीरं स्थालीगतमभिपच्यमानम् (सुश्रुत० १। १४६।११)। अभिपच्यमानं श्रप्यमाणम्। श्रीयमाणम्। श्रीञः कर्मणि शानचि रूपम्।

—पत् (पत्लृ गतौ)। तं रामोऽभ्यपतत् क्षिप्रं लक्ष्मणश्च महारथः (रा० २।३४।१८)। अभ्यागतवान् इत्यर्थः। अभिपेतुस्ततः सर्वे तस्यामात्याः शुचि-

व्रतम् (रा० २।७७।१०)। अभिपेतुरभिमुखं ययुः। यं सत्यसन्धं सहसाऽभिपेतु-दिदृक्षया चारणसिद्धसङ्घाः (भा० वन० २४।२२)। अभिपेतुरभिजग्मुः। यदि वृक्षादभ्यपप्तत्फलं तत् (अथर्व० ६।१२४।२)। अभ्यपप्तत्=न्यपतत्=अवापतत्। एकेनैव शतस्यैष पातेनाभिपतिष्यति। हंसस्य पतितं काकः...(भा० कर्ण० ४१।३६)॥ अतिपतिष्यतीत्यर्थः। अतेरर्थेऽभिः। पुत्राणां नेत्रेभ्यो दुःखादभ्यपतज्जलम् (भा० द्रोण० १४६।१३२)। अभ्यपतत्=अवास्यन्दत। वैनतेयो यथा पक्षी गरुत्मान् पततां वरः। तथैवाभिपतिष्यामि भयं वो नेह विद्यते (भा० वन० १२।६०)॥ अभिपतिष्यामि उपद्रोष्यामि आस्कन्त्स्यामि। वधायाभिपपातैनान् (भा० आदि० १५३।२०)। पत्तिं पदातिं रथिनं रथेशस्तु-रङ्गसादी तुरगाधिरूढम्। यन्ता गजस्याभ्यपतद् गजस्थम्...(रघु० ७।३७)॥ उक्तोऽर्थः। (क्षिप्ता) शक्तिरभ्यपतद् वेगाल्लक्ष्मणे (रा० ६।८०।३४)। अभ्यपतत् अपतत्। नार्थोऽभिना। एकेनाभिपतत्यह्ना योजनानि चतुर्दश (भा० ५।३०५१)। अभिपतति=अतिक्रामति। हन्तुमभिपतति पाण्डुसुतम् (कि० १२।३६)। अभिपतति=अभित्वरते। तदेवासनमन्विच्छेद्यत्र नाभि-पतेत् परः (भा० वि० ४।१३)। अभिपतेत् ममेदमिति कृत्वा तदभिमुख आगच्छेत्। अभिव्रजेत् परम् इति पाठान्तरम्। अभिव्रजेत् परिभवेत्। सारथिं चाभ्यपातयत् (भा० भीष्म० ४५।१५)। न्यपातयदित्यर्थः। मुक्तशापश्च राजर्षिः कालेन महता ततः। ऋतुकालेऽभिपतितो मदयन्त्या निवारितः (भा० आदि० १८२।२४)॥ अभिपतितः संभवायोपेतः। अभिपतितुमना लघुत्वभीतेः (शिशु० ७।५१)। अभिपतितुमना अपसर्तुकामा। वियदभिपातलाघवेन (कि० ७।२१)। अभिपातो विहरणम्। नूनं प्रियाया मम नाभिपातः (रा० ३।६३।८)। अभिपातो नाशः। भवन्ति हि नरव्याघ्र पुरुषा धर्मचेतसः। दीनाभि-पातिनः...(भा० वन० ६।२३)॥ दीनपक्षपातिनः। अभिरानुकूल्ये।

—पद् (पद गतौ)। यथर्तु लिङ्गान्यृतवः स्वयमेवर्तुपर्यये। स्वानि स्वा-न्यभिपद्यन्ते तथा कर्माणि देहिनः (मनु० १।३०)॥ अभिपद्यन्ते प्राप्नुवन्ति। तस्याञ्जल्युदके काचिच्छफर्यकाऽभ्यपद्यत (भा० पु० ८।२४।१२)। अञ्जलि-जलमविन्ददित्यर्थः। ये वित्तमभिपद्यन्ते सम्यक्त्वं तेषु दुर्लभम् (भा० शां० २६।२०)। प्राप्नुवन्तीत्यर्थः। ऋत्विजो नाभ्यपद्यन्त (भा० आदि० २२३।२४)। न संन्यधीयन्त, नोपास्थिषत। समयं कृत्वा दुर्मतिर्नाभिपद्यते (रा० ४३०।८)। नाभिपद्यते नाभ्युपपद्यते, आपद्गतं मां नानुगृह्णातीत्याह। त्वमस्यामवस्थायां मातरं नाभिपद्यसे (रा० ३।५४।६)। उक्तोऽर्थः। शक्तोपि धार्ष्ट्यद्यार्दिक्यमक्रूरो नाभ्यपद्यत (हरि० १।३९।१३)। पूर्वेण समोऽर्थः। साहाय्यार्थं न गतवानिति शब्दार्थः। अभ्युपपत्तिरनुग्रहः (परित्राणम्) इत्यत्र

परित्राणार्थं समीपगमनमेव मूलमर्थ इति विस्पष्टम्। किरन् शरशतैस्तीक्ष्णैरभिपेदे महाकपिम् (रा० ५।४१।२४)। अभिमुखं जगामेत्यर्थः। रावणावरजा तत्र राघवं मदनातुरा। अभिपेदे निदाघार्ता व्यालीव मलयद्रुमम् (रघु० १२।३२)॥ उक्तोऽर्थः। यथा कुमारो जातः स्तनमभिपद्यते (जै० ब्रा० १।१)। व्यसने सज्जमानं हि यो मित्रं नाभिपद्यते (शुक्र० ३।२३१)। सहायो भूत्वा नोपगच्छति। क्रोशन्तं हि यथात्यर्थं नैनमभ्युपपद्यसे (रा० ३।५६।१८)। त्राणाय न गच्छसीत्यर्थः। अभ्यपद्यत कौन्तेयं कर्णो राजन् वृकोदरम् (भा० द्रोण० १३१।३०)। अभ्यपद्यत उपागमत् समासदत्। असमाप्तव्रते तस्मिन्स्वकार्यमभिपद्यताम् (रा० १।२६।७)। अभिपद्यताम् सम्पाद्यताम्, निर्वर्त्यताम्, साध्यताम्। अधर्मं धर्मवेषेण यद्यहं लोकसङ्करम्। अभिपत्स्ये शुभं हित्वा क्रियां विधिविवर्जिताम् (रा० २।१०९।६)॥ अभिपत्स्ये प्रतिपत्स्ये चरिष्यामि वर्तयिष्यामि। अस्त्रे ते वारुणाग्नेये ताभ्यां बाणसमाहिते। न यावदभ्यपद्येतां व्यावर्तदथ भास्करः (भा० ९८।५३)॥ नाभ्यपद्येतां न पराभूयेतामिति नीलकण्ठः। राज्यं गतजनं साधो पीतमण्डां सुरामिव। निरास्वाद्यतमं शून्यं भरतो नाभिपत्स्यते (रा० २।३६।१२)॥ नाभिपत्स्यते न प्रतिपत्स्यते नाङ्गी करिष्यति। मया यथोच्यमानं यदि नाभिपत्स्यसे (रा० ३।३६।२५)। उक्तोऽर्थः। क्षणमभ्यपद्यत जनैर्न मृषा गगनं गणाधिपतिमूर्तिरिति (शिशु० ६।२७)। अभ्यपद्यत स्वीकृतं प्रतिपन्नम्। मोहितः शरजालेन कर्तव्यं नाभ्यपद्यत (भा० द्रोण० १३३।३७)। नाभ्यपद्यत नाजानात्। न पण्डितः क्रुध्यति नाभिपद्यते (भा० शां० २२६।१५)। नाभिपद्यते न सज्जत इति नीलकण्ठः। दीना इतीव मे बुद्धिरभिपन्नाऽद्य तान्प्रति (भा० वन० ६।२४)। अभिपन्ना गता। मदान्धभावेन मयाभिपन्नो मतङ्गशापेन कुरङ्गभावः (महावीर० ६।४)। प्राप्त इत्यर्थः। न रोचते तद् वचनं हि तस्य कालाभिपन्नस्य विनाशकाले (रा० ४।१५।३१)। अभिपन्नः प्राप्तः संनिहितः कालोऽस्य। निष्ठायाः परनिपातः। कालाभिपन्नाः सीदन्ति सिकता सेतवो यथा (रा०)। उक्तोऽर्थः। बन्धवधभयाद्वा यः सामन्तो न्यायवृत्तिर्धार्मिकः सत्यवागविसंवादकः प्रतिग्रहीता मानयिता चाभिपन्नानाम् (कौ० अ० १।१८।६)। अभिपन्नानाम् प्रपन्नानामर्पितानाम्। आशया ह्यभिपन्नानामकृत्वाऽश्रुप्रमार्जनम् (भा० शां० ३६०।६)। उपेतानामित्यर्थः। अभिपन्नस्तु राजेन्द्रे साम्बो वृष्णिकुलोद्गतः (भा० वन० १६।१८)। अभिपन्नोभित आसादितः। सर्वतश्चाभिपन्नैषा धार्तराष्ट्री महाचमूः (भा०    )। अभिग्रस्तेत्यर्थः। तस्य कृष्णाभिपन्नस्य पीडितस्य बलीयसः। मुखाद् रुधिरमत्यर्थमुज्जगाम मुमूर्षतः (हरि० २।३०।५१)॥

न लक्ष्मणास्मिन् मम राज्यविघ्ने माता यवीयस्यभिशङ्कितव्या । दैवाभिपन्ना ...(रा० २।२२।३०) ॥ **उक्तोऽर्थः** । सीता वितत्रास यथा वनान्ते सिंहाभिपन्ना गजराजकन्या (रा० ५।२८।१) । **पूर्वेण समोऽर्थः** । अभिपन्नास्मि पाञ्चालि याज्ञसेनि क्षमस्व माम् (भा० वन० २३३।६१) । **अभिपन्नाऽपराद्धा** । मयाऽभिपन्नं तं चापि न सर्पो धर्षयिष्यति (भा० आदि० ५०।२०) । **अभिपन्नं रक्षितम्** । मया दैत्याः परित्यक्ता विनष्टाः शाश्वतीः समाः । मयाऽभिपन्ना देवाश्च मोदन्ते शाश्वतीः समाः ॥ उक्तोऽर्थः । क्रन्दन्ति भर्तारमिवाभिपन्नम् (भट्टि० १२।६६) । **अभिपन्नं मृतम्** । अभिपन्नमिदं लोके राज्ञामुद्धतदण्डनम् (भा० शां० ३२।२०)। **अभिपन्नं स्वभावजं कर्म** । न चैवालभसे त्राणमभिपन्ना बलीयसा (भा० वि० २२।८) । **अभिपन्ना परिभूता** । पूर्वाभिपन्नाः सन्तश्च भजन्ते पूर्वचोदनम् (भा० उ० ४।६) । **पूर्वम् अभिपन्नाः पूर्वं साहाय्यार्थं वृता इति नीलकण्ठः । पूर्वा चोदना प्रेरणा यस्य तमिति च सः** । न तु राजाभिपन्नस्य शेषः क्वचन विद्यते (भा० शां० ६८।५०) । राजाभिपन्नस्य कुतः सुखानि (भा० शां० ६८।५८) । **उभयत्राऽभिपन्नस् तिरस्कृत इत्यनर्थान्तरम्** । सर्वम् मृत्युनाऽभिपन्नम् (श० ब्रा० १४।६।१।५)। **आक्रान्तं व्याप्तमित्यर्थः** । येन चैवाभिपन्नोऽयम् (भा० पु० १।१३।२०)। चिरकार्याभिपत्ति च चिरकारी तथोच्यते (भा० शां० २६६।५) । **कार्याभिपत्तिं कार्याधिगमम्** । इतीदमवगच्छामि व्यक्तमर्थाभिपत्तितः (भा० कर्ण० ७।२४) । **अर्थाभिपत्तिः फलोपपत्तिः** । अथाभिपत्तिर्लोकस्य कर्तव्या पुण्यपापयोः (भा० शां० ३२।२०) । **अभिपत्तिरुपपत्तिः** । त एते वाचमभिपद्य पापया सिरीस्तन्त्रं तन्वते अप्रजज्ञयः (ऋ० १०।७१।६) । आत्तं राज्यमिदं पश्चात्तथा भ्रात्रा यवीयसा । नाभिपत्तुमलं रामः पीतसोममिवाध्वरम् (रा० २।६१।१८) ॥ पित्रा दत्ता नृपश्रीर्हि दायाद्यं तस्य धीमतः । नाभिपत्तुं मया शक्या सावित्री वृषलैरिव (रा० २।८८।१६) ॥ **उभयत्र स्वीकर्तुं प्राप्तुं प्रत्येषितुं वार्थः** । अधि वा अगन्न त्वभिपत्तुं शक्नुमः (श० ब्रा० ६।५।१।६) । **ग्रहीतुमित्यर्थः** ।

**—पा (पा रक्षणे)** । अग्निष्ट्वाभि पातु (वा० सं० १३।१६) । **अभितः पात्वित्यर्थः** । यो वामदब्धो अभि पाति चित्तिभिः (ऋ० ८।५६।३) । **अवेक्षते, प्रतिजागर्तीत्यर्थः** ।

**—पू (पूङ् पवने)** । यतोऽयं पवते । यदभिपवते (तै० ब्रा० २।३।६।१) । **अभिपवतेऽभिलक्ष्य वाति** ।

पॄ— पॄ( पालनपूरणयोः) । अभि नः पूर्यतां रयिः (पा० गृ० ३।४) । अभिपूर्यतां सम्पूर्णो भवतु । जना येस्मिन्कृशधनास्तान् धनेनाभिपूरय (हरि० २।५८।६२) । अतिरोहितोर्थः । शोको मामभ्यपूरयत् (रा० ५।५६।१११) । शोकाप्लुता विषादाविष्टाभूवमित्याह ।

—प्याय् (स्फायी ओप्यायी वृद्धौ) । अभि स्वेन पयसा पीप्यानाः (ऋ० ७।३६।६) । अभिपीप्यानाः = अभितो वृद्धाः । कानचि रूपम् । लिड्यङोश्चेति पीभावे द्वित्वे ह्रस्वे तुजादीनां दीर्घोऽभ्यासस्येति दीर्घः ।

—प्रच्छ् (प्रच्छ ज्ञीप्सायाम्) । उपशिक्षाया अभिप्रश्निनम् (तै० ब्रा० ३।४।६) । प्रश्नस्योपरि पुनः प्रश्नोऽभिप्रश्न इति सायणः ।

—प्रथ् (प्रथ प्रख्याने) । प्रत्यङ् स विश्वा भुवनाभि पप्रथे (ऋ० ६।८०।३) । अभिपप्रथेऽभिव्याप व्यानशे ।

—प्लु (प्लुङ् गतौ) । त आदित्या लघुभिः सामभिश्चतुर्भिः स्तोमैर्द्वाभ्यां पृष्ठ्याभ्यां स्वर्गं लोकमभ्यप्लवन्त (गो० ब्रा० पूर्व० ४।२२) । अभ्यप्लवन्त = अभ्युपायन् । सर्व एवामी क्लेशा अविद्याभेदाः । कस्मात् । सर्वेष्वविद्यैवाभिप्लवते (यो० सू० २।४ भाष्ये) । सर्वानिमान्क्लेशानभिव्याप्नोतीत्याह । रजसाभिप्लुतां नारीं नरस्य ह्युपगच्छतः (मनु० ४।४१) । रजस्वलाम्, रजोवकीर्णाम् । तमसाऽभिप्लुते लोके रजसा चैव भारत (भा० वि० ३३।१) । अन्धकारेण नैशेन पूर्णे । पितरि प्रोषिते प्रेते व्यसनाभिप्लुतेपि वा (याज्ञ० २।५०) । व्यसनाभिप्लुते व्याध्याद्यभिभूते । तत्र यद् द्रव्य भूतं तदुपायाभिप्लुतम् (चरक० विमान० ८।८७) । उपायाभिप्लुतमुपायव्याप्तम्, उपायग्रहणगृहीतमिति यावत् । अभिप्लुतमभिक्रुद्धमेकपार्श्वावदारितम् (भा० भीष्म० ४६।३२) । अभीतस्याभिमुख्येन सर्पणमभिप्लुतमिति नीलकण्ठः । त्रयोऽभिप्लवाः पृष्ठ्योऽभिजित्स्वरसामान उक्थ्या वाग्निष्टोमा वा (वाराह श्रौ० ११।२।३।११)। गवामयने यागेऽन्तराचर्यमाणोऽनुष्ठानविशेषोऽभिप्लवो भवति ।

—भज् (भज सेवायाम्) । यो भागो मामभिभजते स दीयताम् (पा० १।४।९० सूत्रे न्यासे) ।

—भा (भा दीप्तौ) । मा त्वा काचिदभिभा विश्व्या विदत् (ऋ० २।४२।१) । अभिभा दुर्निमित्तम् ।

—भाष् (भाष व्यक्तायां वाचि) । भोभवत्पूर्वकं त्वेनमभिभाषेत धर्मवित् मनु० २।१२८) । आलपेत् सम्बोधयेत् इत्यर्थः । नोदक्ययाऽभिभाषेत (मनु०

४।५७)। अभिभाषणमाभाषणमालापः। निशाचरीणां प्रत्यक्षमक्षमं चाभि-भाषणम् (रा० ५।२६।६)। उक्तोऽर्थः। गुरुतल्प्यभिभाष्यैनस्तप्ते स्वप्यादयो-मये (मनु० ११।१०३)। अभिभाष्य विख्याप्य।

—भू (भू सत्तायाम्)। अभि यो विश्वा भुवना बभूव (ऋ० ४।१६।५)। सर्वेभ्यो लोकेभ्यो ज्यायान्भवतीत्याह। अभि द्विषन्तं भविष्यामि (श० ब्रा० १२।४।४।३)। अभिभविष्यामि न्यक् करिष्यामि। सिंहनादं च सैन्यानां भीम-सेनरवोऽभ्यभूत् (भा० भीष्म० ४४।६)। अभ्यभूत् = अधर्यकार्षीत्। परं योनेरवरं ते कृणोमि मा त्वा प्रजाऽभिभूत् (अथर्व० ७।३५।३)। अभी षु णः सखीनामविता जरितॄणाम्। शतं भवास्यूतिभिः (ऋ० ४।३१।३)॥ धर्मे नष्टे कुलं कृत्स्नमधर्मोऽभिभवत्युत (गीता० १।४०)। अभिभवति बाधते पराजयते प्रभवति अधिकुरुते। विपदोऽभिभवन्त्यविक्रमम् (कि० २।१४)। अभिभवन्ति धर्षयन्ति आक्रामन्ति आस्कन्दन्ति। कृतपूर्वाणि यान्यस्य व्यञ्जनानि सुशिक्षितैः। तान्यप्यभिभविष्यामि (भा० वि० २।३)॥ अभिभविष्यामि = अतिशयिष्ये, विशेषयिष्यामि। परित्रायध्वं मामनेन मधुकरेणाभिभूयमानाम् (श० १)। अभिभूयमानां विप्रक्रियमाणां कदर्थ्यमानाम्। पुत्रस्नेहाभिभूतेन मया चाप्य-कृतात्मना। धर्मे स्थिता महात्मानो निकृताः पाण्डुनन्दनाः (भा० द्रोण० १३३। १२)॥ स्नेहाभिभूतेन स्नेहवशंवदेन स्नेहेन परवता स्नेहपराजितेन। श्रिया ऽभिभूतं देवेशं दुर्निरीक्ष्यतरं हरिम् (हरि० २।५५।३३)। अभिभूतं व्याप्तम्। एकश्चित्सन्नभिभूतिः (ऋ० ८।१६।८)। उक्तोर्थः। आजगाम ततः पम्पां लक्ष्मणेन सहाभिभूः (रा० ३।७५।११)। अभिभूरभिभावकः। सह प्रभुरिति पाठान्तरम्। अभिभूर्यज्ञो अभिभूरग्निरभिभूः सोमो अभिभूरिन्द्रः (अथर्व० ६।९७।१)। त्वष्टारमिन्द्रो जनुषाऽभिभूय (ऋ० ३।४८।५)। अभिभूय विभूतिमार्तवीम् (रघु० ८।३६)। अभिभूय = अतिशय्य। अभीवर्तो अभिभवः सपत्नक्षयणो मणिः (अथर्व० १।२९।४)। अभिभवोऽभिभावी। निरभिभवसाराः परकथाः (भर्तृ०)। अभिभवस्तिरस्कारः। अवमानो ऽधिक्षेपः।

—मन् (मन ज्ञाने)। अर्जुनं वासुदेवं च यौ तौ लोकोऽभिमन्यते (भा० आदि० २२४।९)। वस्तुतो नरनारायणौ सन्तौ तावर्जुनवासुदेवौ जानाति। अभिमानोऽन्यथाग्रहणम् मिथ्याज्ञानम्। अवीरामिव मामयं शरारुरभिमन्यते (अथर्व० २०।१२६।९)। उक्तोऽर्थः। वृद्धांश्च तात वैद्यांश्च ब्राह्मणांश्चाभि-मन्यसे (रा० २।१००।१३)। अभिमन्यसे बहु मन्यसे। न पश्चात्तेऽभिमन्यन्ते सुधामपि सुरोपमाः (रा० २।६१।१३)। अभिमन्यन्तेऽनुमन्यन्ते। असौ ते मुख्यो यौवनोत्सिक्तो भार्यां स्नुषां दुहितरं वाऽभिमन्यते (कौ० अ० ५।१।५१)। इयं मे

**गम्या स्यादितीच्छति ।** न त्वेव ज्यायसीं वृत्तिमभिमन्येत कर्हि चित् (मनु० १०।९५)। **नाभिमन्येत न कामयेत ।** यथा कथा च परपरिग्रहमभिमन्यते (आप० ध० १।१०।२८।१) । **ममायमस्त्विति कामयते ।** यो वाऽयं देवः पशूनामीष्टे न वा हैनमभिमन्येत (श० ब्रा० ३।६।२।२०) । **उक्तोऽर्थः ।** **अप्रार्थनीयामिह** यां सूतपुत्राभिमन्यसे (भा० वि० १४।३४) । **कामयस इत्यर्थः ।** **कच्चिन्न** परदारान्वा राजपुत्रोऽभिमन्यते (रा० २।७२।४५) । **उक्तोऽर्थः ।** न चेत्तदभिमन्येत तस्मै दद्यामहं पुनः (भा० कर्ण० ३८।३) । **अल्पमिति कृत्वा नेच्छेत्, नाभिनन्देत् । अभिमन्येत अवजानीतेति नीलकण्ठः । स च तात्पर्यार्थः । अवजानीयादिति तु पाणिनीयाः साधु पश्यन्ति ।** माऽभिमंस्थाः (श० ब्रा० ७।५।२।१७) । **मा क्षणिष्ठाः, माऽभिद्रुह इत्यर्थः ।** योऽस्मान्ब्रह्मणस्पतेऽदेवो अभिमन्यते (अथर्व० ६।६।१) । **अभिहन्तव्यान् जानातीत्यर्थः । अभिपूर्वो मन्यतिश्छन्दसि बहुलं हिंसायां वर्तते । तत्रेमाः काश्चन दिश उदाह्रियन्ते—** परिवृङ्ग्धि हरसा माऽभिमंस्थाः (काण्व सं० १४।४; श० ब्रा० ७।५।२।१७)। मा त्वा क्रव्यादभिमंस्त । **मम त्वमाहार इत्यभिमानं मा करोतु ।** विश्वरूपं त्वाष्ट्रमभ्यमंस्त (ऐ० ब्रा० ७।२८) । **अहिंसीदित्यर्थः ।** नास्य रुद्रः प्रजां पशूनभिमन्यते (तै० ब्रा० १।५।६।७) । **न हिनस्ति, हन्तुं नेच्छति ।** इति । शत्रवो नाभिमन्यन्ते भक्षान् विषकृतानिव (रा० २।८८।२५) । **अभिभवितुं न स्मरन्ति** (राजधानीम्) इति गोविन्दराजः । ये राष्ट्रमभिमन्यन्ते राज्ञो व्यसनमीयुषः (भा० उ० १६६।६) । **ये राष्ट्रमस्मदीयमिदमस्माभी रक्षणीयमित्यभिमानवन्त इति नीलकण्ठः ।** अतिवादांस्तितिक्षेत नाभिमन्येत कञ्चन (भा० शा० २७८।६) । **कञ्चनोद्दिश्याभिमानं न कुर्यादित्याह ।** यो न कामयते किञ्चिन्न किञ्चिदभिमन्यते । **अभिमानं न गच्छतीत्यर्थः ।** यथा दाण्डक्यो नाम भोजः कामाद् ब्राह्मणकन्यामभिमन्यमानः (कौ० अ० १।६।५) । **इयं मे गम्या स्यादितीच्छन् ।** नास्ति जीवितादन्यदभिमततरमिह जगति सर्वजन्तूनाम् (काद०) । **अभिमतमिष्टम्, संमतम् ।** अभिमतफलशंसी चारु पुस्फोर बाहुः (भट्टि० १।२७) । इक्ष्वाकुवंशोऽभिमतः प्रजानाम् (उत्तर० १।४४) । न किल भवतां स्थानं देव्या गृहेऽभिमतं ततः (उत्तर० ३।३२) । **अभिमतमनुमतम् ।** माहात्म्याभिमतानामपि कपिलकणभुक् प्रभृतीनाम् (ब्र० सू० शां० भा०) । **अभिमतानां सत्कृतानाम् ।** अभिमतेऽनुमते वा (आश्व० गृ० ४।९।१२) । **तदन्नमभिमन्यन्ते आत्मसात्कुर्वन्ति अस्मभ्यमेव देहीति ।** न विक्रिया विश्वसुहृत्सखस्य साम्येन वीताभिमतेस्तवापि (भा० पु० ५।१०।२५) । **अभिमतिरभिमान आत्मसंभावना, आहोपुरुषिका, अहंयुता ।** सदाभिमानैकधना हि मानिनः (शिशु० १।६७) । **अभिमान आत्मसंमानः,**

स्वस्मिन्गुरुत्वबुद्धिः । मुनिरस्मि निरागसः कुतो मे भयमित्येष न भूतयेऽभिमानः (कि० १३।७)। एषोऽभिमान एषा कल्पना। ये चरन्त्यभिमानानि सृष्टार्थमनुषङ्गिणः (भा० शां० १६८।२३)। अभिमानानि सर्वतः प्रमाणानि शास्त्रादीनि। विश्वा मृधो अभिमातीर्जयेम (अथर्व० १८।२।५९)। अभिमातीर्हिंसकाञ्छत्रून् इति सायणः। इन्द्राभिमातिषाह्ये (अथर्व० २०।१६।३)। अभिमातयः शत्रवः। सपत्नहाग्ने अभिमातिजिद् भव (अथर्व० २।६।३)। उक्तोऽर्थः। स हि ष्मा विश्वचर्षणिरभिमाति सहो दधे (ऋ० ५।२३।४)। अभिमाति हिंसकं घातुकम्।...ऽभिमाति कयस्य चित्। तिग्मं न क्षोदः प्रतिघ्नन्ति भूर्णयः (ऋ० ८।२५।१५)। अभिमातिः कपटप्रबन्ध इति संस्कृतशार्मण्यकोषः। अभिमानं च मानं च त्यक्त्वा (रा० २।५८।१६)। साधारण्याभिमानात्। साधारण्यं मत्वा, समुत्प्रेक्ष्य। न सा स्त्री त्वभिमन्तव्या यस्यां भर्ता न तुष्यति (पञ्चत० ३।१५४)। नाभिमन्तव्या न मन्तव्या, न गणयितव्या, पत्नीति बुद्ध्या न द्रष्टव्या। धन्यं यशस्यमायुष्यमिदमाख्यानमुत्तमम्। बुभूषताऽभिमन्तव्यम्...(भा० अनु० २।६५)॥ अभिमन्तव्यम् एष्टव्यम्। अनभिमानुको हैष देवः प्रजा भवति (आश्व० गृ० ४।१०।२८)। अभिमानुक आघातुकः। प्रजा इति द्वितीयाबहुवचनम्।

—मन्त्र् (मत्रि गुप्तपरिभाषणे)। गायत्र्या चाभिमन्त्रयेत् (याज्ञ० ३।३२५)। गायत्र्युच्चारणेन संस्कुर्यादित्यर्थः। उपाकृतः पशुरसौ योऽभिमन्त्र्य क्रतौ हतः (इत्यमरः)। वामदेवाभिमन्त्रितोऽश्वः (उत्तर० २)। वामदेव्यमन्त्रैः संस्कृतः। प्रणयन्तु भवन्तो मां यथेष्टमभिमन्त्रिताः (भा० सभा० ३५।३)। अभिमन्त्रिताः प्रार्थिताः।

—मा (मा माने, माङ् माने)। यज्ञस्य (सोमः) प्रमाभिमोन्मा प्रतिमा वेद्यां क्रियमाणायाम् (काठक० ३४।१४)। अभिमा विस्तारमानम्। यज्ञस्य त्वा प्रमयाऽभिमया परिमयोन्मया परिगृह्णामि (आप० श्रौ० ४।५।४, ६।१३।६)। उक्तोऽर्थः।

—मिह् (मिह सेचने)। देवी देवयजनी सा दीक्षितेन नाभिमिह्या (=नाभिमेह्या) (श० ब्रा० ३।२।२।२०)। तस्या उपरि दीक्षितो न मेहेत् न मूत्रयेत्।

—मृ (मृङ् प्राणत्यागे)। गुरुणाभिमृता अन्यतो वाऽपक्षीयमाणाः (आश्व० गृ० ४।७।१)। येषु जीवत्सु गुरुर्म्रियते ते गुरुणाभिमृताः। द्वौ चराभिमरौ स्पशौ (इत्यमरः)। अभिम्रियत इत्यभिमरः। प्राणनिरपेक्षस्तीक्ष्णाख्यः, यो द्रव्यहेतोर्व्यालं वा हस्तिनं वा योधयतीति स्वामी।

—मृद् (मृद क्षोदे)। कृतोऽभिमर्दः कुरुभिः प्रसह्य (द्रौप० ६।८) (अभिमर्दः कदनं विशसनम्। कथं शक्ष्यामहे ब्रह्मन् दानवैरभिमर्दनम् (भा० शां० २०६।१२)। अभिमर्दनम् अभ्यामर्दः, युद्धम्, आयोधनम्।

—मृश् (मृश आमर्शने, आमर्शनं स्पर्शः)। तया त्वाभि मृशामसि (अथर्व० ३।२५।६)। अभिमृशामसि अभिमृशामः, अभितः स्पृशामः। अथास्या उदरमभिमृशति (शां० गृ० १।२२।१४)। उक्तोऽर्थः। नश्येदभिमृशन्सद्यो मृगः कूटमिव स्पृशन् (भा० शां० ६८।५२)। अभिमृशन् स्पृशन्। राजस्वमिति शेषः। कूटं मारणयन्त्रम्। सोऽमृष्यमाणो वचसाऽभिमृष्टः (भा० वि० ६६।१)। अभिमृष्टस्तुन्नः। अत्र मृशस्तोदनमर्थो यथा मर्मस्पृग् इत्यत्र स्पृशः। अभिरर्थं विशिनष्टि। उष्णांशुकराभिमर्शात् (शिशु० ४।१६)। अभिमर्शः स्पर्शः। कृताभिमर्शामनुमन्यमानः (शा० ५।२०)। अभिमर्शो दूषणम्। परदाराभिमर्शेषु प्रवृत्तान् (मनु० ८।३५२)। पराभिमर्शो न तवास्ति पितुर्गृहे। कः करं प्रसारयेत्पन्नगरत्नसूचये (कु० ५।४३)॥ उक्तोर्थः। कन्याप्रदानं प्रति समुत्पन्नोऽभिमर्शः (प्रतिज्ञा० २)। अभिमर्शो विमर्शः। अभिरस्थाने। निवर्तय मनः पापात्परदाराभिमर्शनात्। (भा० उ० १२।४)। अभिमर्शनं दूषणं धर्षणम्। निवर्तय मतिं नीचां परदाराभिमर्शनात्। (रा० ३।५०।७)। दूषितं धर्मशास्त्रज्ञैः परदाराभिमर्शनम् (भा० अनु० १६।८६)। उक्तोऽर्थः। दक्षिणानामदानं च ब्राह्मणस्वाभिमर्शनम् (भा० शां० ३४।१३)। अभिमर्शनमामर्शनमाच्छेदनम्। अपहारः। अत्रैव कीर्त्यते सद्भिर्ब्राह्मणस्वाभिमर्शने (भा० अनु० ७०।१)। उक्तोऽर्थः। परदाराभिहर्तारः परदाराभिमर्शिनः (भा० अनु० २३।६१)। अभिमर्शका दूषकाः, जाराः।

—मृष् (मृष तितिक्षायाम्)। सर्वतः समुपेतस्य तव (दशग्रीवस्य) तेनाभिमर्षणम् (रा० ६।१११।८)। अभिमर्षणं प्रसहनं पराभवः।

—मे (मेङ् प्रणिदाने)। स हि ष्मा विचर्षणिरभिमाति सहो दधे (ऋ० ५।२३।४)। अभिमाति हिंसकं धातुकं जिह्मम्। अपरेऽभिमातीति मन्यतेरभिपूर्वस्य रूपं पश्यन्ति। तन्नोऽभिमतम्।

—मेथ् (मेथृ मेधृ संगमे)। तयोः शयानयोः। यजमानोऽभिमेथति (श० ब्रा० १३।५।२)। अभिमेथति=आह्वयति।

—यज् (यज देवपूजासङ्गतिदानेषु)। देवता अभियजेत् (गो० गृ० ४।७।१६)। हविर्भिः पूजयेदित्याह। आमावास्येन हविषा पूर्वपक्षमभियजते

(पञ्चरा० ३।७।१२) उक्तोऽर्थः । पक्षान्ता उपवस्तव्याः, पक्षादयोऽभियष्टव्याः (गो० गृ० १।५।५-६) ।

—या (या प्रापणे, प्रापणमिह गतिः ) । शैनेयस्त्वरितो राजन्कृतवर्म्माणमभ्ययात् (भा० द्रोण० ११५।३) । अभ्ययात् अभिमुखमयात्, तं प्रार्थयतेत्यर्थः । अभिययुः सरसो मधुसंभृतां कमलिनीम् (      ) । अभिययौ स हिमाचलमुच्छ्रितम् (कि० ५।१) । अभिलक्ष्य जगामेत्यर्थः । अभियास्यति मां कोपात्सम्बन्धी सुमहाबलः (भा० उ० १६०।१४) । माम्प्रत्यभियानं करिष्यति, मां प्रार्थयिष्यते । ऽभि स्पृधो यासिषद् वज्रबाहुः (ऋ० १।१७४।५)। उक्तोऽर्थः । अन्यत्र राज्ञामभियातु मन्युः (अथर्व० ६।४०।२) । यात्वित्येवार्थः । तत्रैनं नागराः सर्वे सत्कारेणाभ्ययुस्तदा । समाजयितुं पुरत प्रासरन्नित्याह । निर्यान्तो वाऽभियान्तो वा नरमुख्या यथा पुरा (रा० २।७१।२४) । अभियान्तः प्रविशन्तः । कुबेरादभियास्यमानात् (रघु० ५।३०) । अभियातुमिष्यमाणात्, प्रार्थयिष्यमाणात्, अभिषेणयिष्यमाणात् । अभियाता प्रहर्ता च (रा० २।१।२६) । अभियाताऽभिमुखं याता । दुर्गप्रदेशावलम्बनेन यो न युध्यते तल्लक्षणः । प्रहर्ता नासीरे स्थित्वा प्रथमं प्रहरतीत्येवंविध इति टीकाकृद्रामः ।

—याच् (टुयाचृ याच्ञायाम्) । शिरसा त्वभियाचेऽहं कुरुष्व करुणां मयि (रा० २।१०६।२६) । याच इत्येवार्थः । नार्थोऽभिना । सगरं चाभ्ययाचन्त सर्वे प्राञ्जलयः स्थिताः (भा० वन० १०७।११) । उक्तोऽर्थः । अभ्यभाषन्तेति पाठान्तरम् ।

—यु (यु मिश्रणामिश्रणयोः। स्त्रीयोनिरभियुत एनां गर्भः (नि० २।११)। अभियुत आमिश्रीभूत इति दुर्गः ।

—युज् (युजिर् योगे, युज समाधौ) । यां गतिमभियुङ्क्ते तां गतिं गत्वाऽन्ततो विमुञ्चते (शा० ब्रा० १।८।३।२७) । अभियुङ्क्ते रथं तुरङ्गेण युनक्ति । सञ्जयाचक्ष्व येनास्मान् पाण्डवा अभ्ययुञ्जत (भा० उ० ५०।६) । अभ्ययुञ्जत आक्रामन्, आस्कन्दन् । अस्मानालक्ष्य सन्नद्धा अभूवन्निति वा। (रघौ ४।८०) इत्यत्र नहि शूराः परेण पराजितपूर्वमभियुज्यन्त इति मल्लिः। श्यन्विकरणस्य युजेः प्रयोगोऽस्थाने । शृणु यैर्हि महाराज पाण्डवा अभ्ययुञ्जत (भा० उ० ५०।१६) । उक्तोऽर्थः । यश्च त्वाऽभियुञ्जीत युद्धाय (रा० ७।६११६) । अभियुञ्जीत आह्वयेत । युद्धं मे देहीत्यामन्त्रयेत । कुपितोऽर्थपतिर्व्यंवहर्तुमर्थगौरवादभियोक्ष्यते (दशकु०) । अभियोक्ष्यते = उद्योक्ष्यते ।

आधिव्याधिदुःखेन कदाचिन्नाभियुज्यते । नाभियुज्यते न युज्यते नोपसृज्यते । न तत्र विद्यते किंचिद् यत्परैरभियुज्यते (मनु० ८।१८३)। **इदं मे निक्षिप्तं मे दीयतामिति निक्षेप्त्रा व्यवहारेण काम्येत** । हंस प्रयच्छ मे कान्तां गतिरस्यास्त्वया हृता । विभावितैकदेशेन देयं यदभियुज्यते (विक्रम० ४।१७) ॥ **उक्तोऽर्थः** । तद्यदि न सहसे ततः स्वयमभियुज्यस्व । एते स्वकर्मण्यभियुज्यामहे (मुद्रा० ३) । **इहोभयत्राभियोगो व्यापारः** । **अभियुज्यस्व व्याप्रियस्व यतस्व घटस्व** । वायुर्यत्राभियुज्जते (=युङ्क्ते) (श्वेताश्व० २।६) । **शब्दमभिव्यक्तं करोतीति विवृतिः** । **सुश्रुते १।६४।१६ इत्यत्राभियुजि भिषक्कर्मण्युपचारेऽपि प्रयुक्तो दृश्यते** । तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् (गीता० ६।२२) । **ध्यानयोगपराणाम् इत्यर्थः** । स्वस्वकर्मण्यधिकतरमभियुक्तः परिजनः (मुद्रा० १) । **अभियुक्तोऽवहितो व्यापृतः** । वसिष्ठः किल राक्षसस्त्वमित्यभियुक्तः (नि० ७।३।४ इत्यत्र दुर्गः) । **अभियुक्तोऽभ्याख्यातो दुरुक्तः** । यदा तु गमनमभियुक्तस्तदेवापलपति न तदात्यन्तापह्नव इति लङेव भवति इत्यत्यन्तापह्नवे लिड्वक्तव्य इत्यत्र दीक्षितः प्रौढमनोरमायाम् । **तत्राभियुक्तः पृष्टः** । तत्र हि बहूनर्थानभियुक्तः पुत्रादिनं जानामीति प्रतिवदन् निह्नववादी न भवति (याज्ञ० २।२० मिताक्षरायाम्) । आगमस्तु कृतो येन सोऽभियुक्तस्तमुद्धरेत् (याज्ञ० २।२८) । अस्मिन्नर्थेऽनेनाहमभियुक्तः (याज्ञ० २।७ मिताक्षरायाम्) । **अथ स** एनमभियुक्तः प्रतिब्रूयात् (मी० सू० ३।२।१-२, शा० भा०)। **अभियुक्तः पृष्टः** । प्रतिगृह्य तदाख्येयमभियुक्तेन धर्मतः (याज्ञ० ३।४३) । **उक्तोऽर्थः** । इदं विश्वं पाल्यं विधिवदभियुक्तेन मनसा (उत्तर० ३।३०) । **अभियुक्तेन = अवहितेन = प्रसितेन = एकायनगतेन** । कोष्ठागारेऽभियुक्तः स्यात् (का० नी० सा० ५।७७) । **अभियुक्तः कृतावेक्षः प्रतिजागरितः** । भवतु, भूयोऽभियुक्तः स्वरव्यक्तिमुपलप्स्ये (मुद्रा० १) । **अभियुक्तो दत्तावधानः** । यत्त्वभियुक्ताः शब्दार्थेषु शिष्टा इति तत्रोच्यते—अभियुक्ततराः पक्षिणां पोषणे बन्धने च म्लेच्छाः (मी० सू० १।३।५।१० शा० भा०) । **अभियुक्ता निपुणाः** । कुहकादिषु प्रयोगेष्वभियुक्तानाम् (कथा० ३२।१२५)। **उक्तोऽर्थः** । यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः । अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते (वा० प० १।३४)॥ **अभियुक्ता विपश्चितः, विशेषज्ञाः, लब्धवर्णाः** । न हि शक्यते दैवमन्यथा कर्तुमभियुक्तेनापि (काद०) । अन्येऽभियुक्ता अपि नैवेदमन्यथा मन्यन्ते (वेणी० २) । सूक्तमिदमभियुक्तैः प्रकृतिर्दुस्त्यजेति (वेणी० २) । अभियुक्तं बलवता दुर्बलं हीनसाधनम् (भा० उ० ३३।१३) । **अभियुक्तमाक्रान्तमास्कन्नम्** । न जाने बलवता महामोहेनाभियुक्तस्य वत्सविवेकस्य कीदृशो वृत्तान्तः (प्र० च० ५) । **उक्तोऽर्थः** । देवि केनाभियुक्तासि केन वासि विमानिता (रा०

२।१०।२८)। अभियुक्ता धर्षिता कृतपराभवा। अभियुक्तस्तु को राजा दातुमिच्छेद्धि मेदिनीम् (भा० शल्य० ३१।६१)। अभियुक्तः प्रार्थित इत्यर्थो भाति। अभियुक्तः परिचिते परिक्षिप्तेऽरिसेनया। व्यवहारप्रवृत्तानां तथैवोत्तरवादिनि॥ इति कोषः। वृषलमभियोक्तुमुद्यतः (मुद्रा० १)। अभियोक्तुम् अभियातुमास्कन्तुम्। एतस्य सिंहीमिव राज्यलक्ष्मीमङ्कस्थितां कः क्षमतेऽभियोक्तुम् (विक्रमाङ्क०)। उक्तोऽर्थः। त्वय्युत्कृष्टबलेऽभियोक्तरि नृपे (मुद्रा० ४।१५)। अभियोक्ताऽऽस्कन्ताऽऽक्रमिताऽभियाता। पर्यायैर्हन्यमानानामभियोक्ता न विद्यते (भा० शां० २२६।१३)। अभियोक्ता-दिशेद् देश्यं करणं वान्यदुद्दिशेत् (मनु० ८।५२)। अभियोक्ता=अर्थी। सन्तः परहितेषु स्वयं कृताभियोगाः (भर्तृ० २।६५)। कृताभियोगा दत्तावधानाः। नयाभियोगं मनसः प्रसादं समापयस्वात्मगुणेन कामम् (रा० ४।२६।२५)। अभियोगस्तात्पर्यमासक्तिः। अनेकार्थाभियोगेपि यावत्संसाधयेद् धनी (याज्ञ० २।२० मिताक्षरायां कात्यायनवचनम्)। यदानेकेऽर्था ममेत इति प्रार्थ्यन्ते। अनभियोगश्चार्थेष्वागन्तूनाम् (कौ० अ० २।१६।१३)। अनभियोगोऽव्यवहारः। यत्नेनानुमितो योर्थः कुशलैरनुमातृभिः। अभियोगशतेनापि स नान्यथोपपाद्यते (न्या० म०)॥ अभियोगो यत्नः। अभियोगः शब्दादेरशिष्टानामभियोगश्चेतरेषाम् (मी० शा० भा०)। अभियोगः परिचयः। अभियोगमनिस्तीर्य नैनं प्रत्यभियोजयेत् (याज्ञ० २।६)। कुसुमपुराभियोगं प्रत्यनुदासीनो राक्षसः (मुद्रा २)। अभियोगोऽवस्कन्दः। अभियोजनं नाम युक्ते पुनर्योजनमिति श० ब्रा० ६।४।२।११ इत्यत्र सायणः। विश्वा अग्ने अभियुजो विहत्य (अथर्व० ७।७७।६)। अभियुजोऽभियोक्त्रीः सेनाः। विश्वा अग्ने ऽभियुजो विहत्य (तै० ब्रा० २।४।१।१)। अभियुजोऽभियोगान् आस्कन्दानिति सायणः।

—रक्ष् (रक्ष पालने)। तमर्यमाऽभि रक्षत्यृजूयन्तमनु व्रतम् (ऋ० १।१३६।५)। अभिरक्षति=अभितः पाति। यमादित्या अभि द्रुहो रक्षथ (ऋ० ८।४७।१)। यः कृत्स्नामटवीमेतां पर्यन्तस्थोऽभिरक्षति (कथा० २६।१३५)। आविश्येमां धरणीं येऽभ्यरक्षन् पुरातनीं तस्य देवस्य सृष्टिम् (भा० अनु० १८।७८)। उक्तचर एवार्थः।

—रञ्ज् (रञ्ज रागे)। न कथाभिरभिरज्यन्ते। कथासु नाभिरमन्ते इत्यर्थः। (गीतम्) संरक्तमभिरक्तं च परया स्वरसम्पदा (रा० गोरे० १।३।६१)। अभिरक्तं प्राप्तसंमदम्।

—रम् (रमु क्रीडायाम्)। न गन्धहरिणो दमनककेदारिकायामभिरमति (विद्ध० ३)। अभिरमते=रतिं लभते, नन्दति। दमनको वृक्षविशेषः। विद्यासु विद्वानिव सोऽभिरेमे (भट्टि० १।६)। आश्चर्यं परिपीडितोऽभिरमते पश्चातकस्तृष्णया। उदितोऽर्थः। दृष्टिरिहाभिरमते हृदयं च (मृच्छ० ४)। आचान्तांश्चानुजानीयादभि भो रम्यतामिति (मनु० ३।२५१)। अभिरम्यताम् =विश्रम्यताम्। यत्राभिरंस्यमाना भवन्ति (आश्व० गृ० ४।६।१६)। विश्रमितुकामा भवन्ति। अभिरम्यतामिति वदेद् ब्रूयुस्तेऽभिरता स्म ह (याज्ञ० १।१५२)। अभिरतास्तुष्टाः, तृप्ताः। माऽकल्पां नारीमभिरमयेत् (गौ० ध० १।८।२६)। नानया मिथुनी भवेदित्यर्थः। अकल्पा रोगादिनाऽस्वस्था। मनोभिरामाः शृण्वन्तौ.. षड्जसंवादिनीः केकाः (रघु० १।३६)। मनोऽभिरामा मनोहरा मनोरञ्जिकाः, मनोज्ञाः। अनपेतकालमभिरामकथाः (कि० ६।३०)। अनन्तरोदीरित एवार्थः। राम इत्यभिरामेण वपुषा तस्य चोदितः (रघु० १०।६७)। अभिराममभिरूपं रम्यम्। रामाभिराम...त्त्तदोषः (रा० ५। ११।८)। अभिरामो हृदयहारी।

—राध् (राध साध संसिद्धौ)। अभिराद्धदेवतावितीर्णवीर्यातिशयान् (शिशु० १।७१)। अभिराद्धा आराद्धाः।

—रु (रु शब्दे)। वृषेव यूथे सहसा विदानो गव्यन्नभि रुव संधनाजित् (अथर्व० ५।२०।३)। अभिरुव=अभितो नर्द। शिवैषोद्यन्तमादित्यमभिरौति (भा० पु० १।१४।१२)। अभिलक्ष्य वाश्यते क्रोशति। हंसकारण्डवोद्गीताः सारसाभिरुतास्तथा (भा० वन० ३८।२०)। सारसरुतेन प्रतिशब्दिताः, सारसरवेणाभिव्याप्ताः।

—रुच् (रुच दीप्तावभिप्रीतौ च)। धर्मोऽभिरोचते यस्माद् धर्मराजस्ततः स्मृतः (मार्क० पु०)। अभिरोचते राजते दीप्यते शोभते। अभिर्विशेषको न। यदभिरोचते भवते (विक्रम० २)। यथाऽत्र भवतोऽभिरुचिः। यथा ते यशः। यथा ते छन्दः।

—लक्ष् (दर्शने)। पार्षतश्च महायुद्धे विमुखोऽद्याभिलक्ष्यते (भा० कर्ण० २६।६)। अभिलक्ष्यते लक्ष्यते दृश्यते प्रतिभाति। मुमोच परमेष्वासः षट् शरानभिलक्षितान् (रा० ३।२८।२६)। अभिलक्षितान् कृताङ्कान्, लक्ष्मोपेतान्। दक्षिणां प्रेषयामास वानरानभिलक्षितान् (रा० ४।४१।१)। वृतान् गुणमाहात्म्येन निर्धारितान्।

लप् (लप व्यक्तायां वाचि)। न च स्मार्तमतद्धर्माभिलापात् (ब्र०

सू० १।२।१६)। अभिलापो व्यपदेशो निर्देशः कथनं कीर्तनम्। अभिलापिनी प्रतीतिः कल्पना (तत्त्वसं० १२१३)। अभिलापो वाचकः शब्दः।

—लिख् (लिख अक्षरविन्यासे)। धात्राभिलिखितान्याहुः सर्वभूतानि कर्मणा (भा० स्त्री० ७।१२)। अभिलिखितानि सर्वतो न्यस्तानि। तत्तल्लक्षणैः पृथगवस्थापितानि।

—ली (लीङ् श्लेषणे)। भीष्ममेवाभ्यलीयन्त सह सर्वैस्तवात्मजाः (भा० भीष्म० ७१।१०)। समाश्लिष्यन्त् इत्यर्थः। कपिलाशवमभ्यलीयत (दशकु०)। शवेऽन्तरलीयतेत्यर्थः। पश्चादुच्चैर्भुजतरुवनं मण्डलेनाभिलीनः (मेघ० ३७)। अभिलीनः समाश्रितः। विहङ्गमाभिलीनाश्च लताः (हरि० २०१२)। शकुन्ताक्रान्ताः। भ्रमराभिलीनयोः सुजातयोः पङ्कजकोषयोः श्रियम् (रघु० ३।८)। अभिलीनौ समाश्लिष्टौ।

—वच् (ब्रू-वच व्यक्तायां वाचि)। आचार्यो नाभिवक्तव्यः पुरुषेण विजानता (भा० वि० ५१।२)। अपवक्तव्य इत्यर्थः।

—वद् (वद व्यक्तायां वाचि, वद सन्देशवचने)। समूलो वा एष परिशुष्यति योऽनृतमभिवदति (प्रश्नोप० ६।१)। अभिवदति परस्याभिमुखे वदति, प्रत्युत्तरं वदतीत्यर्थः। तं ह्यभ्युवाद (छां० उ० ४।२।१)। अभिसम्बोध्योवाच। परस्त्रियं योऽभिवदेत्तीर्थेऽरण्ये वनेपि वा (मनु० ८।३५६)। अभिवदेत् =अभिलपेत्=आलपेत्=आभाषेत। कामेन ताताभिवदाम्यहं त्वाम् (भा० वि० ७।१०)। आभिमुख्येन वदामि। एतद्वा अश्वस्य प्रियं नामधेयम् (यद्ययुरिति) प्रियेणैवैनं नामधेयेनाभिवदति (तै० ब्रा० ३।८।६।२)। अभिवदति अभिमुखीकृत्य वदति। ते वा इमे इतरे छन्दसी गायत्रीमभ्यवदेताम् (ऐ० ब्रा० ३।२८)। अभ्यवदेताम्=सप्रश्रयं समबोधयेताम्। पूर्वो राज्ञोऽभिवदति (श० ब्रा० ३।३।४।१४)। उक्तोर्थः। जारं चौर इत्यभिवदन् दाप्यः पञ्चशतं दमम् (याज्ञ० २।३०१)। अभिवदन् व्यपदिशन् अपदिशन् निर्दिशन्। यत्कर्म क्रियमाणमृगभिवदति (ऐ० ब्रा० १।४)। अभिवदति कीर्तयति परामृशति। एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति (श० ब्रा० १४।६।८।८)। व्याहरन्ति, उदाहरन्ति आचक्षते। अभिवदति गुरुं देवदत्तः। नमस्करोतीत्यर्थः। उपसर्गो विशेषकः। अभिवादयते गुरुं देवदत्तं देवदत्तेन वा। नमस्कारयतीत्यर्थः। तात प्राचेतसान्तेवासी लवोऽभिवादयते (उत्तर० ६)। वद सन्देशवचने। अभिपूर्वकत्वान्नमस्कारार्थता। अभिवादये देवदत्तोऽहं भोः। सम्बन्धिशब्दाश्च सर्वे सापेक्षा विना पदान्तरेण न पूर्णमर्थमभिवदन्ति (शा० भा०)।

अभिवदन्ति वदन्ति। शिवेनाभिवदामि त्वां गच्छ युध्यस्व शत्रुभिः (भा० द्रोण० ४।११)। शिवेनाभिवदामि साशीर्वचनं वच्मि। नानर्णसमवाये तु नैकं द्वौ युगपदभिवदेयाताम् (कौ० अ० ३।११।१६)। अभिवदेयाताम् अभियुञ्जीयाताम्। अभिवाद्य नमस्यन्तं शूरं ससुहृदं सुतम् (रा० २।४४।२६)। अभिवाद्य चरणौ स्पृष्ट्वा। अपर आह- प्रवरोच्चारणमभिवादनम्, तत्पूर्वकम्। नन्वशक्तमिदं सूत्रमिमावर्थावभिवदितुम् (ब्र० सू० १।१।२ शां० भा०)। अभिवदितुमभिधातुम्। को नु मार्हन्नाम्नैवाभिवदितुम् (जै० ब्रा० २।५३)। अभिवदितुमभिधातुम् अभिसम्बोधयितुम्। न खलु भवान् अस्मत्संकल्पानभिवादकः (कि०)। अभिवादकोऽनुकूलं वदिता। तदभिवादिन्येषर्गभवति (नि०)।

—वप् (डुवप् बीजसन्ताने, बीजसन्तानं क्षेत्रे विकिरणं गर्भाधानं च, अयं छेदनेऽपि)। स्वप्नेनाभ्युप्या चुमुरिं धुनिं च (ऋ० २।१५।६)। अभ्युप्य= अवकीर्य=आकीर्य। अभि स्वपूर्भिर्मिथो वपन्त (ऋ० ७।५६।३)।

—वश् (वश कान्तौ कान्तिरिच्छा)। वृषेव वध्रीँरभि वष्ट्योजसा (ऋ० २।२५।३)। अभिवष्टि ईष्टे प्रभवति। स दूतो विश्वेदभिवष्टि सद्मा (ऋ० ४।१।८)। अभिवष्टि=अभीच्छति प्राप्तुम्।

—वस् (वस आच्छादने)। भस्मनाभि वासयति (तै० सं० २।६।३।४)। अभित आच्छादयतीत्यर्थः।

—वह् (वह प्रापणे)। ततोऽभ्यवहदव्यग्रो वैराटिः सव्यसाचिनम्। यत्रातिष्ठत् कृपो राजन्योत्स्यमानो धनञ्जयम् (भा० वि० ५५।६०)॥ अभ्यवहत् (कृपसमीपं) प्रापयत्।

—वा (वा गतिगन्धनयोः)। मयोभूर्वातो अभि वातूस्राः (ऋ० १०। १६९।१)। अभिवातु आभिमुख्येन वातु। शन्न इषिरो अभि वातु वातः (ऋ० ७।३५।४)। सुखो वातोऽभिवाति माम् (भा० वि० ६८।७४)। उक्तोऽर्थः।

—वाश् (वाशृ शब्दे)। अभि त्वा नक्तीरुषसो ववाशिरेऽग्ने वत्सं न स्वसरेषु धेनवः (ऋ० २।२।२)। अभिववाशिरे आभिमुख्येन वाश्यन्ते शब्दायन्ते, सस्नेहं सादरं चाकारयन्ते।

—विश् (विश प्रवेशने)। मदनाभिविष्ट० (रा० ५।११।१८)। अभिविष्टः=आविष्टः।

—वी (वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु)। वामं नृभ्यो अभिवीताः सखिभ्यः (ऋ० ७।२७।४)। अभिवीता प्रेरिता (दक्षिणा)।

—वृ (वृञ् वरणे)। घृतेन द्यावापृथिवी अभीवृते (ऋ० ६।७०।४)। अभीवृते आकीर्णे आच्छादिते। सांहितिको दीर्घः। अयं स शिङ्क्ते येन गौरभीवृता (ऋ० १।१६४।२९)। उक्तोऽर्थः। (तम्) अभ्यवारयदत्युग्रः क्रूरकर्माऽऽपगासुतः (भा० उ० ६१।३४)। इदं नातितिरोहितम्। अभिवृत्य सपत्नान् (अथर्व० १।२९।२)। अभिमुखं पर्यावृत्येत्यर्थः।

—वृत् (वृतु वर्तने)। भरतो मन्त्रिभिः सार्धमभ्यवर्तत (रा० २।९१।३८)। राजासनमुपायावित्यर्थः। अभिवर्तति लक्ष्मीस्तं प्राचीमिव दिवाकरः (भा० उ० १३५।३१)। अभिमुखं यातीत्यर्थः। अभ्यवर्तत पुत्रस्ते पाण्डवानामनीकिनीम् (भा० द्रोण० १५३।१३)। समासादयदित्यर्थः। नाभ्यवर्तन्त राजानः सहिता वानरध्वजम् (भा० भीष्म० ११७।३९)। साम्मुख्यं नावधुरित्यर्थः। स इदानीं जरासन्धः किमर्थं नाभिवर्तते (हरि० २।४३।५४)। अभिमुखं नायाति। नानाप्रहरणैः क्रुद्धस्तत्सैन्यं सोऽभ्यवर्तत (रा० १।२७।४०)। अभ्यवर्तत अभ्ययात्। वदनं मधुकरोऽभिवर्तते (शा० १)। अभिवर्तते ऽभितो वर्तते, परिवर्तते परिभ्रमति। एकीभूतस्तदा राजन् सोऽभ्यवर्तत मां युधि। दीर्घारण्यानि दक्षिणां दिशमभिवर्तन्ते (उत्तर० २)। दक्षिणस्यां दिशि वितायन्त इत्यर्थः। इत एवाभिवर्तते देवः। इहैवोपैतीत्यर्थः। सहस्रसनि वाजमभिवर्तस्व रथ (आश्व० गृ० २।६।५)। वाजमभिलक्ष्य प्रयाहीत्यर्थः। संवत्सरः सर्वाणि भूतान्यभिवर्तते (श० ब्रा० ८।४।१।१५)। (भार्यां गान्धारीं कथम्) आनुकूल्ये वर्तमानां धृतराष्ट्रोऽभ्यवर्तत (भा० आदि० ११५।५)। अभ्यवर्तत उपैत्। ये चैनमभिवर्तन्ते याचितार इतस्ततः (रा० १।२९।८)। उपयान्ति, उपसर्पन्ति प्राप्नुवन्ति। अस्तमभ्यागमत्सूर्यो रजनी चाभ्यवर्तत (रा० २।१३।१६)। अभ्यवर्तत उपातिष्ठत आगच्छत्, उपानमत्, अवातरत्। अनश्वासो ये पवयोऽरथाः। इन्द्रेषिता अभ्यवर्तन्त दस्यून् (ऋ० ५।३१।५)। अभ्यवर्तन्त—अभ्यभवन्, प्रासहन्त, व्यजयन्त। शोको महानभिवर्ततेऽयम् (रा० ४।२४।१६)। उक्तोऽर्थः। अभि त्वा देवः सविताऽभि सोमो अवीवृतत् (ऋ० १०।१७४।३)। यस्यां देवा असुरान् अभ्यवर्तयन् (अथर्व० १२।१।५)। णिजधिकः। अर्थस्त्वनधिकः। वर्तयत तपुषा चक्रियाभि तम् (ऋ० २।३४।९)। चक्रेण चक्रयता यानेन आक्रमयतेत्युक्तं भवति। तेनास्मान् ब्रह्मणस्पतेऽभि राष्ट्राय वर्तय (ऋ० १०।१७४।१)। राष्ट्रे स्वामिनो नः कुर्वित्याह। तस्य कल्यगता भार्या चरितुं नाभ्यवर्तत (भा० शां० १४८।२)। नाभ्यवर्तत इह न न्यवर्तत। कल्यगता

प्रातर्गता। सरय्वाश्चोत्तरे तीरे राज्ञो यज्ञोऽभ्यवर्तत (रा० १।१४।१)। अभ्यवर्तत प्रावर्तत प्राक्रम्यत। पञ्च तं (दानवं) नाभ्यवर्तन्त विपरीतेन कर्मणा। वेदो धर्मः...(मार्क० पु० १७८।१)॥ तत्र दानवे न संन्यधीयन्तेत्यर्थः। अभीवर्तेन मणिना येनेन्द्रो अभिवावृधे (अथर्व० १।२९।१)। अभितो वर्तते चक्रमनेनेति अभिवर्तो नेमिः। उपसर्गस्य घञ्यमनुष्ये बहुलम् इति दीर्घः।

—वृध् (वृधु वृद्धौ)। वर्धस्व पत्नीरभि जीवो अध्वरे (ऋ० ५।४४।५)। पत्नीरभि वर्धस्व ता अतिक्रामेत्याह। वार्यमाणस्य वाञ्छा विषयेष्वभिवर्धते (कथा० ३१।६१)। भूयो वर्धत इत्यर्थः। दातारो नोऽभिवर्धन्तां वेदाः सन्ततिरेव च (मनु० ३।२५९)। हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते (मनु० २।९४)। इहाभिर्नार्थे विशेषं करोति। पुरा वोऽर्थोऽभिवर्धते (भा० वन० ८।१२)। नश्यतीत्यर्थः। इहाभिरर्थं विपर्यासयति। विरलोऽत्रार्थेऽभिवृधेः प्रयोगः। अतिवर्तते निवर्तते इति नीलकण्ठधृते पाठान्तरे।

—वृष् (वृषु सेचने)। यदीमेनाँ उशतो अभ्यवर्षीत् (ऋ० ७।१०३।३)। वर्षेणाभिषिक्तवान् इत्यर्थः। समा द्वादश पर्जन्यस्तद्राष्ट्रं नाभिवर्षति (भा० सौ० १५।२३)। नाभिवर्षति नाभिषिञ्चति। सस्यानि मन्दमभिवर्षति वृत्रशत्रौ (ब० बृ० सं० १९।२१)। उक्तोऽर्थः। तथाभिवर्षेत्स्वं राष्ट्रं कामैरिन्द्रव्रतं चरन् (मनु० ९।३०४)। राष्ट्रे काम्यानां वृष्टिं कुर्यादित्यर्थः। मण्डूको यदभिवृष्टः कनिष्कन् (ऋ० ७।१०३।४)। रुधिरं च महाकायावभिवृष्टाविवाचलौ (भा० द्रोण० १७८।३१)। उक्तोऽर्थः।

—व्यध (व्यध ताडने)। मा नो विदन् विव्याधिनो मो अभिव्याधिनो विदन् (अथर्व० १।१९।१)। अभिमुखमागत्य विध्यन्ति ये तेऽभिव्याधिनः। युधिष्ठिरं सप्तभिरभ्यविध्यत (भा० शल्य० १७।१२)। उक्तोऽर्थः।

—व्ये (व्येञ् संवरणे)। अभि व्ययस्व खदिरस्य सारम् (ऋ० ३।५३।१९)। अभिव्ययस्व वस्स्व आच्छादय परिधेहि। अभिर्धात्वर्थेनैव गतार्थ इति सुपरिहरः।

—शंस् (शंसु स्तुतौ। अनिन्द्रियो वा एषोऽपदेवो भवति यमभिशंसन्ति (जै० ब्रा० १।९६)। अभिशंसन्ति दोषेणाभियुज्य कथयन्ति। यमजध्निवांसमभिशंसेयुः (तै० सं० २।१।१०।१०)। मिथ्या पापसंयोजनमभिशंसनमिति भट्टभास्करः। अनेनसमेनसा सोऽभिशस्तात् (ऐ० ब्रा० ५।३०)। अभिशस्तात् अभिशंसेत् अपवदेत्। महापापोपपापाभ्यां योऽभिशंसेन्मृषा परम् (याज्ञ० ३।

२८५)। **अभियुक्तं कथयेदित्यर्थः**। पतनीयेन कर्मणा कृतेनाभिशस्यमानस्य (सत्या० श्रौ० २२।२।१९)। **दूष्यमाणस्य, अभ्याख्यायमानस्य**। किं नाम कृपणं दैवमशक्तमभिशंससि (रा० २।२३।७)। **अभिशंससि प्रशंससि। अत्यन्तं विरलोऽस्मार्थेऽन्यत्र प्रयोगः। प्रकृते चायमेवार्थः सङ्गच्छते। कश्च दैवेन सौमित्रे योद्धुमुत्सहते पुमान् इति दैवप्रभावं स्तुवन्तं रामं प्रति लक्ष्मणस्योक्तिरियम्**। यानि मिथ्याभिशस्तानां पतन्त्यश्रूणि राघव (रा० २।१००।५९)। **मिथ्यादूषितानाम्। दोषेणाभियुज्य ख्यातोऽभिशस्तो भवति। इह धातुः स्तुत्यर्थं विहाय कथनमात्रमर्थान्तरं सङ्क्रान्तः। सोऽयं सङ्क्रमोऽन्यत्रापि बहुलं लक्ष्यते**। स्तेनोऽभिशस्तो ब्राह्मणो राजन्यो वैश्यो वा परस्मिँल्लोकेऽपरिमिते निरये वृत्ते जायते (आप० ध० (२।२।६)। **स्तेनोभिशस्तः स्तेनः सन्यस्तथाऽनाख्यातः। अत्राभिनेऽर्थे। अन्यत्र दुर्लभोऽर्थः**। आतुरामभिशस्तां वा चौरव्याघ्रादिभिर्भयैः (गाम्) (मनु० ११।११२)। **अभिशस्तामाक्रान्तामिति कुल्लूकः। कथमस्यार्थस्य लब्धिरिति न जानीमः**। दुःशासनस्तूपहतोऽभिशस्तो नावर्तते मन्युवशात् कृतघ्नः (भा० उ० ३६।१८)। **अभितः शस्त्रैर्दीर्ण इति नीलकण्ठः। व्यक्तमसौ शसु हिंसायाम् इति धातोर्निष्ठायां रूपं पश्यति। धृष्टार्थादन्यत्र निष्ठायामिट् स्यादेवेति न पश्यति। अर्थासङ्गतिं चापि न पश्यति। उत्तमादिलक्षणाख्यानप्रसङ्गे दुःशासनोऽधम इति विवक्षन्निदमाह—दुःशासन इति। तत्र शस्त्रालीढः स उत नेति वचोऽनवकाशम्। तेन दूषित इति प्रसिध्यन्नर्थ एव ग्राह्यः**। अभिशस्ता इवाभूवन् ध्यानमूकत्वमास्थिताः (भा० द्रोण० ३३।५)। वेदाध्यायं हत्वा सवनगतं चाभिशस्तः (सत्या० श्रौ० २६।६।५५)। **अभिशस्त इति ब्रह्मघ्नोऽभिधानमिति टीका**। तितिक्षन्ते अभिशस्तिं जनानाम् (ऋ० ३।३०।१)। **अभिशस्तिं गर्हां निन्दाम्**। नभो न रूपं जरिमा मिनाति पुरा तस्या अभिशस्तेरधीहि (ऋ० १।७१।१०)। अभिशस्तिपा भुवनस्य राजा (ऋ० ९।९६।१०)। **अभिशस्तिरभ्याख्यानं दोषारोपः**। भूमिर्मातादितिर्नो जनित्रं भ्रातान्तरिक्षमभिशस्त्या नः (अथर्व० ६।१२०।२)। **अभिशस्त्याऽभिशंसनेन। मिथ्यापवादजनितात् पापादिति सायणः**। इति देवी महेष्वासं परिगृह्याभिशस्य च (रा० २।११।१६)। **अभिशस्य प्रशंस्य**। ब्राह्मणमनृतेनाभिशंस्य (व० ध० २३।३९)। **अभियुज्येत्यर्थः**। अनभिशस्तेन्यमञ्जसा सत्यमुपगेषम् (वा० सं० ५।५)। **अभिपूर्वः शंसतिर्गर्हार्थे वर्तत इत्युवटः**। अनभिशस्तेन्यमगर्ह्यम्। **पञ्चाशद् ब्राह्मणो दण्डयः क्षत्रियस्याभिशंसने** (मनु० ८।२६८)। **अभिशंसने आक्रोशे**। स्वभावात्क्रूरकर्माणश्चान्योन्याभिशंसिनः (भा० वन० १९०।५६)। **अन्योन्यस्य दूषका इत्यर्थः**। मिथ्याभिशंसिनो दोषः (याज्ञ० ३।२८४)। **ब्रह्महत्यादिकमनेन कृतमिति मिथ्या शंसति कथयति दुष्पयिषया, तस्य**।

—शिक्ष् (शिक्ष विद्योपादाने)। क्रियास्वपि त्र सर्वासु विशेषानभ्यशिक्ष-यत् (भा० आदि० २२१।७३)। अभ्यशिक्षयत् अग्राहयत्, तेषु विशेषेष्वभि-व्यनयत्। चतुष्पादं धनुर्वेदं शस्त्रग्रामं ससङ्ग्रहम्। अचिरेणैव कालेन गुरुस्ता-वभ्यशिक्षयत् (हरि० २।३३।७)।। अभिः साकल्ये।

—शी (शीङ् शये)। ते हासुरा असूयन्त इवोचुर्यावदेवैष विष्णुरभिशेते तावद् वो दद्मः (श० ब्रा० १।२।५।१)। यावदभिशेते यावन्तं प्रदेशं शयनेन (निपद्य) परिगृह्णाति आवृणोति।

—शुच् (शुच शोके छन्दसि तु बहुलं दीप्तौ वर्तते)। यदि शोको यदि वाभिशोकः (अथर्व० १।२५।३)। अभिशोकोऽभ्यधिकः शोको दीप्तिः। मा द्यावापृथिवी अभिशोचीः (वा० सं० ११।४५)। मा सन्तापयेत्यर्थः। यां ज्ञात्वा नाभिशोचन्ति ब्राह्मणास्तत्त्वदर्शिनः (भा० शां० ३०२।२६)। अभिशो-चन्ति अभिलक्ष्य शोचन्ति दुःख्यन्ति।

—शुम्भ् (शुभ, शुम्भ भाषणे, भासने इत्येके, हिंसायामित्यन्ये)। समानं वर्णमभिशुम्भमाना (अथर्व० १।६२।१०)। समानेन वर्णेन भासमाना।

—श्वस् (श्वस प्राणने)। अभिश्वसन्त्स्तनयन्नेति नानदत् (ऋ० १।१४०।५)। अभिश्वसन् अभिवान्।

—सच् (षच समवाये)। पोषैरभि नः सचध्वम् (अथर्व० १८।४।६२)। अभिसचध्वम् अभितः समवेतेत्यर्थः। रातिषाचो अभिषाचः स्वर्विदः (ऋ० १०।६५।१४)।

—सञ्ज् (षञ्ज सङ्गे)। ततो देवानसुरा अभ्यषजन्त। तेन्योऽन्यं युयुधिरे (का० सं० कल्प० रेवती० ६)। अभ्यषजन्त पराभावयन् पराजयन्त। भवांस्तत्राभिषज्येत किं स्यात्कृच्छ्रतरं ततः (रा० ३।७।२१)। अभिषज्येत मया कृतपराधो भवेदित्यर्थ इति कतकः। अभिषज्येत पीड्येतेति तु रामः। रामस्य सुतीक्ष्णं महर्षि प्रत्युक्तिरियम्। अभिषज्यमाने तु गुरौ तद्वृत्तं रोषका-रितम् (भा० वि० ५१।१६)। अभिषह्यमाणे, अभिमृष्यमाणे, परिभूयमाणे। अभिद्यमाने रोषकारितम् इति पाठान्तरे। न च सन्दर्शने किं चित् प्रवृत्तमभि-सञ्जयेत् (भा० वि० ४।२६)। राज्ञां सन्दर्शने समक्षं प्रवृत्तमपि भक्तादिदान-महंपूर्विकयाऽनाकारितः सन् न स्वीकुर्यादिति नीलकण्ठः। अपि सञ्जयेदिति नीलकण्ठधृतः पाठः। अभिषक्तो ह्यभिषजेत् आहन्याद् गुरुणाहतः (भा० वन० २६।२६)। अभिषक्तस्तापित इति नीलकण्ठः। अयं तात्पर्यार्थ उक्तः स्यात्। पार्थानामभिषङ्गेण तथा क्रुद्धं जनार्दनम् (भा० वन० १२।८)। अभिषङ्गः परा-भवः। त्वभिषङ्गः पराभव इत्यमरश्च। व्यतीपातादिसर्वदोषाभिषङ्गरहितेऽहनि

(हर्ष० चतुर्थ उच्छ्वासे)। अभिषङ्गः सम्बन्धः। कन्यका दुन्वन्ति हृदयं मनुष्याणामीदृशाद् दुरभिषङ्गात् (मालती० ७)। अभिषङ्गः संसर्गः, आसङ्गः। जाताभिषङ्गो नृपतिर्निषङ्गात् (रघु० २।३०)। जाताभिषङ्गः प्राप्तपराभवः। ततोऽभिषङ्गानिलविप्रविद्धा (सीता) (रघु० १४।५४)। अभिषङ्ग आकस्मिक आघातः। विनोदयिष्यन्ति नवाभिषङ्गाम् (रघु० १४।७७)। प्रत्यग्रदुःखाम्। उच्चारितं मे मनसोऽभिषङ्गात् (भा० उ० ३०।१)। अभिषङ्गाद् आवेगाद् उद्वेगात् क्षोभात्। अभिघाताभिचाराभ्यामभिशापाभिषङ्गतः (सुश्रुत० उ० अ० ३९)। अभिषङ्गो भूताद्यावेशः। क्षेपायमाणमभिषङ्गव्यलीकं निगृह्णाति ज्वलितं यश्च मन्युम् (भा० शां० २९९।११)। अभिषङ्गोऽभिनिवेशः। व्यलीकमप्रियम्।

—सद् (षद्लृ विशरणगत्यवसादनेषु)। अथान्यो भिषगभिषदेत् (का० सं० विमान० शिष्योपक्रम० अ०)। अभिषदेत् अभिषीदेत् अभ्यागच्छेत्। मृधा वा एषोऽभिषण्णः (तै० सं० २।४।२।३)। मृधाऽभिषण्णः सङ्ग्रामेणाभिभूतः।

—सि (षिञ् बन्धने)। तैस्त्वा सर्वैरभिष्यामि पाशैः (अथर्व० ४।१६।९)। अभिष्यामि बध्नामि। अभिस्तु सर्वैरित्यनेन गतार्थः।

—सिच् (षिच क्षरणे)। यत्काम इदमभिषिञ्चामि (अथर्व० ६।१२२।५)। अभिषिञ्चामि अभितो निनयामि। इदम् इदानीम्। तथाभ्यषिक्त वारीणि पितृभ्यः शोकमूर्च्छितः (भट्टि० ६।२३)। सलिलं न्यवपत्, उदकमकरोदित्यर्थः। तद्यथा जक्षुषेऽभिषिञ्चेदेवं तत् (श० ब्रा० २।४।२।२३)। भुक्तवन्तमाप्लावयेदित्यर्थः। सङ्गे पुनर्बहुतराममृताभिषिक्ताम् (चौर० २९)। अमृतेनाभिवृष्टामित्यर्थः। अथ वपुरभिषेक्तुं तास्तदम्भोभिरीषुः (शिशु० ७।७५)। अभिषेक्तुमाप्लावयितुम्। अग्निवर्णमभिषिच्य राघवः स्वे पदे तनयम्... (रघु० १९।१)। अभिषेचनेनाभिषेकपूर्वकं स्वस्थाने प्रतिष्ठाप्येत्यर्थः। अभिषेकं करिष्यामि तासु नित्यमनुव्रता (रा० २।२७।१९)। अभिषेकं स्नानम्। कृताभिषेको गङ्गायाम् (रा० १।४४।३०)। उक्तोऽर्थः। उपनीयतां मन्त्रेण संभृतः कुमारस्याभिषेकः (विक्रम०)। इहाभिषेकार्थं जलमभिषेक उक्तः। तादर्थ्यात्ताच्छब्द्यम्। किं पुष्करजलैरभिषेचनेन (हरि० १।१।२)। अभिषेचनं स्नानम्।

—सु (षुञ् अभिषवे। अभिषवः स्नानं सुरासन्धानं च)। रामाभिषवसंयुक्ता इवक्रुरेव कथा मिथः (रा० २।६।१६)। रामाभिषवो रामाभिषेकः। अत्र धातुः स्नानमभिधत्ते।

—सृ (सृ गतौ)। पराजितश्चेद् द्विगुणदण्डः क्रियेत न कश्चन राजानमभिसरिष्यति (कौ० अ० ३।२०।६)। अभिसरिष्यत्यभ्युपैष्यति (न्यायार्थम्)। पतिलोभेन यं गङ्गा विनीताऽभिससार ह (हरि० १।२७।५, १।३२।४४)। अभिससार अभिसरणं अभिलक्ष्य सरणं कृतवती, प्रोवाह। यद्येतावान् बहुमानः, किं नाभिस्रियते।... किन्तु सहसाऽभिसृतः प्रत्युपकारदुर्लभतया पुनर्मे दुर्लभो भवेदिति विलम्बे (चारु० २)। आर्ये यदि स मनीषितस्तत्किमर्थमिदानीं सहसा नाभिसार्यते (मृच्छ० २)। स्वार्थे णिच्। पुरोऽभिसर्त्रे सुरसुन्दरीजनैः (कि० ८।४)। अभिससार न वल्लभमङ्गना (शिशु० ६।२६)। अनन्तरोदीरित एवार्थः। इत्यलघुना लघुसमुत्थानेन सैन्यचक्रेणाभ्यसरम् (दशकु० पृ० १६५)। अभ्यसरं प्रायाम्। छिन्धि भिन्द्धि प्रधाव त्वं पातयाभिसरेति च। अश्रूयन्त महाघोराः शब्दाः... (भा० आदि० १६।१।८)॥ अभिसर=अनुसर। अभि स्ववृष्टिं मदे अस्य युध्यतो रघ्वीरिव प्रवणे सस्रुरूतयः (ऋ० १।५२।५)। अभिसस्रुः=अभिसस्यन्दिरे। अनभियुक्तस्तु लघुव्यसनः सुखेन व्यसनं प्रतिकृत्यामित्रो यातव्यमभिसरेत् (कौ० अ० ७।५।८)। अभ्युपपद्येत, साहायकमाचरेत्, साचिव्यं कुर्यात्। अनभिसरतां द्वादशपणो दण्डः (कौ० अ० ४।३।६)। साहाय्यार्थं नोपसर्पतामित्यर्थः। सुखा हि प्राप्तुं पालयितुमभिसारयितुं च भवति (अल्पा प्रत्यासन्ना भूः) (कौ० अ० ७।१०।१८)। अभिसारयितुं संरक्षणायोपैतुम्। लोचनैरभिसृतस्य चेतसः प्राभवन्न सुरलोकसुभ्रुवः (पारिजात० १७।११)। कृताभिसरणस्य सङ्केतं प्रतियियासतश्चेतसो न प्राभवन्नेशाङ्गचक्रिरे। मन्मथाभिसरा तदगारमभिसरामि (दशकु०)। अभिसरः सहायः। अनुप्लवः सहायश्चानुचरोऽभिसरः समा इत्यमरः। कृत्वा साभिसरमुत्तरापथं प्राहिणोत् (हर्ष० पृ० १५०)। मया साभिसारमकरोत्स्वामी (हर्ष० पृ० २७)। अभिसारोऽभिसरः। लोहाभिसारो निर्वृत्तः, कुरुक्षेत्रमकर्दमम् (भा० उ० १६०।६३, १६१।११)। लोहाभिसारः शस्त्रादीनां नीराजनादिकम्। त्रिपक्षादूर्ध्वमनभिसारं राजा हरेत् (कौ० अ० ३।१६।२२)। अनभिसारं ममेवं मे दीयतामित्यप्रार्थितम्। अतो विपरीता रोगाणामभिसरा हन्तारः प्राणानाम् (चरक० सूत्र० २६।८)। अभिसरा आनेतारः। तद्वदासीदभीसारो द्रोणपार्षतयो रणे (भा० द्रोण० १६१।३१)। अभीसारोऽनुसारः। श्वोऽभिसारः पुरस्य नः (रा० ६।६।१६)। अभिसार आस्कन्दः। अन्यत्राभिसारः सङ्केतस्थानं कामुकानाम्। शत्रोः सर्वाभिसारे सति रचयति यस्तस्य सर्वापहारम् (प्र० सर्व० मङ्गलश्लोके द्वितीये। सर्वाभिसारमिच्छन्ति सर्वसंनहनं बुधाः (प्र० सर्व०)। निगदव्याख्यातम्। अभिसारेण सर्वेण तत्र युद्धमवर्तत (भा० वन० १३४।)। आयुधानां सर्वतः

सरणमभिसारः। स पन्थानमासाद्य समुद्राभिसरं तदा (भा० शां० १६९।६)। समुद्रगामिनं सागरमुपतिष्ठमानम्। अदण्ड्यागन्तुकी गौश्च सूतिका वाऽभिसारिणी (याज्ञ० २।१६३ मिताक्षरायामाशनसं वचः)। अभिसारिणी स्वयूथात्प्रच्युता पुनः स्वयूथगामिनी। एते ते दैवतानामसुरपुरवधे गच्छन्त्यभिसरीम् (प्रतिमा० ३।७)।

—सृज् (सृज विसर्गे)। मा नोऽभि स्रा मत्यं देवहेतिम् (अथर्व० ११।२।१९)। अभिस्राः=अभिस्राक्षीः, उपरि नो मा क्षैप्सीः, मा नोऽभिलक्ष्य प्रास्थः। मेतो मुञ्चेत्यर्थः। यदोषधीरभिसृष्टो वनानि च (ऋ० १०।९१।५)। तेषामाजि यतामभिसृष्टानां वायुमुखं प्रथमः प्रत्यपद्यत (ऐ० ब्रा० २।२५)। अभिसृष्टानां सन्नद्धानाम् इति षड्गुरु०। अभितः प्रवृत्तानामिति सायणः। त्वयाऽभिसृष्टेन हतः शैनेयेन महात्मना (भा० शल्य० ६१।३५)। अभिसृष्टेन प्रेरितेन।

—सृप् (सृप्लृ गतौ)। तस्य ह ज्येष्ठः पुत्रोऽभिसृप्य मुखमभिजग्राह (शां० ब्रा० ३०।५)। अभिसृप्य=उपसृप्य उपेत्य।

—सो (षो अन्तकर्मणि)। तैस्त्वा सर्वैरभिष्यामि पाशैः (अथर्व० ४।१६।९)। अभिदधामि, प्रसिनामि, बध्नामि।

—स्कन्द्, (स्कन्दिर् गतिशोषणयोः)। अभिचस्कन्द वन्दनेव वृक्षम् (अथर्व ७।१२०।२)। अभितो व्याप्ता वर्तत इत्यर्थः।

—स्था (ष्ठा गतिनिवृत्तौ)। अभिवाद्याभिसंहृष्टौ गमनायाभितस्थतुः (रा० १।२३।४)। अभितस्थतुरभिमुखं स्थितौ। अभितष्ठतुरिति तु पाणिनीयाः। पदाऽभितिष्ठन्ति (वेदिम्) (श० ब्रा० १।२।५।२६)। वेद्यां पदानि निदधतीत्यर्थः। इदमहं रक्षोऽभितिष्ठामि (वा० सं० ६।१६)। पादेनाभित आक्रम्य तिष्ठामीत्यर्थः। अभितिष्ठ पृतन्यतः (वा० सं० ११।२०)। आक्रामेत्यर्थः। अभितिष्ठामि ते मन्युं पार्ष्ण्या प्रपदेन च (अथर्व० ६।४२।३)। आक्रम्य तिष्ठामीत्यर्थः। शत्रूयतामभितिष्ठ महांसि (तै० ब्रा० २।५।२।४)। शात्रवमिच्छतां तेजांस्यभितिष्ठ अभित आक्रामेत्युक्तं भवति। तस्य पदा शिरोऽभितष्ठौ (श० ब्रा० ५।४।१।९)। उपापीडयदित्यर्थः। अभिष्ठितो वरुणस्य पाशः (तै० सं० १।४।४५)। अभिष्ठितोऽभिभूय क्रान्तः। अधः सपत्ना मे पदोरिमे सर्वेऽभिष्ठिताः (ऋ० १०।१६६।२)। अभिभूताः सन्तः स्थिताः।

—स्मि (ष्मिङ् ईषद्धसने)। तदा स्म मन्त्रं सहिताः प्रचक्रुस्त्रैलोक्य-नाशार्थमभिस्मयन्तः (भा० ३।१०१।१९)। त्रिदशानामुपरि स्मयमाना असुराः।

—स्यन्द् (स्यन्दू प्रस्रवणे)। यदि त्वामीदृशं रामभद्रः पश्येत्तदास्य हृदयं स्नेहेनाभिष्यन्देत (उत्तर० ५)। अभिष्यन्देत द्रवेत् प्रस्रवेत्। अभिरविशेषकः। सततमभिष्यन्दमानमेघमेदुरितनीलिमा (गिरिः) (उत्तर० १)। अभिष्यन्दमानो वर्षन्। प्रायेण सर्वे नयनामयास्ते भवन्त्यभिष्यन्दनिमित्तमूलाः (सुश्रुत० उत्तर० ६।२)। नयनाभ्यां जलबिन्दुनिपतनमभिष्यन्द.। भूतपूर्वमभूतपूर्वं वा जनपदं परदेशापवाहनेन स्वदेशाभिष्यन्दवमनेन वा निवेशयेत् (कौ० अ० २।१।१)। अभिष्यन्दोऽतिरेकः (प्रजानाम्)। स्वर्गाभिष्यन्दवमनं कृत्वेव विनिवेशितम् (रघु० १५।२९, कु० ६।३७)। उक्तोऽर्थः। गुर्वभिष्यन्दिभक्तानि (विष्णुधर्मोत्तरे २।४६।४४)। अभिष्यन्दीनि मलशैथिल्यकराणि। दिवास्वप्नात् पुरोवाताद् गुर्वभिष्यन्दिभोजनात् (का० सं० खिल० सूतिकोप० श्लो० ४१)। उक्तोऽर्थः। नवं धान्यमभिष्यन्दि लघु संवत्सरोषितम् इत्यायुर्वेदविदः। अभिष्यन्दिरमणं शाखानगरमिति कोषः।

—स्वञ्ज् (ष्वञ्ज परिष्वङ्गे)। नाभिष्वजेत् परं वाचा कर्मणा मनसापि वा (भा० शां० २४०।२९)। नाभिष्वजेत् = नाभिष्वजेत। न परिगृह्णीयान्ममायमिति न तत्र सज्जेत्। अभिष्वक्तस्य कामेषु (सौन्दर० ११। १०)।। अभिष्वक्त आसक्तः प्रसक्तः प्रसङ्गी। अभिष्वङ्गस्तु कामेषु महामोह इति स्मृतः (भा० आश्व० ३६।३२)। अभिष्वङ्ग आसक्तिः। आहारे शरीरे चानभिष्वङ्गात् (अवदा० जा० ७)। उक्तोऽर्थः। नास्ति मे त्वय्यभिष्वङ्गः (रा० ६।१०।२१)। स्नेहः प्रेमा रागः। असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु (भा० पु० १३।६। )। निगदव्याख्यातम्। न तत्कुर्यादभिष्वङ्गं पापज्ञप्त्येकहेतवे। स्त्रीभिः कदाचन ······(कथा० ६६।७१)॥ स तं दृष्ट्वा झटित्येव गाढाभिष्वङ्गतो गतम्। सप्तमीं मदनावस्थाम्······ (कथा० ८६।६७)॥ अभिष्वङ्गो रागः। अभिष्वङ्गे स्पृहायां च गभस्तौ च रुचिः स्त्रियामित्यमरः। अभि॰वङ्गो राग इति स्वामी।

—हन् (हन हिंसागत्योः)। अगस्त्यस्य तदा क्रुद्धो वामेनाभ्यहनच्छिरः (भा० अनु० १००।२३)। अभ्यहनत्। अभिघातमकरोत्। अविध्यदित्यर्थः। मर्मस्वभ्यवधीत् क्रुद्धः पादाष्ठीलैः सुदारुणैः (भा० सौ० ८।२४)। अभ्यवधीद् अभितोऽताडयदित्यर्थः। पादाष्ठीलैः पादग्रन्थिभिः। पार्ष्णिघातैरित्यर्थः।

ततः शङ्खाश्च भेर्यश्च······। सहसैवाभ्यहन्यन्त······(गीता० १।२३) ॥ **अभ्यहन्यन्त अताड्यन्त।** सोऽभिहतो व्यनदत् (ऐ० ब्रा० ४।२)। **स वृत्रः। अभिहतः प्रहृतः।** अन्योन्यहराभिहतौ हरांशौ (लीला०)। **अभिहतौ गुणितौ।** अस्त्रेण मेदिनीमभिहत्य (भा० द्रोण० ९९।५९)। **अभिहत्य=आहत्य=ताडयित्वा।**

—हर्य् (हर्य गतिकान्त्योः)। मनसा वै सम्राट् स्त्रियमभिहर्यति (श० ब्रा० १४।६।१०।१५)।

—हा (ओहाङ् गतौ)। तस्याभ्यग्निरैतशायन एत्याकालेऽभिहाय मुखमप्यगृह्णात् (ऐ० ब्रा० ६।३३)। **अभिहाय स्वासनादुत्थाय।**

—हु (हु दानादनयोः)। सोऽपो जुहोति (श० ब्रा० ३।९।३।२३)। **अपामुपरि हविर्दत्त इत्यर्थः।** अथोपविश्य मृदमभिजुहोति (श० ब्रा० ६।३।३।१५)। **मृद उपरि हव्यं प्रदिशतीत्यर्थः।**

—हृ (हृञ् हरणे)। इमा विशो अभि हरन्तु ते बलिम् (अथर्व० १९।४५।४)। **अभिहरन्तु उपहरन्तु।** तस्मै ह स्म पूर्वाह्णे देवा अशनमभिहरन्ति (श० ब्रा० १।६।३।१२)। **उक्तोऽर्थः।** तस्माद् दिशो दिश एव राज्ञेऽन्नाद्यमभिह्रियते (श० ब्रा० ५।।५।१।८) सा मुक्ताऽभ्यहरच्छक्तिमहिषस्य शिरो महत् (भा० वन० २३१।९६)। **अभ्यहरदपाहरत्, अच्छिनत्।** तदन्तरमथावृत्य कोटिकास्योऽभ्यहारयत् (भा० वन० २७१।५)। **भीमजयद्रथयोर्मध्ये प्रवेशेनान्तरं व्यवधानमकरोत्।** सवज्रायसगर्भं तु कवचं तत्र काञ्चनम्। विराटस्य प्रियो भ्राता शतानीकोऽभ्यहारयत् (भा० वि० ३१।१२)॥ सर्वपारसवं वर्म कल्याणपटलं दृढम्। शतानीकादवरजो मदिराक्षोऽभ्यहारयत् (भा० वि० ३१।१२-१३)॥ **अभ्यहारयत् अबध्नात्।** सुरामैरेयपानानि प्रभूतान्यभ्यहारयन् (भा० वि० ७२।२८)। **अभ्यहारयन् अमित आहारयन् आनयन्।** पाण्डवो जीविताकाङ्क्षी राधेयं नाभ्यहारयत् (भा० )। **नाभिमुखमापद्यत।** पूर्वं दक्षिणं पादमभिहरन्ती प्रदक्षिणमग्निमनु परिक्रामेत् (चरक० शारीर० ८।११)। **अभिहरन्ती अग्रतो निदधती, उद्यच्छमाना।** अभिहारयत्सु शनकैर्भरतेषु युयुत्सुषु (भा० द्रोण० ८८।३)। **अभिहारयत्सु सन्नह्यमानेषु, अभियुञ्जानेषु वा।** प्रहरत्स्वति केचित्। स्नातस्तु काले यथाविध्यभिहृतम् (सत्या० श्रौ० २६।२।९५, आप० ध० १।२।८।७)। **अभिहृतमाबद्धं (स्रगादि)।** मुखतोऽभिहृत्य मुखत उपावहरति (आप० श्रौ० २।४।१३।३)। **अभिमुखं कृत्वा उपावहरति अपादत्त इति रुद्रदत्तः।** प्रियं कर्तु-

मुपस्थातुं बलिकर्म स्वकर्मजम् । अभिहर्तुम्...(भा० सभा० १३।१६) ॥ उपहर्तुमुपायनीकर्तुम् । अभिहारोऽभिग्रहणम् (वैजयन्ती) । चौर्यकरणं बलादपहारो वा । सुहृत्कार्येष्वनभिगमनमनभिहारहेतोः (कामसूत्रे) । अभिहार उपहार उपायनम् । याच्यमाहुरनीशस्य अभिहारं च भारत (भा० अनु० ६०।४०) । अभिहारस्तिरस्कार इति नीलकण्ठः । बलादपहार इत्यन्ये । अनीशस्य दरिद्रस्य । अतिदूरात्सामीप्यादिन्द्रियाघातान्मनोऽनवस्थानात् । सौक्ष्म्याद् व्यवधानादभिभवात्समानाभिहाराच्च (साङ्ख्यका० ७) ॥ अनुपलब्धिरित्यनुषङ्गः । समानाभिहारः सजातीयसंवलनम्, सजातीयपदार्थसंमिश्रणम् । व्यादिदेश गणशोऽथ पार्श्वगान् कार्मुकाभिहरणाय मैथिलः (रघु० ११।४३) । अभिहरणमाहरणम् । यानक्षोभो यानपातो यानाभिहरणं तथा । (का० नी० सा० १५।२०) । अभिहरणमनभिमतदेशप्रापणमिति मङ्गला । यानेन (प्रजविना) अभिहरणमिति विग्रहः । सर्वं सुगुणलक्ष्मीवत् तदभूदाभिहारिकम् (रा० २।६५।१०) । प्राता राज्ञे यदभिहर्तव्यं मङ्गलाद्यानेतव्यं तदाभिहारिकमुच्यते । आभिहारिकं सौख्यदमिति तु संस्कृतशार्मण्यकोषः । बलादुपधिना वाऽपहृतमित्यन्ये । भार्याभिहर्ता वैरी यो यश्च राज्यहरो रिपुः (भा० वन० वन० २८१।४६) । भार्याभिहर्ता दारापहारकः ।

—हेष् (हेषृ अव्यक्ते शब्दे, अश्वरवे) । तद्यथा भिहेषते पिपासते क्षिप्रं प्रयच्छेत्तादृक् तत् (ऐ० ब्रा० ६।८) । अभिहेषतेऽभिहेषमाणाय (घासार्थं) आभिमुख्येन शब्दं कुर्वाणाय । हया हयानभ्यहेषन् (भा० कर्ण० ८७।६६) । अभिलक्ष्याहेषन्तेत्यर्थः ।

### अभ्यति (अभि + अति)

—क्रम् (क्रमु पादविक्षेपे) । स स्ववेश्माभ्यतिक्रम्य...प्रपेदे...राजमार्गम् (रा० २।७०।२६) । अभ्यतिक्रम्य=अन्तिकादतिक्रम्य ।

—रिच् (रिचिर् विरेचने) । होतारं वा अभ्यतिरिच्यते यदभिरिच्यते (तै० सं० ७।१।५।६) । होतारमभ्यतिरिच्यतेऽतिरिक्तमुर्वरितमतिशिष्टं हौत्रार्थं भवति होतुर्भागो भवतीत्यर्थः ।

### अभ्यधि (अभि + अधि)

—मन् (मन ज्ञाने) । न च हव्यं वहत्यग्निर्यस्तामभ्यधिमन्यते (सत्या० श्रौ० २६।५।११५) । अभ्यधिमन्यते प्रत्याचष्टे ।

### अभ्यनु (अभि + अनु)

—ज्ञा (ज्ञा अवबोधने) । अतोऽभ्यनुजानातु भवती (काद० पृ० २०६) ।

अनुजानातु, अनुमन्यताम्। अभिनार्थे विशेषं करोति। हृदयेनाभ्यनुज्ञातो यो धर्मस्तं निबोधत (मनु० २।१)। अभ्यनुज्ञातोऽभिमतः स्वस्य प्रियः। तत्र हि स्वरसात्मनोऽभिमुखी भवतीति कुल्लूकः। जामदग्न्याभ्यनुज्ञातमस्त्रे (भा० द्रोण० १।४६)। अभ्यनुज्ञातमभिविनीतं शिक्षितम्। यदन्यस्याभ्यनुज्ञाय (मनु० ६।७१)। अभ्यनुज्ञाय दातुं प्रतिज्ञाय। न दत्त्वा कस्यचित्कन्याम् इति कुल्लूकधृतः पाठः। अभ्यनुज्ञाप्य सीतां च ययौ स्वं च निवेशनम् (रा० २।४।४५)। सीतायै स्वस्मै च मातृभ्यामनुज्ञां दापयित्वेत्यर्थः।

—ब्रू (ब्रूञ् व्यक्तायां वाचि)। तदेतदृषिः पश्यन्नभ्यनूवाच (ऐ० ब्रा० २।३३)। अभ्यनूवाच तल्लक्षयित्वाऽनुक्रमेणोवाचेत्यर्थः। नार्थोऽभिना। पश्यन् इत्यनेन तस्य गतार्थत्वात्। पशूनेवैतदभ्यनूक्तम् (श० ब्रा० १।४।१।६)। उक्तोऽर्थः। इति सम्प्रति दिशोऽभ्यनूच्यन्ते (श० ब्रा० ८।१।४।२)। शब्दतो लक्ष्यन्त इत्यर्थः।

—सृ (सृ गतौ)। तामृचीकस्ततो दृष्ट्वा योगेनाभ्यनुसृत्य च (हरि० १।२७।२७)। योगेनाभ्यनुसृत्य ध्यानेन ज्ञात्वेत्यर्थः।

## अभ्यप (अभि+अप)

—क्रम् (क्रमु पादविक्षेपे)। स्वं हैवास्य तत्प्रतिमामिवाभ्यपक्रामति (श० ब्रा० ५।४।३।११)। अभ्युपसर्पति, उपैतीत्यर्थः। स्वम् आत्मा। समिद्धो अग्न आहुत स नो माभ्यपक्रमीः। अत्रैव दीदिहि···माऽपसार्षीरित्यर्थः।

## अभ्यव (अभि+अव)

—अन् (अन प्राणने)। जातं कुमारं त्रिरभ्यावान्य (शां० गृ० १।२४।२)। अभ्यावान्य=अभ्युच्छ्वस्य।

—इ (इण् गतौ)। नापोऽभ्यवयन्त्यूर्ध्वं जानुभ्यामगुरुप्रयुक्ताः (गो० गृ० ३।१।३२)। अभ्यवयन्ति अवगाहन्ते अवतरन्ति प्रविशन्ति। अवोऽधोऽर्थे। अभिस्तु नार्थविशेषं कञ्चिदाह। स्थावरा (अपः) अभ्यवयन्ति। ता हि साक्षाद् वरुणः (मै० सं० ४।८।५)। उक्तोऽर्थः। अत्रार्थे छन्दसि बहुलः प्रयोगोऽभ्यवेणः। काश्चिद् दिशः स्थूलोच्चयेन लक्ष्यन्ते—अवभृथमभ्यवैति (ऐ० ब्रा० १।३)। शनैरपोऽभ्यवेयात् (आप० ध० २।६।२२।१३)। अथो खल्वाहुर्यत्रैवेतरेऽवभृथमभ्यवेयुस्तदस्थान्यवहरेयुः (जै० ब्रा० १।३४७)। न पुराऽवभृथादपोऽभ्यवेयात् (श० ब्रा० ३।२।२।२७)। इति। ततोऽभ्यवैति ततो रातमना आलम्भाय भवति (पशुः) (श० ब्रा० ३।७।३।६)। अभ्यवैति=

अभ्युपैति, अनुमन्यते। तदृषयो यज्ञवास्त्वभ्यवायन्, तेऽपश्यन् पुरोडाशम् (तै० सं० २।६।३।२)। अभ्यवायन् ऐक्षन्त। नोदीचीरभ्यवेत्या इत्येके (आप० श्रौ० ८।२।७।१६)। अभ्यवेत्या अवगाह्याः। चतुर्थकाल उदकाभ्यवायी (आप० ध० १।६।२७।११)। सलिलावगाहीत्यर्थः।

—तन् (तनु विस्तारे)। रश्मयः प्राणानभ्यवतायन्ते (श० ब्रा० २।३।३।६)। प्राणाननु वितता भवन्तीत्यर्थः।

—दो (दो अवखण्डने)। मा नो भवान्बहोरनन्तस्यापर्यन्तस्याभ्यवदान्यो भूत् (श० ब्रा० १४ ६।१।१०)। अभ्यवदान्य आच्छेत्ता, प्रमोषकः। कर्तरि कृत्यः।

—धा (डुधाञ् धारणपोषणयोः)। पौरजनाश्रुभिः। पतितैरभ्यवहितं प्रणनाश महीरजः (रा० २।४०।३३)। अभ्यवहितं रथेनाभ्युद्यतमिति रामष्टीकाकारः। तदसत्। अवपूर्वस्य दधाते र्नीचैर्निधानमर्थः प्रसिद्धः। तदिदमिहैव द्वितीयस्मिन्खण्डे वितत्य दर्शितचरम् इति न भूयो वितन्यते। संस्कृतशार्मण्यकोषोप्यत्रानुकूलः। तेन निषण्णं प्रशान्तमित्येवार्थः।

—नी (णीञ् प्रापणे)। तस्मादश्वानद्भिरभ्युक्षति स्नपनायाभ्यवनीयमानान् (श० ब्रा० ५।१।४।५)। अभ्यवनीयमानान् अवतार्यमाणान्। यथा संगतां भूमानं देवानां पत्नीरभ्यवनयेत् (शां० ब्रा० ७।६)। अभ्यवनयेत् = नयेत्।

—पत् (पत्लृ गतौ)। सा (जगती) परास्य त्रीण्यक्षराण्येकाक्षरा भूत्वा दीक्षां तपश्च हरन्ती पुनरभ्यवापतत् (ऐ० ब्रा० ३।१)। अभ्यवापतत् = न्यवर्तत। एतं लोकमभिलक्ष्य अत्रापतत् अधोमुखी समागतेति सायणः।

—पद् (पद गतौ)। भूमिद्रव्यहरणेन लोभविजयी तुष्यति। तमर्थेनाभ्यवपद्येत (कौ० अ० १२।१।१३-१४)। अभ्यवपद्येत = आवर्जयेत्, स्वस्मिन्प्रवणं कुर्यात्, अनुगुणं विदधीत। अस्मानभ्यवपद्यैते मामूचुर्द्विजसत्तमाः (रा० ३।१०।७)। अभ्यवपद्य अभ्यवपद्यस्व अनुगृहाण त्रायस्व। सीतामभ्यवपन्नोऽहं रावणेन बलीयसा (रा० ३।६७।१७)। अभ्यवपन्न आभिमुख्येन गतः तदभिमुखमागत इति भूषणकारो गोविन्दराजः। त्रातुमुपेत इति व्यवहारानुगुणोऽर्थः। अत्र कर्तरि क्त इति बोध्यम्। स्त्रीविप्राभ्यवपत्तौ घ्नन्धर्मेण न दुष्यति (मनु० ८।३४९)। अभ्यवपत्तिः परिभव इति मेधातिथिः। सोऽयं व्यवहारं विरुन्धे। अभ्यवपत्तिरप्यभ्युपपत्तिरेव भवति। अभ्युपपत्तिरनुग्रहः

परित्राणमित्यविसंवादी वादः। इदं चेहैतानुपदं व्यक्तं भविष्यति। व्यसन-साहाय्यमभ्यवपत्तिः (कौ० अ० २।१०।३८)। तेषामभ्यवपत्त्या धर्मविजयी तुष्यति (कौ० अ० १२।१।११)। अभ्यवपत्तिः प्रपत्तिरात्मसमर्पणं विधेयीभावः शरणागतिः। मयाऽस्य शरणागत इति कृत्वाऽभ्यवपत्तिश्च दत्ता (तन्त्रा० ११६)। अभ्यवपत्तिः परित्राणमभयम्। ततस्तामभ्यवपत्तुकामो यौगन्धरायणो नाम सचिवस्तस्मिन्नेवाग्नौ पतितः (स्वप्न० १)। अभ्यवपत्तुमभ्युपपत्तुम्, परित्रातुम्। अस्मानभ्यवपद्यते मामूचुर्द्विजसत्तमाः (रा० ३।१०।७)। अभ्यवपद्य=उपेत्य।

—या (या प्रापणे प्रापणमिह गतिः)। चतुर्थकाले उदकाभ्यवयायी त्रिभिर्वर्षैस्तदपहन्ति पापम् (बौ० ध० २।१।२।३)। त्रिषवणस्नायीत्यर्थः।

—रुह् (रुह बीजजन्मनि)। वाराही उपानहा अभ्यवरोहति (मै० सं० ४।४।६)। ऊर्ध्वस्थितो नीचैः स्थितयोरुपानहोः पादौ निवत्त इत्यर्थः। हुताशनः। श्वेताश्वमिव प्रासादं ज्वलन्नभ्यवरूढवान् (रा० ५।५२।१५)।

—वृत् (वृतु वर्तने)। यथाहितस्याग्नेरङ्गारा अभ्यववर्तेरन् (तै० ब्रा० १।१।५।६)। अभ्यववर्तेरन् अभितो वर्तेरन् विप्रतिष्ठेरन् विनिश्चरेयुः।

—हृ (हृञ् हरणे) तमेवं भूत्वा समुद्रमभ्यवजहार (श० ब्रा० ५।१।८।१)। अभ्यवजहार=अधो निनाय। अवोऽधोर्थे। तौ होचतुः। एतꣳ ह्रदमभ्यवहर (श० ब्रा० ४।१।५।१२)। अभ्यवहर=अवधेहि, अवनय। अत्रार्थे छन्दसि प्रसिध्यन्त्यः काश्चन दिश उदाह्रियन्ते भूयोवैशद्याय—अप एवैनाभ्यवहरेयुः (श० ब्रा० १२।२।२।१४)। तदेतदभ्यवहरन्ति (श० ब्रा० ५।३।५।२६)। तद्वासः। स यदा तामतिवर्धाऽथ मा समुद्रमभ्यवहरासि (श० ब्रा० १।८।१।३)। अपो मृन्मयान्यभ्यवहरन्ति ददत्येवाश्मयानि (पात्राणि) (जै० ब्रा० २।४८)। अपः पिण्डानभ्यवहरेद् ब्राह्मणं वा प्राशयेत् (आप० श्रौ० १।३।१०।११)। इति। अथो अरण्ये हतं ग्राममभ्यवहरन्ति (जै० ब्रा० १।८६)। अभ्यवहरन्त्याहरन्तीत्यर्थः। मृदुपूर्वं प्रयत्नेन पाशानभ्यवहारयेत् (भा० शां० ८८।८)। ग्राहयेदित्यर्थः। न ह्येनच्छक्नोत्यभ्यवहर्तुमुद्गरितुं वा (अवदा० जा० ३४)। अभ्यवहर्तुं निगलितुं कण्ठस्याधस्तान्नेतुम्। ओदनं भुङ्क्ष्व सक्तून् पिब धानाः खादेत्यभ्यवहरति (पा० ३।४।५ वृत्तौ)। अभ्यवहरति अश्नाति। निगरणादशनं नातिदूर इत्यर्थसङ्क्रान्तिः सुखा। शक्नोषि किमनेन शालिप्रस्थेन सम्पन्नमन्नमस्मानभ्यवहारयितुम् (दशकु० पृ० १३१)। अभ्यवहारयितुम् भोजयितुम्। शुचीन्यभ्यवहार्याणि मूलानि फलानि च (रा० ४।५०।३५)।

अभ्यवहाराणि अभ्यवहाराः, अभ्यवहार्या अर्थाः । मूत्रपुरीषस्नेहविस्रं-सनाभ्यवहारसंयोगेषु (गौ० ध० १।१।४७) । अभ्यवहारमभ्यवहार्यद्रव्यमिति हरदत्तः । अपोऽभ्यवहृत्य (भा० गृ० ३।१८) । मृन्मयान्यप्सु प्रास्येत्यर्थः । अप इति द्वितीयाबहुवचनम् । कुतोऽस्याभ्यवहरणम् (तन्त्रा० ५।२) । आहरणमित्यर्थः ।

अभ्याङ् (अभि+आ)

—अज् (अज गतिक्षेपणयोः) । देवदत्त गामभ्याज शुक्लाम् (पा० ८।१। ८ वृत्तौ प्रत्युदाहरणम्) । अभ्याज=इतः प्रेरय । तदाहुः कस्मादस्मा ऋषभं दक्षिणामभ्याजन्ति (ऐ० ब्रा० ६।३) । अभि सम्यग् अजन्ति ददतीति षड्गुरु० । समीपमानयन्तीति च सायणः ।

—अश् (अशू व्याप्तौ) । अभ्याशो ह यदस्मै स कामः समृध्येत (छां० उ० १।३।१२) । अभ्याश आशंसा ।

—अस् (असु क्षेपे) । मन्ये बाणस्य नगरमभ्यासस्थमरिन्दम (हरि० २। १२२।१३) । अभ्यासस्थं निकटेस्थितम् । अभ्याश इत्येव तु युक्तम् ।

—आप् (आप्लृ व्याप्तौ) । यदेवास्यात्र विद्वान्वाऽविद्वान्वातिरेचयति न वाभ्यापयति (श० ब्रा० १०।१।३।१०) । अभ्यापयति समापयति समाप्तिं गमयति । नोहाभिस्तं काममभ्यापयेत् (श० ब्रा० १।१।१। ।२१) ।

—इ (इण् गतौ) । पितृलोकाज्जीवलोकमभ्यायन्ति (श० ब्रा० १३।८। ४।६) । अभ्यायन्ति=अभिवर्तन्ते । नरेन्द्रनागाश्वसमाकुलानाम् (चमूनाम्) अभ्यायतीनामशिवे मुहूर्ते (भा० भीष्म० ९९।३०) । अभ्यायतीनामुपायतीनाम् । वत्समिच्छन्ती मनसाभ्यागात् (ऋ० १।१६४।२७) । अत्राभ्ययनं शरीरेणोपगमनं नाह । मनसा तदिति शब्दतो विस्पष्टोक्तेः । मनसा गमनं च स्मरणं भवतीति विस्मरन्ति विवरीतारः । लौकिके साहित्येऽत्रार्थे शतशः प्रयोगा उपलभ्यन्ते । क्षुधार्तश्चात्तुमभ्यागाद् विश्वामित्रः श्वजाघनीम् (मनु० १०।१०८) । अभ्यागाद् अध्यवसितवानिति कुल्लूकः । स्नातस्तु काले यथा-विध्यभिहृतमाहृतोऽभ्येतो वा न प्रतिसंहरेत (आप० ध० १।८।७) । अभ्येतः समीपं गतः । दूरादपि गृहानभ्येयात (गो० गृ० १।५।२२) । आगच्छेदित्यर्थः ।

—कृ (डुकृञ् करणे) । यथाऽदोऽश्वान् गा वा पुनरभ्याकारं तर्पयन्ति (ऐ० ब्रा० ३।५) । पौनः पुन्येन तृणोदकादिभिरभिमुखीकृत्य कण्डूयनेन प्रियशब्देन वा लालयित्वेति सायणः ।

—कृष् (कृष विलेखने) । प्रकर्षणाकर्षणयोरभ्याकर्षविकर्षणैः (भा० आदि० १६०।२५) । अभ्याकर्षोऽभिमुखमास्फालनम् ।

—क्रम् (क्रमु पादविक्षेपे) । तन्त्रमेके युवती विरूपे अभ्याक्रामं वयतः षण्मयूखम् (अथर्व० १०।७।४२) ।

—ख्या (ख्या प्रकथने, चक्षिङ आदेशो वा ख्याञ्) । स य उक्तोक्तः स्याद् योऽभ्याख्यायेत । स एतेन (अग्निष्टुता) यजेत (जै० ब्रा० २।१३४) । अभ्याख्यायेत दोषेण युज्येत (लोकेन) । अभिशस्येत, अभिशस्तः स्यादित्यर्थः । अथाभ्याख्यातेषु (तै० उ० १।११।४) । अभ्याख्याता अभिशस्ताः । अभ्याख्यातेषु कथं वर्तितव्यमित्याह । अभ्याख्यानमिदं नीताः पाण्डवाः कविभिः खलैः (बृहत्कथाकोशे ८३।४८) । अभ्याख्यानमपवादः, लोके वचनीयता ।

—गम् (गम्लृ गतौ) । दन्तावलो धौम्रो यावति तावति काले पारीक्षितं जनमेजयमभ्याजगाम (तस्मादुत्थाय स्वयमेव विष्टरं निदधौ (गो० ब्रा० पूर्व० २।५) । अभ्याजगाम अभ्यागतवान्, अतिथिरित्युपागात् । क्वास्ते दुर्योधनोऽसौ कथयत न रुषा द्रष्टुमभ्यागतौ स्वः (वेणी० ५।२६) । अभ्यागतावुपेतौ । तथाभ्यागतै राजपुरुषैः प्रत्यक्षदर्शनां तां दृष्ट्वा (तन्त्रा० १।३) । विग्विदिग्भ्यः सन्निपतितैः । क्रमादभ्यागतं द्रव्यं हृतमप्युद्धरेत्तु यः (याज्ञ० २।११६) । अभ्यागतमायातम् । अस्मिन् अभ्यागते काले किं च नः क्षममच्युत (भा० उ० १५४।२) । अभ्यागत उपस्थिते संनिहिते । सर्वथा राक्षसकुलस्य विनाशोऽभ्यागत इति मन्ये (अभि० ३) । उक्तोऽर्थः । अभिः सामीप्ये । सर्वे तेऽभ्यागतज्ञाना वीतरागा विमत्सराः । प्राप्तज्ञानाः । अभ्यामर्द-समाघात-सङ्ग्रामाभ्यागमाहवा इत्यमरेऽभ्यागमो युद्धनामसु पठितः । तेषामभ्यागमनं भोजनं विवाहमिति च वर्जयेत् (आप० ध० १।१।१।३३) । अभ्यागमनं सत्कारार्थमाभिमुख्येन गमनम् ।

—चर् (चर गतिभक्षणयोः) । विशो अदेवीरभ्याचरन्तीः (सासहे इन्द्रः) (ऋ० ८।९६।१५) । अभ्याचरन्तीः सङ्ग्रामयमाणाः । अवारयन्त वरणेन देवा अभ्याचारमसुराणाम् (अथर्व० १०।३।२) । अभ्याचारमभ्यागमम् आयोधनम् ।

—तप् (तप सन्तापे) । इन्द्रावरुणावभ्या तपन्ति माघान्यर्यो वनुषामरातयः (ऋ० ७।८३।५) । अभ्यातपन्ति सर्वतो बाधन्ते । अघानि कर्तृणि ।

—तन् (तनु विस्तारे)। यद् देवा अभ्यातानैरसुरानभ्यातन्वत (तै० सं० ३।४।६।२)। आयुधानि प्राहिण्वन्नित्यर्थः।

—तॄ (प्लवनतरणयोः)। परस्या अधि संवतोऽवरां अभ्यातर (वा० सं० ११।७१)। अभ्यातर=अभीहि, इत एहि।

—दा (डुदाञ् दाने)। ओमभ्यादाने (पा० ८।२।८७)। अभ्यादानमारम्भः। स्यादभ्यादानमुद्घात आरम्भ इत्यमरः। वाक्यमभ्याददे कृष्णः सुदंष्ट्रो दुन्दुभिस्वनः (भा० उ० ६५।१)। अभ्यादानमारम्भः। वाचमाददे, वक्तुमुपचक्रमे। न हीनतः परमभ्याददीत (भा० आदि० ८७।८, सभा० ६६।६, शां० २९९।८)। हीनेनाभिचारादिकर्मणा द्यूतादिकर्मणा वा परं शत्रुं न वशे कुर्वीतेत्याद्ययोः प्रदेशयोरर्थः। तृतीये तु परमौपनिषदं रहस्यं निहीनवर्णाद् विवर्णान्नाददीत न गृह्णीयादित्यर्थः। सर्वमिदमभ्यात्तोऽवाक्यनादरः (छां० उ० ३।१४।२)। अभ्यात्तोऽभितो व्याप्तवान्। कर्तरि क्तः।

—दिश् (दिश अतिसर्जने)। (अमित्रान्) अभिषेणाँ अभ्यादेदिशानान् पराचः इन्द्र प्र मृणा जही च (ऋ० ६।४४।१७)। अभ्यादेदिशानान् असकृल्लक्ष्यं कुर्वाणानित्यर्थः।

—द्रु (द्रु गतौ)। तमिन्द्रोऽभ्यादुद्राव हनिष्यन् (श० ब्रा० ११।६।३।१६)। अभिमुखीभूयाधावदित्यर्थः।

—धा (डुधाञ् धारणपोषणयोः)। प्राणाय त्वा इति समिधमभ्यादधाति (जै० ब्रा० १।१४)। आदधातीत्यर्थः। यदि ह वा अपि बह्विवाग्नावभ्यादधति (श० ब्रा० १४।८।१५।१२)। अभित आधानमभ्याधानम्। वैश्यकुलाद्वाम्बरीषाद्वाग्निमाहृत्याभ्यादध्यात् (गो० गृ० १।१।१५)। आधानमात्रमर्थः। अभ्यादधामि समिधमग्ने त्वयि (वा० सं० २०।२४)। यं प्रेतमग्नावभ्यादधति (श० ब्रा० १४।८।११)। उक्तोऽर्थः। अभ्यादध्युश्च काष्ठानि (मनु० ८।३७२)। अभित आदध्युरित्यर्थः। यदग्निरभ्याहितं दहति (श० ब्रा० ६।२।१।५)। अभ्याहितमुपरि निहितम्। यथार्द्रैधादग्नेरभ्याहितात्पृथग् धूमा विनिश्चरन्ति (बृहदा० उ० २।४।१०)। उक्तोऽर्थः। महतोऽभ्याहितस्यैकोऽङ्गारः खद्योतमात्रः परिशिष्टः (छां० उ० ६।७।३)। अभित आहितस्य, आहितसमित्कस्य समित्समिद्धस्येत्यर्थः।

—नी (णीञ् प्रापणे)। दधिमधु सर्पिरातपवर्ष्या आपोऽभ्यानीय (ऐ० ब्रा० ८।१७)। अभ्यानीय संनीय। दध्यादीनां सेचनं कृत्वेति तात्पर्यार्थः।

—पत् (पत्लृ गतौ)। अन्योन्यमभ्यापततां निघ्नतां चेतरेतरम् (भा० वि० ३२।६)। अभ्यापततामभिमुखमागच्छताम्।

—पद् (पद गतौ)। न संशयमभ्यापद्येत (आश्व० गृ० ३।७।२५)। प्रतिपद्येतेत्यर्थः। अथैनमेताभ्यां सर्वाणि स्थानान्यभ्यापाद्य स्तौति (नि० ७।२७)। अभ्यापादमभ्यापाद्याभ्यापाद्य, तत्तत्स्थानापन्न इति कृत्वा। एनम् पार्थिवमग्निम्।

—भू (सत्तायाम्)। तं यद्येतेषां त्रयाणामेकं चिदकाममभ्याभवेत् (ऐ० ब्रा० ३।४६)। अभ्याभवेद्, विन्देत्, प्राप्नुयात्। अकाममबुद्धिपूर्वम्। एकमप्यार्त्विज्यम्। यद्येनं क्षीरं केवलं पानेऽभ्याभवेत् (श० ब्रा० २।३।१।१६)। उक्तोऽर्थः। ज्ञातिसामन्तधनिकाः क्रमेण भूमिपरिग्रहान्केतुमभ्याभवेयुः (कौ० अ० ३।६।१)। अभ्याभवेयुः प्रभवेयुरर्हेयुर् अधिक्रियेरन्। प्रातिभाव्यवणिक्-शुल्कमद्यद्यूतदण्डाः पुत्रान्नाभ्याभवेयुः (गौ० ध० २।३।३८)। एते प्रातिभाव्यादयः (पितरि मृते) पुत्रेषु न संक्रामन्ति, पुत्रैर् (प्रतिनिधित्वेन) आस्थेया भवन्तीत्याह।

—यम् (यम उपरमे)। स प्रजापतिं पितरमभ्यायच्छत् (शां० ब्रा० ६।२)। प्रत्यागतवानिति टीका। न्यगृह्णादित्यन्ये। तमभ्यायत्याविध्यत् (ऐ० ब्रा० ३।३३)। अभ्यायत्य धनुराकर्णपूर्णमाकृष्येति सायणः। लक्ष्यं कृत्वेति तु संस्कृतशार्मण्यकोषः।

—यु (यु मिश्रणामिश्रणयोः)। पादाभ्यामेव तच्छ्रियं शिरोऽभ्यायन्ति... पक्षाभ्यामेव तच्छ्रियं शिरोऽभ्यायुवते (ऐ० ब्रा० ४।१३)। अभ्यायुवते= अभ्यायुवन्ति मिश्रयन्ति प्राप्नुवन्तीत्यर्थः। श्रियमभिलक्ष्य यतन्त इति तु संस्कृतशार्मण्यकोषः। तमिममर्थं धात्वर्थो न समर्थयते।

—रभ् (रभ राभस्ये)। तदाहुः। कस्मिन्नृतावभ्यारभ इति ग्रीष्मेऽभ्यारभेत (श० ब्रा० १३।४।१।२)। अभ्यारभेत उपक्रमेत, प्रक्रमेत। अवरेणैव तदह्ना परमहरभ्यारभन्ते (ऐ० ब्रा० ६।५)। अभिमुखीकृत्यारभन्त उपक्रमन्ते।

—वह् (वह प्रापणे)। अभ्यावहति कल्याणं विविधं वाक् सुभाषिता (भा० उ० ३४।७७)। अभ्यावहति आहरति। गन्धमभ्यावहन्पुण्यं श्रमापनयनोऽनिलः (रा० ४।१।१७)। अभ्यावहन्=इत उपानयन्। प्रातिभाव्यवणिक्शुल्कमद्यद्यूतदण्डाः पुत्रान्नाभ्यावहेयुः (गौ० ध० २।१।३८)। नाभ्यावहेयुर्न संक्रामेयुः। नावि निमग्नायां मुषितायां वा स्वयमुपरू

नोपनिधिमभ्यावहेत् (कौ० अ० ३।१२।२)। **उपनिधिं नानुयोज्यः स्यात्। नष्टोपनिधिसममर्थं न दाप्यः।** अन्तरे वा मृतस्य दायादोपि नाभ्यावहेत् (कौ० अ० ३।१२।२०)। तदेव सप्तमेन पदेनाभ्यारभ्य वसन्ति (ऐ० ब्रा० ५।१०)। **आभिमुख्येनोपक्रम्येति सायणः। गृहीत्वेति सु षड्गुरु०।**

—विश् (विश प्रवेशने)। मन्युमभ्याविशद् घोरं स्मृत्वा तत्तु धनञ्जयः (भा० कर्ण० ६१।१६)। **अभ्याविशत् आविशत्। नार्थोऽभिना। मन्युर्धनञ्जयमाविशदित्येवमपि शक्यं व्यवहर्तुम्। उभयथा हि प्रवाचां वाचः क्रमन्ते।**

—वृ (वृञ् वरणे)। अग्निमभ्यावृत्य शये (तै० सं० ६।२।५।५)। **अभित आवृत्येत्यर्थः।**

—वृत् (वृतु वर्तने)। अभ्यावर्तस्व पशुभिः सहैनाम् (अथर्व० ११।१।२२)। **अभिलक्ष्यावृत्तो भवेत्यर्थः।** प्रणीतीरभ्यावर्तस्व (अथर्व० ७।११०।१)। **आसेवस्व अभ्यस्य (लोटि रूपम्)।** त्रिरात्रमुपोष्याहोरात्रं वा सावित्रीमभ्यावर्तयेद् यावच्छक्नुयात् (शां गृ० ४।८।२०)। **अभ्यावर्तयेत् आवर्तयेत्, अभ्यस्येत्, आवृत्त्या शंसेत्।** वा० सं० ८।५८ इत्यत्र **अभ्यावृत्त इति होमशेषद्रव्यमाह। गुणिताहते अभ्यावर्तिते इत्यमरः।** क्रियाया अभ्यावृत्तिगणने कृत्वसुच् (पा० ५।४।१७)। **अभ्यावृत्तिरावृत्तिः।** अभ्यावर्तं प्रजायन्ते (प्रजाः) (श० ब्रा० १।५।३।१६)। **अभ्यावृत्य। अभ्यावर्तमिति णमुलन्तम्। असकृज्जायन्त इत्यर्थः।** ततोऽभ्यावृत्य वार्ष्णेयो दुर्योधनममर्षणम्। अब्रवीन्मधुरां वाचं सर्वधर्मार्थतत्त्ववित् (भा० उ० १२४।७-८)॥ **अभ्यावृत्य=अभिमुखं निवृत्य।** अग्नेऽभ्यावर्तिन्नभि मा निवर्तस्वायुषा वर्चसा प्रजया धनेन (वा० सं० १२।७)। **आभिमुख्येनावर्तितुं शीलमस्य, तत्सम्बुद्धौ।** कस्मादच्छावाको वह्निवदेतत् सूक्तमुभयत्र शंसति पराञ्चिषु चैवाहःस्वभ्यावर्तिषु च (ऐ० ब्रा० ६।१८)। **अभ्यावर्तिषु=आवृत्तिमत्सु पुनः पुनरावर्तमानेषु। पराञ्चिषु आवृत्तिरहितेषु।** आत्मीयास्ते ये पराञ्चः पुरस्तादभ्यावर्ती संमुखो यः परोऽसौ (शिशु० १८।१८)॥ **अभ्यावर्ती परावर्ती।**

—श्रु (श्रु श्रवणे)। नाभ्याश्रावयेत् (शां० ब्रा० १७।७)। **अनुवाक्यां नोदीरयेत्।**

—सद् (षद्लृ विशरणगत्यवसादनेषु)। नाभ्यासादयितव्यानि तेजांसि च तपांसि च (भा० वन० ३०७।४)। **अत्यन्तं प्रत्यासत्तिविषयाणि न कर्तव्यानीति नीलकण्ठः। अभिः प्रत्यर्थे। प्रत्यासत्तिविषयाणीत्यत्र नपुंसकत्वे बहुशो-**

पि व्याप्रुग्धो भारतभावदीपकारः । तत्पुरुषोऽयं समासो न बहुव्रीहिः । तत्पुरुषे च परवल्लिङ्गता शास्त्रेण शिष्टेति प्रत्यासत्तिविषयो वा प्रत्यासत्तेर्विषयो वेति व्यासेन वचो निर्वृष्टं स्यात् ।

—हन् (हन हिंसागत्योः) । नाभ्याहन्यान्न निर्हण्यान्न गोपायेन्नैव कम्पयेत् (याज्ञ० शि० १।२४) । अभ्याहननं वर्णव्यत्ययेनोच्चारणम् । निर्हणनं स्थानान्यतमराहित्येनोच्चारणम् । आङ्पूर्वो हन्तिः पठने वर्तते यथा—इदं ब्राह्मणे आहतमित्यत्र ।...मालया यदा । अभ्याहता तदाऽपश्यम् (कथा० ६६।२४) । अभ्याहता ताडिता । अस्य सोम्य महतो वृक्षस्य यो मूलेऽभ्याहन्याज्जीवन्स्रवेत् (छां० उ० ६।११।१) । ताडयेत्, प्रहरेत्, क्षिणुयात् । अभ्याहता हयारोहा ऋष्टिभिर्भरतर्षभ । अत्यजन्नुत्तमाङ्गानि फलानीव महाद्रुमा (भा० भीष्म० १०५।२१-२२) ॥ अभ्याहता अभित आहताः प्रहृताः । हारिण्युपमा वश्यवाचः कवेः । अभ्याहतं कीर्तिविपर्ययेण (हृदयम्) (रघु० १४।३३) । उक्तोऽर्थः । रक्षोभिरभ्याहतकर्मवृत्तिः (भट्टि० १।१७) । अभ्याहता प्रतिहता रुद्धा । अनभ्याहतचित्तः स्यादनभ्याहतवाग्भवेत् (भा० शां० २४५।१६) । अभ्याहतमुपहतं दोषाक्रान्तम् । अभ्याघातेषु मध्यस्थाञ्छिष्याच्चोरानिव द्रुतम् (मनु० ६।२७२) । अभ्याघात आक्रम आस्कन्दः । पा० ३।२।१४२ सूत्रेण अभ्याहनस्ताच्छील्ये घिनुण् विहितः । तेन अभ्याघातीति प्रथमायां रूपम् । अभ्याघाती शत्रुर्भवति ।

—हृ (हृञ् हरणे) । गृहीत्वा फलमूलं च रामस्याभ्याहरन् बहु (रा०) । अभ्याहरन् उपाहरन्, उपानयन् । तौ मुहूर्तं समाश्वस्य पुनरेव परन्तपौ । अभ्याहारयतामन्योन्यं सम्प्रगृह्य गदे शुभे (भा० शल्य० ५७।७) ॥ अभ्याहारयतां क्रुद्धौ प्रगृह्य महती गदे (भा० शल्य० ५८।३१) । प्राहरेताम् इत्यर्थो भाति । समं हि धर्मं चरतो नृपस्य द्रव्याणि चाभ्याहरतो यथावत् (भा० शां० २८।५७) । अभ्याहरतः सर्वत आददानस्य । पशुरभ्याहृतो राजन्प्रनष्टस्तव दुर्नयात् (रा० १।६१।७) । अभ्याहृत इदानीमाहृतः । अभिशब्दः (काल-) सन्निकर्षमाह । अभ्याहृतोऽपहृत इति कश्चिदभिमन्यते । सोऽयमसदभिमानः । अभ्याङावुपसर्गौ नालमपशब्दस्यार्थमभिधातुम् । अस्मिन्नु हैकेऽवान्तरदेशे कर्षूं खात्वा ततोऽभ्याहारं कुर्वन्ति (श० ब्रा० १३।८।३।१०) । अभ्याहार इत आहरणम् ।

## अभ्युद् (अभि + उद्)

—इ (इण् गतौ)। उदिह्युदिहि सूर्य वर्चसा मामभ्युदिहि (अथर्व० १७।१।६)। माम् अभ्युदिहि ममाभिमुख्येनोदिहि उदयस्व। यदद्य कच्च वृत्रहन्नुदगा अभि सूर्य (ऋ० ८।९३।४)। अभ्युदगा अभिमुखमुदयमगाः। यत् कच्च यत्किञ्चित्। पथ्यां स्वस्तिमभ्युद्यन्ति (ऐ० ब्रा० २।११)। अभिलक्ष्य समाप्ति गमयन्तीत्यर्थः। अभ्युदिण उपर्युदयेऽर्थे प्रतीता काश्चन दिश उदाह्रियन्ते—नैनं ग्रामेऽभिनिम्लोचेत् सूर्यो नाभ्युदियात् क्वचित् (मनु० २।२१९)। तं चेदभ्युदियात्सूर्यः शयानं कामचारतः (मनु० २।२२०)। तं चेज्जीवन्तमादित्यः प्रातरभ्युदयिष्यति (भा० वि० २१।४७)। आत्मनेपदव्यत्यय इति चेदभ्युत्पूर्वस्यायतेरपि रूपं शक्यं प्रतिपत्तुम्। न स्वपन्तमभ्युदियात् (श० ब्रा० ३।२।२।२७)। इति। लोकवीरान्को जीवितार्थी समरेऽभ्युदीयात् (भा० वन० ५१।४४)। अभिमुखं यायात्, साम्मुख्यमादधीत, समासादयेत्। राहोर्विमुक्तं विमलं समग्रं चन्द्रं यथैवाभ्युदितं तथैव (भा० कर्ण० ८९।७२)। अभ्युदितमभित उदितं नवोदितम्। सूर्येण ह्यभिनिम्लुक्तः शयानोभ्युदितश्च यः (मनु० २।२२१)। शयानोऽभ्युदितः=शयानस्य यस्योपरि सूर्य उदितः सः। एतांस्त्वभ्युदितान्विद्यात् (मनु० ४।१०४)। अभ्युदितान् युगपदुत्पन्नान् (विद्युदादीन् पूर्वश्लोकोक्तान्)। सुप्ते यस्मिन्नस्तमेति सुप्ते यस्मिन्नुदेति च। अंशुमानमभिनिम्लुक्ताभ्युदितौ च यथाक्रमम्॥ इत्यमरः। निगदव्याख्यातम्। सूर्येणाभ्युदितो यश्च ब्रह्मचारी भवत्युत। (भा० शां० ३४।३)। उक्तोऽर्थः। अन्ये वा पुरुषव्याघ्र राजानोऽभ्युदितोदिताः (भा० वन० २५४।३७)। अभ्युदितेभ्य उदिताः श्रेष्ठतमा इत्यर्थः। सम्पन्नम् इत्यभ्युदये वाच्यम् (मनु० ३।२५४)। अभ्युदयः समृद्धिः।

—ऊह् (ऊह वितर्के)। पुरस्तात्प्रत्यञ्चमभ्युदूहति (तै० ब्रा० ३।८।४।३)। अभ्युदूहति तीरमभिलक्ष्योर्ध्वं प्रेरयतीत्यर्थः।

—क्रम् (क्रमु पादविक्षेपे)। अथैनामपराजितायां दिशि सप्त पदान्यभ्युत्क्रामयति (आश्व० गृ० १।७)। अभ्युत्क्रामयति उच्चैर्बहिर्वा न्यासयति।

—क्रुश् (क्रुश आह्वाने रोदने च)। न वा अनभ्युत्क्रुष्ट इन्द्रो वीर्यं कर्तुमर्हत्यभ्येनमुत्क्रोशामेति (ऐ० ब्रा० ८।१२)। अभ्युत्क्रोशाम उच्चैः प्रशस्त्योद्धर्षयामेत्यर्थः।

—गम् (गम्लृ गतौ)। महच्चाभ्युद्गतं यशः (रा० ४।२११७)। अभ्युद्गतं प्रवृद्धं प्रसृप्तम्। अभ्युद्गतास्त्वां वयमद्य सर्वे (भा० आदि० ८८।९)। अभ्युगताः प्रत्युद्गतवन्तः। उपचार इति प्रत्येष्टुमभिमुखमग्रतः प्रवृत्ताः। तेनाभ्युद्गमानन्दस्वागतैरभ्यनन्द्यत (कथा० २४।१२२)। कृतो दूरादेव स्मितमधुरमभ्युद्गमविधिः (अमरु० १४)। अभ्युद्गमोऽभ्युत्थानम्।

—चर् (चर गतिभक्षणयोः)। भोजेष्वस्माँ अभ्युच्चरा सदा (ऋ० ८।२५।२१)। सूर्यः प्रार्थ्यतेऽस्मानभ्युच्चर अभ्युदिहीति।

—चि (चिञ् चयने)। उक्तार्थदार्ढ्यायानुमानान्तरमभ्युच्चिनोति। अभ्युच्चिनोति आवपति, अधिकं योजयति।

—जीव् (जीव प्राणधारणे)। येन येन विशेषेण कर्मणा येन केन चित्। अभ्युज्जीवेत्साद्यमानः (भा० शां० १४१।६३)। उत्कृष्टम्, ऊर्जस्वलं जीवेदित्यर्थः। स्वबाहुबलमाश्रित्य योऽभ्युज्जीवति मानवः (भा० उ० १३३।४५)। उक्तोऽर्थः।

—नम् (णम प्रह्वत्वे शब्दे च)। अभ्युन्नता पुरस्तादवगाढा जघनगौरवात् पश्चात् (पदपङ्क्तिः) (शा० ३।५)। अभ्युन्नता उन्नता उद्गता उद्रिक्ता।

—नी (णीञ् प्रापणे)। अभ्यभि सोमानुन्नयन्ति (पञ्च० ब्रा० १८।३।१४)। अभ्युन्नयन्ति उद्धरन्ति।

—यम् (यम उपरमे)। प्रसादार्थं मया तेऽयं शिरस्यभ्युद्यतोऽञ्जलिः (भा० आदि० १२२।३०)। अभिमुखमुत्थापित उन्नीतः करसम्पुट इत्यर्थः। आहृताभ्युद्यतां भिक्षां पुरस्तादप्रचोदिताम् (मनु० ४।२४८)। अभ्युद्यताम् अभिमुखं स्थापिताम्।

—श्रि (श्रिञ् सेवायाम्)। अभ्युच्छ्रयं च रोम्णां वै (भा० स्त्री० ५।६)। अभ्युच्छ्रय उद्गम उदञ्चनम्।

—सिच् (षिच क्षरणे)। अद्भिरभ्युत्षिञ्चंस्त्रिः प्राश्नाति (शां० गृ० ३।८।३)। अभ्युत्सिञ्चन् उपरि जलमासिञ्चन्नित्यर्थः। गृहपतय एव व्रतमभ्युत्सिच्य प्रयच्छेयुः (श० ब्रा० ३।४।२।१५)। तानूनप्त्रमाज्यं पयसा संनीय वद्युरित्याह।

—स्था (ष्ठा गतिनिवृत्तौ)। यदा यदा हि धर्मस्य ग्लानिर्भवति भारत। अभ्युत्थानमधर्मस्य...(गीता ४।७)॥ अभ्युत्थानं वृद्धिरुपचयः। नाभ्यु-

त्तिष्ठन्ति गुरून् (काद०)। ज्यायस आचार्यादीन्वाऽभ्यागच्छतो विलोक्य स्वासनान्नोत्तिष्ठन्ति। ये गुरून्नाभ्युत्तिष्ठन्ति ते नाभ्युदयन्त इति वयम्। स विशः सबन्धूनन्नमन्नाद्यमभ्युदतिष्ठत् (अथर्व० १५।८।२)। अभ्युत्थानं च युद्धार्थे कृष्णपक्षचतुर्दशीम्। कृत्वा निर्याह्यमावास्यां विजयाय बलैर्वृतः (रा० ६। ७२।६५-६६)। अभ्युत्थानं शिबिरस्य स्कन्धावारस्योच्चलनम्।

—हा (ओहाङ् गतौ)। प्राणमभ्युज्जिहते (छां० उ० १।११।५)। प्राणात (एव) उत्पद्यन्त इत्यर्थः।

—हृ (हृञ् हरणे)। यस्याग्नावग्निमभ्युद्धरेयुः (तै० सं० २।२।४।१५)। उपरि प्रणयनमुद्धरणम्। तस्योपरि पुनः प्रणयनमभ्युद्धरणमिति भट्टभास्करः। समर्थान्नावमन्यन्ते दीनानभ्युद्धरन्ति च (भा० द्रोण० १४४।२७)। अभ्युद्धरन्ति रक्षन्ति परीप्सन्ति, परित्रायन्ते, गोपायन्ति। गाढश्चाभ्युद्धार्यश्च पेटकः (कौ० अ० २।१४।२६)। अभ्युद्धार्य उद्वहनीयः, उद्वोढुं शक्यः।

## अभ्युदाङ् (अभि+उद्+आ)

—इ (इण् गतौ)। स्वयमेनमभ्युदेत्य ब्रूयात् (अथर्व० १५।१२।२)। अभ्युदेत्य=प्रत्युद्गम्य।

—नी (णीञ् प्रापणे)। प्रावृतां यज्ञोपवीतिनीमभ्युदानयन् (गो० गृ० २। १।१९)। अभ्युदानयन् अभिमुखं प्रापयन्।

—हृ (हृञ् हरणे)। एकैकमभ्युदाहरत्युदकुम्भमाज्येनाग्रतः परिषेचनाय (वाराह श्रौ० १।७।४।२४)। अभ्युदाहरति उद्धरति उत्थापयति। अर्थस्य तद्विरुद्धेन निदर्शनमभ्युदाहरणम्। निगदव्याख्यातम्।

## अभ्युप (अभि+उप)

—इ (इण् गतौ)। मीनो नु हन्त कतमां गतिमभ्युपैतु (भामिनी० १।१६)। अधिगच्छतु प्राप्नोतु। किं बुद्धिमत्प्रयुक्तं नाभ्युपैति शोभाम् (दशकु० पृ० १६५)। सहसाऽभ्युपैति बलवान् कालः कृतान्तः (भर्तृ० ३।८३)। निद्रा शनैः केशवमभ्युपैति द्रुतं नदी सागरमभ्युपैति (रा० ४।२८।२५)। इत्युदाहृतिषु सर्वत्राभ्युपेणः प्राप्तिरर्थः। सुखं प्रयाणे रिपुमभ्युपेयात् (का० नी० सा० १६। ४१)। अन्तिकं यायात् समासीदेदित्यर्थः। सत्यं न तद्यच्छलमभ्युपैति (हितोप० ३।६१)। छलेन युज्यत इत्यर्थः। त्रिरह्नोऽभ्युपयन्नपः (मनु० ११।२५६)। सलिलमवगाहमानः, आप्लवमानः, स्नान्। सप्तमाद् दशमाद्वापि ज्ञातयोऽभ्युप-

यन्त्यपः (याज्ञ० ३।३)। **प्रविशन्तीत्यर्थः**। ज्ञातयश्च शरीरमग्नौ संयोज्यानन्वेक्षमाणा अपोऽभ्युपयन्ति इति **शातातपवचनं मिताक्षरायाम्**। सशिरस्कोऽभ्युपेयादपः (व० ध० शा० ४।३८)। **उक्तोऽर्थः**। व्यतीतकालस्त्वहमभ्युपेतः (रघु० ५।१४)। **अभ्युपेत उपपन्न उपेतः**। मन्दायन्ते न खलु सुहृदामभ्युपेतार्थकृत्याः (मेघ० ३८)। **अभ्युपेताऽभ्युपगता स्वीकृता प्रतिपन्ना**। अस्मै दास्यमभ्युपेतं मया (दशकु०)। **अभ्युपेतं प्रतिश्रुतम्**। विरोध्य मोहात्पुनरभ्युपेयुषाम् (कि० १८।४२)। **अभ्युपेयुषां विधेयतां वशंवदतां गतानाम्**। अनयुभ्पाय एष शब्दानां प्रतिपत्तौ प्रतिपदपाठः (भा० प्र० आ०)। **अभ्युपाय उपायः**। यैरभ्युपायैरेनांसि मानवो व्यपकर्षति (मनु० ११।२१०)। **उक्तोऽर्थः**।

—**गम्** (**गम्लृ गतौ**)। न तु धनदायासावभ्युपगच्छति (दशकु०)। **देयमभ्युपैति स्वीकरोति**। वयमभ्युपगच्छामः कृष्णेन त्वां प्रधर्षितम् (हरि० १। ३६।५)। **अभ्युपपद्यामहे, साहाय्यार्थमुपेमः**। एवं मन्त्रविदो विप्रास्तपस्तप्त्वा सुदुष्करम्। गुरूनभ्युपगच्छन्ति यशसोऽर्थाय भाविनि (भा० आदि० १२४।१२)॥ अभ्युपगच्छन्त्याराधयन्ति। द्विजगुरुदरिद्रमित्रप्रव्रजितोपनतसाध्वनाथाभ्युपगतानां चात्मबान्धवानामिव स्वभेषजैः प्रतिकर्तव्यम् (सुश्रुत० सूत्र० २।५)। **अभ्युपगता दूरादायाताः**। आषाढीमभ्युपगतो भरतः कोसलाधिपः (रा० ४। २८।५५)। **अभ्युपगतः सम्प्रति प्राप्तः**। परलोकमभ्युपगते (भर्तरि) विविशुर्ज्वलनं त्विषः (शिशु० ६।१३)। **अभ्युपगते प्राप्ते**। अभ्युपगतं तावदस्माभिरेवम् (शा० ५)। अभ्युपगतं स्वीकृतम्। कः पुनरयं महात्मा यत्र भवन्तोप्येवमभ्युपगताः। **प्रियः सुहृदयमित्येवमङ्गीकारं प्राप्ताः**। **कर्तरि क्तः**। मामभ्युपगमय्य (दशकु०)। **मामभ्युपगच्छन्तं प्रचोद्येत्यर्थः**। न हि मेऽन्यद् भवेच्छ्रेयो वनाभ्युपगमादृते (भा० शल्य० २।४६)। **अभ्युपगम उपगमः प्राप्तिर्गमनम्**। करिष्याम्येवं नो पुनरिति भवेदभ्युपगमः (रत्ना० २।१८)। **निगदव्याख्यातम्**। क्रियाभ्युपगमात्त्वेतद् बीजार्थं यत्प्रदीयते (मनु० ६।५३)। **अभ्युपगमः संवित्, प्रतिज्ञानम्**। **अत्रोत्पन्नमपत्यमावयोरुभयोरपि भवत्वित्येवंरूपम्**। युष्माकमभ्युपगमः प्रमाणं पुण्यपापयोः (महावीर० १।३८)। **अभ्युपगमोऽभिमतं मतम्, परिगृहीतं दर्शनम्**। धातूपसर्गयोः कार्यमन्तरङ्गमित्यभ्युपगमात्। **अभ्युपगमः स्वीकारः**। **अभ्युपगमसिद्धान्तः सर्वतन्त्रराद्धान्तः**।

—**धा** (**डुधाञ् धारणपोषणयोः**)। तम् (अङ्गारम्) मध्यमेन कपालेना-

भ्युपदधाति (श० ब्रा० १।२।१।६)। **अङ्गारस्योपरि मध्यमं कपालं निदधातीत्यर्थः।** नान्ययेष्टकयोपरिष्टादभ्युपदध्यात् (श० ब्रा० ८।७।१।१२)। **उक्तोऽर्थः।**

—**पद्** (**पद गतौ**)। अथ चेदीदृशीं वृत्तिं क्लीबामभ्युपपद्यसे (भा० उ० १३४।२२)। **अभ्युपपद्यसे स्वीकरोषि, श्रयसि।** तं कृच्छ्रगतमद्य त्वं कस्मान्नाभ्युपपद्यसे (भा० सौ० १२।३)। **अभ्युपपद्यसेऽनुगृह्णासि, कृपायसे।** स सुहृद् यो विपन्नार्थमभ्युपपद्यते (रा० ६।६३।२७)। **त्रायते उद्धरति।** तान्भृगूणां यदा दारान् कश्चिन्नाभ्युपपद्यत (भा० आदि० १८०।८)। तपः कृशामभ्युपपत्स्यसे सखीं वृषेव सीतां तदवग्रहक्षताम् (कु० ५।६१)। **अभ्युपपत्स्यसेऽनुग्रहीष्यसि, उद्धरिष्यसि, त्रास्यसे।** वयमभ्युपपत्स्यामो यद्यच्युतस्तवोपरि वैरानुबन्धं करिष्यति (वि० पु० ४।१३।६९)। **साहाय्यमाचरिष्याम इत्यर्थः।** शार्दूलावस्कन्दगोचरामिमामभिजातकन्यकामभ्युपपन्नवानस्मि (मालती० ४)। **उपगम्य त्राणवानस्मि।** अभ्युपपन्नवत्सलः खलु तत्र भवान् आर्यचारुदत्तः श्रूयते (मृच्छ० ७)। **अभ्युपपन्नः प्रपन्नः शरणागतः।** ब्राह्मणाभ्युपपत्तौ च शपथे नास्ति पातकम् (मनु० ८।११२)। **अभ्युपपत्तिः परित्राणं परीप्सा, पर्याप्तिः।** स्त्रीविप्राभ्युपपत्तौ च घ्नन्धर्मेण न दुष्यति (मनु० ८।३४९)। **उक्तोऽर्थः। अभ्युपपत्तिरनुग्रह** इत्यमरः। मात्रोरभ्युपपत्तिश्च धर्मोपनिषदं प्रति (भा० आदि० १।११४)। **अभ्युपपत्ती रेतः सेकार्थं गमनम्। दुर्वाससा दत्ता विद्येहोपनिषच्छब्देनाभिप्रेता।** त्वया तदवस्थया पुत्राभ्युपपादनार्थं याचितः, तेन स लब्धो वर्धितश्च (दशकु० पृ० १४०)। **अभ्युपपादनं संवर्धनम्।** रतिमभ्युपपत्तुमातुरां मधुरात्मानमदर्शयत्पुरः (कु० ४।२५)। **अभ्युपपत्तुं सान्त्वयितुम्।**

—**या** (**या प्रापणे, प्रापणमिह गतिः**)। तौ राजपुत्रौ सहसाऽभ्युपायाच्छायेव राहोर्दिवि चन्द्रसूर्यौ (रा० २।२९।३३)। **अभ्युपायात् उपाद्रवत्।**

—**विश्** (**विश प्रवेशने**)। तत्र जाम्बूनदमयं पर्यङ्कं...। विविधास्तरणास्तीर्णमभ्युपाविशदच्युतः (भा० उ० ९१।९)। **अभ्युपाविशत्=अध्यास्त।**

—**स्था** (**ष्ठा गतिनिवृत्तौ**)। निवासमकरोद् धीमान् सुग्रीवेणाभ्युपस्थितः (भा० वन० २८०।४०)। **अभ्युपस्थित उपस्थितः कृतोपस्थानः सेवितः।**

## अभ्युपाङ् (अभि+उप+आ)

—इ (इण् गतौ)। ते यथापथं सायं गृहानभ्युपायन्ति (जै० ब्रा० १। १०६)। प्राप्नुवन्ति आसादयन्ति।

—दा (डुदाञ् दाने)। फलानि पातयामास सम्यक् परिणतान्युत। अभ्युपादाय विस्रब्धो भक्षयामास...(भा० शां० २३।२१-२२)। तान्युपादायेति पाठान्तरम्। अभ्युपादाय=अवचित्य, अवचयं कृत्वा।

—वृत् (वृतु वर्तने)। तद्वेक्षाञ्चक्रे नैव सर्वेणैवात्मना मनुष्यानभ्युपावृतम् (श० ब्रा० २।२।१।१३)। अभ्युपावृतम् उपासृपम्।

## अभ्युपाव (अभि+उप+अव)

—हृ (हृञ् हरणे)। अग्रेण मैत्रावरुणस्य धिष्ण्यम्। मैत्रावरुणी पयस्या निहिता तामस्य बाहू अभ्युपावहरति (श० ब्रा० ५।४।३।२७)। अभ्युपावहरति समीपमाकर्षति।

## अभिनि (अभि+नि)

—इ (इण् गतौ)। पतिरिव जायामभि नो न्येतु (ऋ० १०।१४९।४)। अभिन्येतु कार्त्स्न्येन संविशत्वित्यर्थः।

—उब्ज् (उब्ज आर्जवे)। तेन शत्रूनभि सर्वान्न्युब्ज (अथर्व० ८।८।६)। अभिन्युब्ज वशे कुरु, आवर्जय, रन्धय (वेदे रधिर्वशगमने वर्तते, तस्येदं णिचि लोटि)।

—क्रम् (क्रमु पादविक्षेपे)। पणीन् न्यक्रमीरभि विश्वान्राजन्नराधसः (ऋ० १०।६०।६)। अभिन्यक्रमीः=अधस्पदमकार्षीः।

—धा (डुधाञ् धारणपोषणयोः)। एभिश्च लोकैरभिनिधास्यामः (श० ब्रा०)। अवपीडयिष्यामः। लोकैः करणभूतैः। इति यूपाग्रं स्वरुणाऽभिनिदधाति (वाराह श्रौ० ३।२।६।२३)। अभिनिदधाति=अभिदधाति संयुनक्ति=संयौति। अथासिनाऽभिनिदधाति (पशुम्)(श० ब्रा० ३।८।२।१२)। उक्तोऽर्थः। इदमहं तं त्वयाऽभिनिदधामि यो नो निष्ट्यो योऽनिष्ट्योऽभिदासति (आप० श्रौ० ५।३।१२।२)। यथा शीर्ष्णे गरमभिनिदध्यात् (श० ब्रा० ११।५।८।६)। उपरि निदध्यादित्यर्थः। गुरुं भारमभिनिदधते (ऐ० ब्रा० ४।१३)। स्वस्योपरि निदधते आदधते वहनाय। क्षुरेणाभिनिदधाति (श० ब्रा० ३।१।२।७)।

ईषत्स्पृशतीत्यर्थः । दक्षिणं कर्णमभिनिधाय वाग्वागिति त्रिः (श० ब्रा० १।३। ४।१२) । (शिशोः) उपकर्णं मुखमाधायेत्याह । एते च द्विपदा यथा गृहीतमभिनिधीयन्ते (ऋ० प्रा० २।१६) । सन्निधाप्योच्चार्यन्ते । अभिनिहिताख्येन सन्धिना पठ्यन्त इत्यर्थः । अन्तःस्थाः स्वे स्वे च परेऽपि रक्ताः (ऋ० प्रा० ६।१८) । अन्तःस्था अभिनिधीयन्ते स्वे स्वे च प्रत्यय इत्युवटः । अनभिनिहितो वै पुरुषोऽन्नेन च प्राणेन च (श० ब्रा० ७।४।२।६) । अनभिनिहितोऽनवपीडितः । अनभिनिहित एव सव्येन पाणिना भवति । लेशेनानभिनिहिता वक्तव्याः (छां० उ० २।२२।५) । अनभिनिहिता असङ्कीर्णाः । अद्रुतोच्चारिता इति गोपालानन्दस्वामी । अथवा मध्यममुपधाय सव्यस्य पाणेरङ्गुल्या अभिनिधाय (आप० श्रौ० १।७।२३।३) । अभिनिधाय =अभिपीड्य ।

—ध्यै (ध्यै चिन्तायाम्) । तं शब्दमभिनिध्याय (रा० १।२८।७) । तत्र शब्दे मनः प्रणिधाय । आलक्ष्येति कतकः । कतकटीकायां १।२६।२८ इत्यत्र पाठः ।

—नृत् (नृती गात्रविक्षेपे) । तद्यथाऽभ्यागारमभिनिनर्तं पुनः पुनः पाप्मानं निर्हण्यादेवमेवैतैरसुरान् निर्घ्नन्ति (शां० ब्रा० १७।८) ।

—विश् (विश प्रवेशने) । भयं तावत्सेव्यादभिनिविशते सेवकजनम् (मुद्रा० ५।१२) । व्याप्नोतीत्यर्थः । सैव धन्या गणिकादारिका यामेवं भवन्मनोऽभिनिविशते (दशकु०) । यस्याम् आसक्तिमद् भवति, प्रसजति, संलग्नं भवति । ते चेदभिनिवेक्ष्यन्ते नाभ्युपैष्यन्ति मे वचः (भा० उ० ७७।१७) । अभिनिवेश आग्रहः । अभिनिवेक्ष्यन्ते आग्रहं हठं करिष्यन्ति । अभिन्यविक्षथास्त्वं मे यथैवाव्याहता मनः (भट्टि० ८।८०) । अभिन्यविक्षथाः प्राविक्षः । स्वहस्तदत्ते मुनिमासने मुनिश्चिरन्तनस्तावदभिन्यवीविशत् (शिशु० १।१५) । स्वाभिमुख्येनोपवेशितवानित्यर्थः । स्वभावत एतेषां शब्दानामेतेष्वर्थेष्वभिनिविष्टानां निमित्तत्वेनान्वाख्यानं क्रियते (पा० २।१।१ सूत्रे भाष्ये) । अभिनिविष्टानां निश्चितप्रयोगाणाम् । उरस्तेऽभिनिविष्टं वै यावत्स्कन्धात्समुन्नतम् (रा० २।६।४१) । अभिनिविष्टं व्याप्तम् (स्थगुना) । गर्भमाधत्त राज्ञी गुरुभिरभिनिविष्टं लोकपालानुभावैः (रघु० २।७५) । उक्तोऽर्थः । अथवाऽभिनिविष्टबुद्धिषु व्रजति व्यर्थकतां सुभाषितम् (शिशु० १६।४३) । माधवापकारं प्रत्यभिनिविष्टा भवामि (माल० ६) । साग्रहं प्रवृत्ता भवामीत्यर्थः । निन्दाक्षेपापमानादेरमर्षोऽभिनिविष्टता (सा० द० ) । निगदव्याख्यातम् । रूढिशब्दा एते । नात्रावयवार्थेऽभिनिवेष्टव्यम् (वृत्तौ) । अवश्यमत्रावयवार्थं

उन्नेय इति दृढा चित्तवृत्तिर्न कार्येत्याह । जनकात्मजायां नितान्तरूक्षाभिनिवेशमीशम् (रघु० १४।४३) । अभिनिवेशः संकल्पः निश्चयः । अनुरूपाभिनिवेशतोषिणाम् (कु० ५।७) । अभिनिवेशो निश्चयदाढर्य म् । कस्मिस्ते भावाभिनिवेशः (विक्रम० ३) । भावाभिनिवेशो हृदयासङ्गः । अविद्यास्मितारागद्वेषाभिनिवेशाः क्लेशाः (यो० सू० २।३) । अभिनिवेशोऽविद्याभेदो मृत्युभयस्योत्पादकः । धर्मिणां विशेषेण स्वर्गं लोकं धर्मविदाप्नोति ज्ञानाभिनिवेशाभ्याम् (गौ० ध० ३।१०।५०) । अभिनिवेशस्तात्पर्येणानुष्ठानम् इति हरदत्तः । तत्र यथावदनुपूर्वंक्रिया प्रधानस्यार्थस्य पूर्वमभिनिवेश इत्यर्थक्रमः (कौ० अ० २।१०।७) । अभिनिवेश उपन्यासः । बालिश्यादभियोक्तुर्वा दुःश्रुतं दुर्लिखितं प्रेताभिनिवेशं वा समीक्ष्य साक्षिप्रत्ययमेव स्यात् (कौ० अ० ३।११।४३) । उक्तोऽर्थः । एकार्थाभिनिवेशित्वमरिलक्षणमुच्यते (का० नी० सा० ८।१४) । अभिनिवेश आग्रहः, तद्वान्, तत्ता । वितथाभिनिवेशी च जायतेऽन्त्यासु योनिषु (याज्ञ० ३।१३४) । असत्यभूते वस्तुनि पुनः पुनः संकल्पोऽभिनिवेशस्तद्वान् । कल्याणाभिनिवेशिनः (काद०) । कल्याणः शोभनोऽभिनिवेशोऽसकृच्छीलितः सङ्कल्पो यस्य तस्य ।

—वृत् (वृतु वर्तने) । देवानां रातिरभि नो निवर्तताम् (ऋ० १।८६।२)। अस्मदाभिमुख्येन प्रत्यायातु । तं कृत्येऽभिनिवर्तस्व (अथर्व० १०।१।७) । हे कृत्ये तमभिलक्ष्येतो याहीत्याह ।

—श्रि (श्रिञ् सेवायाम्) । ततोऽपो वायुमाकाशमित्यभिनिश्रयेत् (आप० ध० २।२२।४) । अभिनिश्रयेत् सेवेत ।

—ष्ठिव् (ष्ठिवु निरसने) । नातपति निष्ठीवेन्नेदेतमभिनिष्ठीवानीति (श० ब्रा० १४।१।१।३३) । एतं सूर्यमभिनिष्ठीवानि सूर्यस्योपरि निष्ठीवानीत्यर्थः ।

—सद् (षद्लृ विशरणगत्यवसादनेषु) । यद्येतां वयोऽभिनिषीदेत् (सत्या० श्रौ० २४।७।१४) । अभिनिषीदेत्=उपरि तिष्ठेत् ।

—स्यन्द् (स्यन्दू स्रवणे) । यस्याः पयोभिनिष्यन्दात्क्षीरोदो नाम सागरः (रा० ७।२३।२१) । पयोऽभिनिष्यन्दोऽम्बुसरणम् ।

### अभि निस् (अभि निर्)

—कृ (डुकृञ् करणे) । कृत्याकृतो वलगिनोऽभिनिष्कारिणः प्रजाम् । मृणीहि (अथर्व० १०।३।३१) ।

—क्रम् (क्रमु पादविक्षेपे) । अभिनिष्क्रामति द्वारम् (पा० ४।३।८६)। स्रु घ्नमभिनिष्क्रामति कान्यकुब्जद्वारं स्रौघ्नम् इति वृत्तिः। स्रु घ्नमभिलक्ष्य निर्यातीत्यर्थः। प्रविश्य चाभिनिष्क्रान्तं सुग्रीवं वानरर्षभाः। अभ्यषिञ्चन्महामात्राः.. (रा० ४।२५।२१)॥ अभिनिष्क्रान्तमभिलक्ष्य निर्यातम्। अगारादभिनिष्क्रान्तः (मनु० ६।४१)। परिव्राजको बुभूषन् गृहान् निष्क्रान्तः। अभिनिष्क्रमणं प्रव्रजितुकामस्य गेहत्यागः। वर्धमानपुरद्वारादभिनिष्क्रम्य (भा० वन० १।१०)। अभिलक्ष्य बहिर्गत्वेत्यर्थः।

—क्षिप् (क्षिप प्रेरणे)। कन्दुकोऽभिनिः क्षिप्त इव प्रतिफलन्मुहुः। आपतत्यात्मनि प्रायो दोषोऽन्यस्य चिकीर्षितः (कथा० २०।२१३)॥ निरुदोऽर्थे। अभिरपार्थः।

—पत् (पत्लृ गतौ)। गवाक्षजालैरभिनिष्पतन्त्यः (रत्नभासः) (भट्टि० १।८)। अभितो निर्गच्छन्त्यः, निश्चरन्त्यः।

—पद् (पद गतौ)। परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते (बृह० उ० ८।३।४)। आविर्भवतीत्यर्थः। यथा सुवर्णः प्रवृत्तस्तप्यमानः सुवर्णतामभिनिष्पद्यते (जैं० ब्रा० १।२८)। अभिनिष्पद्यते प्राप्नोति। नक्तमहरेवाभिनिष्पद्यते (छां० उ० ८।४।२)। अभिनिष्पद्यतेऽभिनिर्वर्तते। इममेवाकाशमभिनिष्पद्यन्ते (श० ब्रा० १४।६।१।१६)। प्राप्नुवन्ति, अभिसंविशन्तीत्यर्थः। प्रज्ञा चतुरो धर्मान् ब्रह्मणमभिनिष्पादयति (श० ब्रा० ११।५।७।१)। अभिनिष्पादयति प्रापयति। एतां दिशमभिनिष्पद्य (श० ब्रा० १३।८।१।६)। गत्वेत्यर्थः।

—मुच् (मुचॢ मोक्षणे)। तथा सूर्याभिनिर्मुक्तः (भा० शां० ३४।३)। अभिनिर्मुक्तो ऽभिनिम्लुक्त इति वा पाठः साधीयान्। मुचेरस्तमयेऽर्थे प्रयोगादर्शनात्। चिरन्तनोऽयं पाठभ्रंशो नेदानीन्तनः।

—वृत् (वृतु वर्तने)। घृतमधुनी समं संमिश्रिते विषमभिनिर्वर्तते। अभिनिर्वर्तते निष्पद्यते। गुर्वर्थमभिनिर्वर्त्य पुनरेष्यामि ते वशम् (भा० आश्व० ५७।६)। अभिनिर्वर्त्य = निष्पाद्य सम्पाद्य संसाध्य)। यस्य ह्यर्थाभिनिर्वृत्तौ भवन्त्याप्यायिताः परे (भा० उ० १३४।१०)। अभिनिर्वृत्तिः सिद्धिः।

—स्तन् (स्तनगदी देवशब्दे, देवशब्दो मेघगर्जितम्)। अभिनिसः स्तनः शब्दसंज्ञायाम् (पा० ८।३।८६)। अभिनिस्तानो विसर्जनीयः। अभिनिष्टानो विसर्जनीय इति वृत्तावुदाहरणे। अभिनिस्तनति मृदङ्ग इति च प्रत्युदाहरणं

स्थितम् । सूत्रे वृत्तौ च वा खर्परे शरीति विसर्जनीयस्य विकल्पेन लोपो द्रष्टव्यः ।

—हृ (हृञ् हरणे) । ते स्पन्दमाना...कर्मविपाकं चाभिनिर्हरन्ति (२।३ यो० सू० भा०) । अभिनिर्हरन्ति निष्पादयन्ति । कृतसंमोदन-कथासत्कारासनाभिनिर्हारः (अवदा० जा० २३) । आसनाभिनिर्हार आसनस्याहरणम् । निरस्थाने । अभिनिर्हृतानां तु सीम्न्यनध्यायः (आप० ध० १।३।९।१६) । कृतनिर्हाराणां प्रेतानाम् ।

## अभिपरा (अभि+परा)

—वद् (वद व्यक्तायां वाचि) । तां हायं ज्ञात्वाऽभिपरोवाद (श० ब्रा० ११।५।१।६)। अभिपरोवाद नक्षत्रं निवेदयामास । तत उ होत्तरार्धात्सदसश्चित्रो गौश्रायणिरभिपरोवाद (शां० ब्रा० २३।५) । उक्तोऽर्थः ।

## अभिपरि (अभि+परि)

—इ (इण् गतौ) । दृढं त्वभिपरीतोऽहमर्जुनेन पुनः पुनः (भा० द्रोण० १११।१०) । दृढमभिपरीतो यन्त्रितः । अभिपरीत उपरुद्धः ।

—प्लु (प्लुङ् प्लवनतरणयोः) । उवाच भीममासीनं कृपयाभिपरिप्लुतम् (भा० उ० ७५।३) । कृपयाविष्टम् इत्यर्थः । अनर्थकोऽभिः परिणा हि गतार्थः ।

—हृ (हृञ् हरणे) । न मन्त्रवता यज्ञाङ्गेनात्मानमभिपरिहरेत् (बौ० ध० १।७।१५।७) । आत्मानं बहिर्न कुर्यात् । यज्ञपात्रस्याग्नेश्चान्तरतो न भवेदित्यर्थः । अपरेणोत्तरां वेदिं स्तम्बयजुर्हरन्नाध्वर्युमभिपरिहरति (प्रतिप्रस्थाता) (आप० श्रौ० ८।२।५।१२) । अध्वर्योर्बहिर्न नयति । स्तम्बयजुस्तृणपांसून् ।

## अभिपर्या (अभि+परि+आ)

—धा (डुधाञ् धारणपोषणयोः) । तदेवैनदभिपर्याधाय विष्यन्दयेत् (श० ब्रा० १२।४।२।५) । अभिपर्याधाय परिगतं कृत्वा, आवेष्ट्य ।

—वृत् (वृतु वर्तने) । यथाकर्मर्त्विजो न विहारादभिपर्यावर्तेरन् (बौ० ध० १।७।१५।१२) । न व्यावर्तेरन्नित्यर्थः ।

(अभिप्र (अभि+प्र)

—अन् (अन प्राणने)। अपहाय मुखमभिप्राणन् (सत्या० श्रौ० २४।१।१३)। अभिप्राणन् उच्छ्‌वसन्। मुखमपहाय=मुखमन्यतो नीत्वा।

—इ (इण् गतौ)। ब्रह्म विद्वान् ब्रह्मैवाभिप्रैति (कौ० ब्रा० उ० १।४)। अभिप्रैति गच्छति। अभिप्रेत मृणत सहध्वम् (अथर्व० ३।१।२)। अभिप्रेत आभिमुख्येन शत्रून् गच्छत। प्रेह्यभिप्रेहि प्रभरा सहस्व (तै० ब्रा० २।४।७।४)। अभिप्रेहि=अभिलक्ष्य प्रतिष्ठस्व। यज्ञो देवलोकमेवाभिप्रैति तदनूची दक्षिणा (श० ब्रा० १।६।३।१)। स्वर्गं हं वा एते लोकमभिप्रयन्ति य उपसद उपयन्ति (शां० ब्रा० ८।६)। उक्तोऽर्थः। कर्मणा यमभिप्रैति स सम्प्रदानम् (पा० १।४।३२)। अभिप्रैति सम्बन्द्धुमिच्छति। अथोत्तरतः परिश्रितं भवति। तदभिप्रयन्तो जपन्ति (श० ब्रा० १४।१।२१५)। तदभिप्रयन्तस्तद् उद्दिश्य यान्तः। पूर्वैरभिप्रेतो गतो मार्गोऽनुगम्यते (रा० २।२१।३५)। अभिप्रेतः प्रतिपन्नः स्वीकृतः। उताधीतं विनश्यति। अप्याध्यातं विनश्यति। आध्यातमभिप्रेतम् (नि० १।६।१)। अभिप्रेतं चिन्तितम्, मनसेष्टम्। किमभिप्रेतमनया (भर्तृ० १।६४)। सा किं विवक्षति, किं चिकीर्षति, किमभिमन्यते इत्यर्थः। स्वां च पत्नीमभिप्रेताम् (रा० ४।२६।४)। अभिप्रेतां प्रियाम्, इष्टाम्। यथाभिप्रेतमनुष्ठीयताम् (हितोप०)। यथाभिप्रेतं यथेच्छम्। यथा ते छन्दस्तथा क्रियतामित्यर्थः। त्वं प्रभास्त्वमभिप्रेतं त्वं नस्त्राणमनुत्तमम् (भा० आदि० २३।१८)। अभिप्रेतं बुद्धिवृत्तिरिति नीलकण्ठः। कथं रामो महाबाहुः स तथाऽवितथक्रियः। भक्तं जनमभिप्रेत्य प्रवासं तपसे गतः (रा० २।८७।५)॥ अभिप्रेत्य चिन्तयित्वा मनसिकृत्य। अभित्यज्य प्रवासं तापसो गत इति पाठान्तरम्। तत्र त्यजेरभिना संयोगोऽपूर्वः। तमागतमभिप्रेत्य शृगालोप्यब्रवीद् वचः (भा० आदि० १४०।४०)। अभिप्रेत्य ज्ञात्वा। तं तमर्थमभिप्रेत्य ययौ वाक्यमुदीरयन् (रा० २।४६।१७)। अभिप्रेत्य विषयीकृत्य। भगवांस्तमभिप्रेत्य (भा० पु० १०।३८।३६)। तस्याभिप्रायमवेत्येत्यर्थः। तच्छब्दस्तन्मनीषिते वर्तते इति कवेरभिप्रायः। स्वरितञितः कर्त्रभिप्राये क्रियाफले (पा० १।३।७२)। कर्तारमभिप्रैति गच्छतीति कर्त्रभिप्रायं कर्तृगम्। कर्मण्यण्। अभिप्राया न सिध्यन्ति तेनेदं वर्तते जगत् (पञ्चत० १।१५८)। अभिप्रायाः प्रयोजनानि व्यवसितानि कृत्यानि चिकीर्षितानि। तेषां स्वं स्वमभिप्रायमुपलभ्य पृथक् पृथक् (मनु० ७।५७)। अभिप्रायं मतं दर्शनम्। रोषनिर्जितजीमूतो मनोभिप्रायशीघ्रगः (भा० द्रोण० १०।१७)। अभिप्रायो गतिः। मनोभिप्रायशीघ्रगः (रथः)

(भा० द्रोण० ६६।१२) । उक्तोऽर्थः । संभारमाहरति गोरभिप्रायाद् वनस्पतीनाम् (कौ० सू० ७) । अभिप्राय इच्छा कामः । सभां प्रचक्रे कर्तुं पाण्डवानां महात्मनाम् । अभिप्रायेण पार्थानां कृष्णस्य च महात्मनः (भा० सभा० १।१८) ॥ उक्तोऽर्थः । यत्र (सभायां) दिव्यानभिप्रायान् पश्येम हि कृतांस्त्वया (भा० सभा० १.१३) । अभिप्रेयन्ते संकल्प्यन्त इत्यभिप्राया विषयाः । तत्र दिव्यानभिप्रायान् ददर्श कुशिकस्तदा (भा० अनु० ५४।२) । अभिप्रायान् काम्यानर्थान् । विश्वकर्मकृतैर्दिव्यैरभिप्रायैरलङ्कृताम् (द्वारकाम्) (हरि० २।६८।८) । उक्तोऽर्थः । तस्माद् गर्भश्चतुर्थे मास्यभिप्रायमिन्द्रियार्थेषु करोति (सुश्रुत० शारीर० ३।१४) । अभिप्राय इच्छा । अभिप्रायं तु जानामि रावणस्य दुरात्मनः । सीतां प्रति ...... (रा० ६।८४।१०) ॥ अभिप्रायोऽभिलाषः कामः । यदि तस्यामभिप्रायो भार्यात्वे तव जायते (रा० ३।३४।२२) । उक्तोऽर्थः । यस्य सर्वं तदा ह्यन्नं मनोभिप्रायगं शुचि (भा० द्रोण० ५५।४१) । मनइच्छानुकूलम् । सा तदर्थमना देवी तमभिप्रायमागतम् (रा० २।११।११) । अभिप्रायमागतमानुकूल्यं प्राप्तम् ।

—क्षल् (क्षल शौचकर्मणि) । अभिप्रक्षालितो यं मणिः (विक्रम० ५) । सम्यक् शोधित इत्यर्थः । अभिप्रयोरेकतरः शक्यः परिहर्तुम् ।

—गाह् (गाहू विलोडने) । वाजाँ अभि प्र गाहते (ऋ० ६।६६।२) ।

—गै (गै शब्दे) । इन्द्रमभि प्र गायत (ऋ० १।५।१) । कण्वा अभि प्र गायत (ऋ० १।३७।१) । तम्वभि प्र गायत पुरुहूतं पुरुष्टुतम् (ऋ० ८।१५।१) । पवमानमवस्यवो विप्रमभि प्र गायत (ऋ० ६।१३।२) । सर्वत्राभिष्टुतेत्येवार्थः ।

— तप् (तप सन्तापे) । आर्तं च सौमित्रिमभिप्रतप्तम् (रा० २।२१।५५) । अभिप्रतप्तं वेदनामनुभवन्तम् ।

—दॄ (दॄ विदारणे) । यथौघः पर्वतश्रेष्ठमासाद्याभिप्रदीर्यते (भा० कर्ण० ७८।३८) । नानाधाराभिर्विभक्तो भवतीत्यर्थः ।

—नक्ष् (णक्ष गतौ) । प्र यो नक्षते अभ्योजसा क्रिविम् (वालखिल्य० ३।८) । नक्षते नक्षति= अभिभवति ।

—नी (णीञ् प्रापणे) । उत प्र णेष्यभि वस्यो अस्मान् (ऋ० १।३१।१८) । अभिप्रणेषि स्वाभिमुखं नय प्रापय । जज्वाल लोकस्थितये स राजा यथाध्वरे

वह्निरभिप्रणीतः (भट्टि० २।४)। अभिप्रणीतः संस्कृत इति जयमङ्गला। वेदिं प्रति नीत इति संस्कृतशार्मण्यकोषः।

—नु (णु स्तवने)। इमा उ त्वा शतक्रतोऽभि प्र णोनुवुर्गिरः। इन्द्र वत्सं न मातरः (ऋ० ६।४५।२५)। अभिप्रणोनुवुः शब्दयन्ति, अभिवाश्यन्ते, आकारयन्ति। त्वाभि प्र णोनुमो जेतारमपराजितम् (ऋ० १।११।२)। पुनः पुनर्भृशं वा स्तुम इत्यर्थः। इमा अभि प्र णोनुमो विपामग्रेषु धीतयः (ऋ० ८।६।७)। पुनः पुनर्गृणीम इत्यर्थः।

—पच् (डुपचष् पाके)। अनलेनाभिप्रपच्यमानानां महाभूतानां सङ्घातो घनः संजायते (सुश्रुत० १।३२२।६)। स्पष्टोऽर्थः।

—पद् (पद गतौ)। शोकेनाभिप्रपन्नस्य जीविते चापि संशयः (रा० ४।७।१३)। अभिप्रपन्नोऽभिपन्नोभिगत आक्रान्तो व्याप्तः।

—भू (भू सत्तायाम्)। ईजानमिद् द्यौर्गूर्तावसुरीजानं भूमिरभि प्रभूषणि (ऋ० १०।१३२।१) प्रभूषणि प्रभवने निमित्तभूते सति। भूषयते र्वेवं रूपम् इति सायणः।

—मन् (मन ज्ञाने, मनु अवबोधने)। भूमिरिति त्वाभिप्रमन्वते जनाः (अथर्व० ६।८४।१)। अभितः प्रबुध्यन्त इत्यर्थः।

—या (या प्रापणे, प्रापणमिह गतिः)। उत्तरतोऽभिप्रयायी जयति (तै० सं० ५।३।५।२३)। अभिप्रयायी प्रस्थायी। रथं समास्थाय वायोः सलोकतामभिप्रयाति (जै० ब्रा० १।२६)। अभिमुखः सम्प्रति प्रतिष्ठत इत्यर्थः। अभिप्रयामि सङ्ग्रामे यदहं युद्धदुर्मदान् (भा० वि० ४४।१४)। अभिप्रयामि प्रार्थयेऽवस्कन्दामि।

—युज् (युजिर् योगे)। देवास्तृतीयसवनात् प्रातः सवनमभिप्रायुञ्जत (शां० ब्रा० १४।५)। अगृह्णन्, आक्रामन्, अभ्यभवन् (असुरान्)। देवाश्चातुर्मास्यैरभि प्रायुञ्जत (तै० ब्रा० १।५।६।३)। आकूत्य हि पुरुषो यज्ञमभिप्रयुङ्क्ते (तै० सं ६।१।२।२)। उक्तोऽर्थः।

—वृत् (वृतु वर्तने)। यत्र भागीरथीं गङ्गां यमुनाऽभिप्रवर्तते (रा० २।५४।१)। गङ्गया सम्भेदमापद्यते, गङ्गामुपतिष्ठते, गङ्गामुपश्लिष्यतीत्यर्थः। एतां ते दिशं रथोऽभिप्रवर्तताम् (ऐ० ब्रा० ८।१०)। अभिलक्ष्य प्रयात्वित्यर्थः।

—श्वस् (श्वस प्राणने)। तान् (देवान्) अभिप्राश्वसीत् (वृत्रः)। तस्या-श्वसथाद् ईषमाणा विश्वे देवा अद्रवन् (ऐ० ब्रा० ३।२०)। अभिप्राश्वसीद् अभिलक्ष्य प्रश्वासमकरोत्।

—सृ (सृ गतौ)। तस्मादु ह न प्रतीचीनशिराः शयीत। नेद् देवान-भिप्रसार्य शया इति (श० ब्रा० ३।१।१।७)। देवाभिमुख्येन पादौ प्रसार्ये-त्यर्थः।

—स्कन्द् (स्कन्दिर् गतिशोषणयोः)। तद्यथा गिरिशिखराद् गर्तमभि-प्रस्कन्देत् (शां० ब्रा० २६।१)। खातमभिप्रपतेदित्यर्थः। अतटप्रपातो विवक्षितः।

—स्था (ष्ठा गतिनिवृत्तौ)। यदा सुषुप्तो भवति। तदा न कस्यचन वेद, हिता नाम नाड्यो द्वासप्ततिः सहस्राणि हृदयात्पुरीततमभिप्रतिष्ठन्ते (श० ब्रा० १४।५।१।२१)। अभिप्रतिष्ठन्तेऽभिप्रवर्तन्ते। ता अभिप्रस्थापयन्नुवाच (छां० उ० ४।४।५)। प्राजन्, कालयन्, प्रेरयन्।

—स्रु (स्रु गतौ)। नातपति प्रस्रावयेत नेदेतममभिप्रस्रावया इति (श० ब्रा० १४।१।१।३३)। अभिप्रस्रावयेत् आभिमुख्येन मेहेत्।

—इ (इण् गतौ)। तथैतदत्रोक्तं व्यक्तमव्यक्तं वा सत्त्वमात्मत्वेनाभि-प्रतीत्य (यो० सू० २।५ भाष्ये)। अभिप्रतीत्य प्रतीत्य विज्ञाय मत्वा।

## अभिवि (अभि + वि)

—आप् (आप्लृ व्याप्तौ)। आ जभासेति वित्रपमभिव्याप्य (पा० ३।२।१३४) इत्यत्र सिद्धान्तकौमुद्याम्)। अभिविधिरभिव्याप्तिः। अधिकारोऽयं यूनस्तिः इत्यभिव्याप्य (पा० ४।१।१४ इत्यत्र सि० कौ०)। उक्तोऽर्थः।

—इ (इण् गतौ)। विश्वे देवाः समनसः सकेता एकं क्रतुमभि वि यन्ति साधु (ऋ० ६।६।५)। अभिवियन्ति दिग्भ्यो विदिग्भ्यो यज्ञमभिलक्ष्या-यान्तीत्यर्थः।

—ईक्ष् (ईक्ष दर्शने)। समस्थो विषमस्थान् हि दुर्हृदो योभिवीक्षते (भा० वन०)। सस्नेहं सकरुणं वा पश्यतीत्यर्थः। तं तदा नाशकत् कश्चिच्च-क्षुर्भ्यामभिवीक्षितुम् (भा० द्रोण० ४४।२१)। सर्वत अभिमुखीभूय द्रष्टु-मित्यर्थः। न चैनं भुवि शक्नोति कश्चिदप्यभिवीक्षितुम् (मनु० ७।६)। उक्तोऽर्थः।

—उक्ष् (उक्ष सेचने)। यथाग्निं नाभिव्युक्षेत् (श० ब्रा० १।३।१।१०)। नाभिविङ्चेदित्यर्थः।

—तन् (तनु विस्तारे)। पूर्वस्याह्नः परिशिषन्ति कर्म तदुत्तरेणाभिवितन्वतेऽह्ना (श० ब्रा० ११।५।५।१३)। अभिवितन्वतेऽभिनिर्वर्तयन्ति अवसाययन्ति समाप्तिं नयन्ति। उत्करं वा चर्मणाऽभिवितन्वन्ति (शां० श्रौ० १७।५।६)। अभिवितन्वन्ति प्रच्छादयन्ति संवृण्वन्ति।

—दृश् (दृशिर् प्रेक्षणे)। पूषा यो विश्वाभि विपश्यति भुवना सं च पश्यति। (ऋ० ३।६२।६)। अभिविपश्यति अभितो विशेषेण पश्यति। अथो यत्किञ्च मनसा वाचा चक्षुषा वा संकल्पयन्ध्यायत्याहाऽभिविपश्यति (आप० ध० १।५।८)। आभिमुख्येन विशिष्य पश्यतीत्याह।

—द्रु (द्रु गतौ)। हयैरपि हयारोहाश्चामरापीडधारिभिः। अन्योन्यमभिविद्रुताः—(भा० भीष्म० ४६।२०)। अभिविद्रुताः=वेगेनाभ्यधावन्। ततः शान्तनवो भीष्मः सैन्यं दृष्ट्वाभिविद्रुतम् (भा० भीष्म० १०१।३१)। इतस्ततः पलायमानम्, कान्दिशीकमित्यर्थः।

—धा (डुधाञ् धारणपोषणयोः)। न भूमिंपाशमभिविदध्यात् (श० ब्रा० १३।८।१।१८)। अभिविदध्यात् संनिहितं संसृष्टं निबध्यात्। (श्वभ्रः) कर्मणाऽभिविहितः (लाट्या० श्रौ० ३।११।२)। अभिविहितः प्रावृतो निखिलेनाभिव्याप्तः। आङ् मर्यादाभिविध्योः (पा० २।१।१३)। तेन विना मर्यादा तत्सहितोऽभिविधिः। अभिविधौ सम्पदा च (पा० ५।४।५३)। यत्रैकदेशेनापि सर्वा प्रकृतिर्विकारमापद्यते सोऽभिविधिरिति वृत्तिः। बहूनां व्यक्तीनामेकदेशावच्छेदेनान्यथाभावोऽभिविधिरिति दीक्षितः।

—धाव् (धावु गतिशुद्ध्योः)। यत्रापो देवयजनं चान्तरेण पन्था अभिविधावेत् (आप० श्रौ० १०।७।२०।११)।

—नी (णीञ् प्रापणे)। वृद्धैरभिविनीतैश्च द्विजैर्धर्मार्थदर्शिभिः (रा० २।१।२१)। अभिविनीतः शिक्षितः। कस्यां कलायामभिविनीते भवत्यौ (माल० ५)। अथ (अस्यां कलायां) केनाभिविनीतासि (माल० ५)। उक्तोऽर्थः।

—राज् (राजृ दीप्तौ)। इमानि च सर्वाणि प्रज्ञानान्यभिविराजति (नि० ११।२७।१)। अभिविराजति ईष्टे।

अभिव्याङ् (अभि + वि + आ)

—दा (डुदाञ् दाने)। तं जातमभिव्याददात् (श० ब्रा० १०।६।५।४)। मुखमस्य व्यात्तं विवृतमकरोदित्यर्थः।

—हृ (हृञ् हरणे)। न ब्रह्माभिव्याहारयेदन्यत्र स्वधानिनयनात् (गौ० ध० १।२।६)। अभिव्याहारयेत् उच्चारयेत्। स्वार्थे णिच्। नाभिव्याहारयेद् ब्रह्म स्वधानिनयनादृते (मनु० २।१७२)। आ मौञ्जिबन्धनादित्यनुवर्तते। स्वधानिनयनं श्राद्धनिष्पादकं मन्त्रजातम्। अथ यद्येनं वाचाऽभिव्याहृतः। यज्ञो नोपनमेत् (श० ब्रा० १२।६।१।४)। अभिव्याहृत उपहूतः। अथापि निष्पन्नेऽभिव्याहारेऽभिविचारयन्ति (नि० १।२३।२)। अभिव्याहारो व्यपदेशः। अभिव्याहाराय वाक् (छां० उ० ८।१२।४)। अभिव्याहार उच्चारणं भाषणम्। अभिव्याहृत्य हैवान्नमत्रप्स्यत् (ऐ० उ० ३।३)। अन्नशब्दमुच्चार्येत्यर्थः।

अभिसम् (अभि + सम्)

—इ (इण् गतौ)। अपृणन्तमभि सं यन्तु शोकाः (ऋ० १।१२५।७)। अभिसंयन्तु आभिमुख्येन सङ्गच्छन्तु।

—क्रम् (क्रमु पादविक्षेपे)। यत्स्तोमात्स्तोममभिसंक्रामत्यग्रादेवाग्रं रोहति (पञ्च० ब्रा० २१।११।३)। स्तोमात्स्तोमान्तरमारभत इत्यर्थः।

—क्रुध् (क्रुध क्रोधे)। अन्योन्यस्याभिसंक्रुद्धावन्योन्यं जघ्नतुः शरैः (भा० वन० १६।२४)। परस्परस्मै सम्यक् क्रुद्धौ।

—गम् (गम्लृ गतौ)। स्वस्ति गोब्राह्मणानां तु लोकानां येऽभिसङ्गताः (रा० ३।२४।२१)। अभिसङ्गताः अनुकूलाः। ते क्षिप्रमभिसंगम्य यूथपा यूथर्षभम् (रा० ४।१।६)। यूथर्षभे सम्पद्य, तेन संमिल्य। ऋषिभिश्चाभिसंगम्य प्रवत्स्यति सुखं वने (रा० २।३६।८)। अभिसङ्गम्य संगत्य संसृज्य। अभिसङ्गम्य विधिवत् परिष्वङ्गाभिवादनैः। मुमुचुः प्रेमबाष्पोघम् .. (भा० पु० १।१३।५)॥ सानन्दं प्रतीष्य प्रतिगृह्य।

—गॄ (गॄ शब्दे)। विश्वे तद् देवा अभिसंगृणन्तु (कौ० सू० ११५)। प्रतिशृण्वन्तु प्रतिजानताम्। सम्पूर्वो गृणातिः प्रतिज्ञाने वर्तते।

—ग्रह् (ग्रह उपादाने)। अङ्गुष्ठाभ्यां चोपकनिष्ठाभ्यां चाङ्गुलिभ्या-

मभिसंगृह्य प्राक्शस्त्रिरुत्पुनाति (गो० गृ० १।७।२५)। अभिसंगृह्य परिगृह्य सर्वत आदाय।

—चर् (चर गतिभक्षणयोः)। त्वां जनासो अभि सं चरन्ति (ऋ० १०।४।२)। अभिसंचरन्ति परिसरन्ति। अन्यस्य चित्तमभिसंचरेण्यम् (ऋ० १।१७०।१)। संचरणशीलमनवस्थितमिति दुर्गः।

—ज्ञा (ज्ञा अवबोधने)। विजिग्यानं मा प्रजाः श्रियै यशसेऽन्नाद्यायाभिसंजानन्ता इति पयो ह वै प्रजा जाता अभिसंजानते (श० ब्रा० २।६।३।६)। अभिसंजानन्ता=अनुजानन्तु श्र्यादिकम् मह्यमित्याह।

—तन् (तनु विस्तारे)। यथा शालायै पक्षसी मध्यमं वंशमभिसमायच्छन्ति एवं संवत्सरस्य पक्षसी दिवाकीर्त्यमभिसन्तन्वन्ति (तै० ब्रा० १।२।३।२)। अभिसन्तन्वन्ति विस्तारयन्ति एकस्मात्पार्श्वादाऽपरपार्श्वम्।

—तॄ (तॄ प्लवनतरणयोः)। स्वर्गमेवैताभिर्लोकमभिसन्तरन्ति (ऐ० ब्रा० ६।६)। अभिसन्तरन्ति एताभिर्ऋग्भिर्नौस्थानीयाभिः स्वर्गमभिलक्ष्य तरन्ति।

—दंश् (दंश दशने)। अभिसन्दष्टौ वै स्वः (तै० सं० २।५।२।३)। अभिसन्दष्टौ सन्दष्टौ संलग्नौ (वृत्र भागे)।

—धा (डुधाञ् धारणपोषणयोः)। आत्मानं योऽभिसन्धत्ते सोऽन्यस्य स्यात् कथं हितः (भा० शां० १४३।१३)। अभिसन्धत्तेऽतिसन्धत्ते वञ्चयते विप्रलभते। नरः पापसमाचारस्त्यक्तव्यो दूरतो बुधैः। आत्मानं योभिसन्धत्ते सोऽन्यस्य स्यात् कथं हितः (भा० शां० १४३।१३)॥ उक्तोऽर्थः। नीलकण्ठस्त्वन्यथा व्याख्यानयति। अभिसन्धत्तेऽभिप्रैति। विषोद्बन्धनादिना हन्तुमिति शेषः। इत्थं साध्याहारं मुनेर्वचो भवति। आत्मानमभिसन्धत्त इति वाक्यविन्यासेऽभिप्रैतीत्यर्थो न युज्यते। अर्थायोगश्चाध्याहारं प्रयोजयति। अध्याहारश्चोहवशो न प्रभवति प्रतिनियतरूपो भवितुम्। तेनार्थानिश्चयः फलति। तेनाध्याहारो दूषणम्। तस्मात्परिहरन्तीमं कवयोऽन्यत्र प्रसिद्धासन्निधादर्थात्। अभिसंपूर्वस्यापि दधातेरतिसन्धानमर्थो दृष्ट इत्यस्मत्परिगृहीतोर्थो नापूर्वः। जम्भैः सं धेह्यभि यातुधानान् (ऋ० १०।८७।३)। अभिसन्धेहि=संयुङ्ग्धि, सन्दश, संयोजय। यथैनं नाभिसन्दध्युर्मित्रोदासीनशत्रवः (मनु० ७।१८०)। नाभिसन्दध्युर्न बाधेरन्निति कुल्लूकः। नाभिसन्धत्त पाञ्चाल्ये भीष्मो बाणान् शिखण्डिनि (भा० भीष्म० ११८।५०)। शिखण्डिनं स्वस्य बाणानां लक्ष्यं

**नाकरोदित्यर्थः । शिखण्डिनमभिलक्ष्य धनुषि बाणान्न समधत्तेति शब्दार्थः ।** यत्र मामभिसन्धत्से त्वां चाहं शिनिपुङ्गव (भा० द्रोण० १८६।२४) । **अभिसन्धत्से शरव्यं करोषि ।** ते ह स्म क्षुरपवी निमेषं निमेषमभिसन्धत्तः (श० ब्रा० ३।६।२।६) । संहिते अभिसन्दधते ये च विश्वासायास्य मानवाः (भा० शां० १३३।१८) । **अभिसन्दधते व्यवस्यन्ति, उद्युञ्जते, उद्यच्छन्ते ।** तेजसा यशसा बुद्ध्या बलेनाभिजनेन च । यः कपीनभिसन्धत्ते हिमवानिव पर्वतान् (रा० ६।४।५२) ॥ **अभिसन्धत्तेऽतिशेतेऽतिक्रामति ।** तान्सर्वानभिसन्दध्यात्सामादिभिरुपक्रमैः (मनु० ७।१५६) । **अभिसन्दध्याद् वशे कुर्यात् ।** इन्द्रं यं विश्वा भुवनाभिसन्दधुः (ऋ० १।१०१।६) । **अभिसन्दधुरभिन्दधते प्रतिपद्यन्ते स्वीकुर्वन्ति अभ्युपयन्ति ।** ततः पञ्चाशतं कन्याः पुत्रिका अभिसन्दधे (भा० आदि० ७५।८) । **अभिसन्दधे संकल्पितवान् ।** आचार्यवाक्योपरमे तद्वाक्यमभिसन्दधत् (भा० वि० २८।२) । **तदनुगुणेन वदन् इति नीलकण्ठः । तद्वाक्यार्थं युञ्जानोऽविरुन्धान इति पदार्थः । हितार्थं समुवाचेत्यनुषङ्गः ।** (शूलं) चिक्षेप परमक्रुद्धो लक्ष्मणायाभिसंहितम् (रा०)। **लक्ष्मणं निमित्तं कृत्वा ।** अनभिसंहितमप्यपेतप्राणस्यास्थिचर्मस्नायुकेशाद्युपस्पृष्टम् (वि० पु० ४।४।३१) । **अनभिसंहितमकामेन कृतम् ।** उर्वशीसालोक्यं फलमभिसंहितवान् (वि० पु० ४।६।९२)। **कामितवान् ।** अभूतिकामा भूतानां तादृशैर्मेऽभिसंहितम् (भा० शां० ८२।३४) । **मे = मयि । अभिसंहितम् = वैरं कृतम् । कृच्छ्रलभ्योऽर्थः ।** वायसस्त्वेष मे राजन्ननु कार्याभिसंहितः (भा० शां० ८२।३२) । **कार्याभिसंहितः = निर्विष्टकार्यतात्पर्यवान्, मदर्पितकृत्यसंलग्नः ।** भवन्तमभिसन्धाय जिघांसन्ति भवत्प्रियम् (भा० शां० ८२।५०) । **जिघांसन्तीति क्रियाया अमात्याः कर्तारः ।** हितमुक्तं त्वया देवि स्निग्धया सदृशं वचः । कुलं स्वमभिसन्धाय (रा० ३।१४।२) । **अभिसन्धाय चिन्तयित्वा ।** पदाऽऽविद्धं यान्ती स्खलितमभिसन्धाय बहुशः (विक्रम० ४।५२) । साध्वर्थमभिसन्धाय (रा० २।१०६।१४) । अभिसन्धाय तु फलं दम्भार्थमपि चैव यत् (इज्यते . . .) । (गीता १७।१२) ॥ **उक्तोऽर्थः ।** श्राद्धानि चैव कुर्वन्ति फलकामाः सदा नराः । अभिसन्धाय पितरं पितुश्च पितरं तथा (हरि० १।१६।१३) ॥ **अभिसन्धाय = उद्दिश्य । पित्राद्यर्थानीमानि श्राद्धानीति मत्वा ।** बलीयसाऽभिसन्धाय (का० नी० सा० १।६४) । **बलवत्तरेण संमिश्रो भूत्वा । सन्धि कृत्वेत्यर्थः ।** काकं तमभिसन्धाय (अस्त्रम्) (रा० २।९६।४४) । **काकं लक्ष्यं कृत्वा ।** अभिसन्धाय पाण्डूनां पञ्चालानां च वाहिनीम् (भा० द्रोण० १९९।१५) । **लक्ष्यीकृत्येत्यर्थः ।** रामः सुनिशिताञ्शरान् । सुशीघ्रमभिसन्धाय . . . (रा० ३।३।१०) ॥ **अभिसन्धाय धनुषा संयोज्य, धनुरारोप्य । अभिरिह**

नान्तरमर्थे करोति । फलं त्वनभिसन्धाय क्षेत्रिणां बीजिनां तथा (मनु० ९।५२)। फलविषये संविदमकृत्वेत्यर्थः । जनं विद्वानेकः सकलमभिसन्धाय (मालती० १।१४) । अभिसन्धाय=अतिसन्धाय=वञ्चयित्वा, विप्रलभ्य । स क्षिप्रमुदकं स्पृष्ट्वा रोषादिदमुवाच ह । पितरं तेऽभिसन्धाय . . . (भा० आदि० ५०।६)॥ अभिसन्धाय (पितुस्ते) आभिमुख्यमाधाय । आन्तरैरभिसन्धाय राजन् सिध्यति (भा० शां० ८२।३५) । आन्तरैः सुहृदादिभिरेकीभूय संमनीभूय । तेषु प्रणयं कृत्वेति तात्पर्यार्थः । शूद्रो द्विजातीनभिसन्धायाभिहत्य च वाग्दण्डपारुष्याभ्यामङ्गं मोच्यो येनोपहन्यात् (गौ० ध० २।३।१) । अभिसन्धाय अभिभूय । यतमानौ तु तौ वीरावन्योन्यस्य वधं प्रति । नाशक्नुतां तदान्योन्यमभिसन्धातुमाहवे (भा० भीष्म० ५२।५४) ॥ अभिसन्धातुं समासत्तुं संनिकर्षमाप्तुं लक्ष्यं कर्तुं वा । शक्यमभिसन्धातुं दानानुरागवशगत्वात् (अवदा० जा० ९) । अभिसन्धातुमतिसन्धातुम् । अभिसन्धातुमारेभे हनूमानङ्गदं ततः (रा० ४।५४।५) । उपायनैरुपग्राह्यैवंशे कर्तुम् अनुकूलयितुं वेति बहूनां मतोऽर्थः । तारादिभ्यो भेदयितुमिति कश्चित् । कुतोऽभिसन्धिर्यज्ञस्य भवतो वचनाद् गुरो (भा० आश्व० ६।४) । अभिसन्धिर्विचारः, चिन्ता । दम्पत्योः प्राणसंश्लेषे योऽभिसन्धिः कृतः किल (भा० शां० २६६।३४) । अभिप्रायः, प्रयोजनम् । अभिलाषः । पुत्रो मे गौरो जायेत वेदं ब्रुवीत सर्वमायुरियादिति श्रुत्या प्रदर्शित इति नीलकण्ठः । अभिसन्धिकृते तस्मिन्ब्राह्मणस्य वधे यथा । निष्कृतिं न पश्यामि . . . (भा० आदि० १६१।६) । अभिसन्धिना इच्छया कामतः कृतेन । बुद्धिपूर्वं मत्या वा कृतेनेत्यर्थः । अथावश्यमेव माधवसेनः पूज्येन मोचयितव्यः श्रूयतामभिसन्धिः (माल० १) । अभिसन्धिरनुमन्तव्योऽर्थः । पराभिसन्धानपरं यद्यप्यस्य विचेष्टितम् (रघु० १७।७६) । पराभिसन्धानं परातिसन्धानम् । परप्रलम्भनम् । एतेषां कारणानामनभिसन्धाने (कौ० अ० ४।८।११) । अनभिसन्धानमचिन्तनम् । सन्धा प्रतिज्ञा भवत्यभिसन्धाऽपि । तथा च श्रीरामायणे प्रयोगः—तस्य सत्याभिसन्धस्य वृद्धस्य वचनात् पितुः (५।३१।७) । यात्रप्राणाभिसन्धानं तावदिच्छेच्च भोजनम् (भा० १।९१।१३)। अभिसन्धानमासक्तिः ।

—नह् (णह बन्धने) । मूलानि च प्रान्तानि चाभिसंनह्यन्ति (कौ० सू० ९०) । मिथः सम्बध्नन्ति ।

—नु (णु स्तवने) । त्वां विश्वे अमृत जायमानं शिशुं न देवा अभि सं नवन्ते (ऋ० ६।७।४) । अभिसंनवन्ते सममभिनन्दन्ति । यत्राभि संनवामहे (अथर्व २०।९२।२) ।

—पच् (डुपचष् पाके)। शरदमोषधयोऽभि संपच्यन्ते (पञ्च० ब्रा० २१।१४।३)। समं पक्वा भवन्तीत्याह।

—पत् (पत्लृ गतौ)। महीतलात्केचिदुदीर्णवेगाः (कपयः) पुनर्द्रुमाग्रानभिसम्पतन्ति (रा० ५।६०।१६)। द्रुमाग्रेषु साकं पतन्ति।

—पद् (पद गतौ)। स यत्कर्म कुरुते तदभिसम्पद्यते (श० ब्रा० १४।७।२।७)। तदभिसम्पद्यते तद्भावमाप्नोति, तद्रूप्यं प्रतिपद्यते। स यद्येकमात्रमभिध्यायीत स तेनैव संवेदितस्तूर्णमेव जगत्यामभिसम्पद्यते (प्रश्नोप० ५।३)। अभिसम्पद्यते समृध्यति। इदं त्रिवृदेति सर्वमभिसम्पद्यमानम् (श० ब्रा० १२।३।१।१)। अन्योन्येन सदृशी भवद् इत्यर्थः।

—पू (पूङ् पवने)। यदभिपवते। यदभिसंपवते (तै० ब्रा० २।३।६।१)। अभिसम्पवते अभिलक्ष्य सम्यक् पवते वाति।

—प्लु (प्लुङ् गतौ)। तीर्थेष्वभिसंप्लुत्य प्रव्रजिष्यसि चेत्प्रभो (भा० शां० १२।३४)। अभिसंप्लुत्य आप्लुत्य स्नात्वा, अभिषेकं कृत्वा। किं पुनः प्रमाणानि प्रमेयमभिसम्प्लवन्ते, अथ प्रतिप्रमेयं व्यवतिष्ठन्ते (१।१३ न्यायसूत्रे भाष्ये)। अभिसंप्लवन्ते, संकीर्यन्ते। अग्निरिति प्रमातुः प्रमातव्येऽर्थे प्रमाणानां सङ्करोऽभिसम्प्लव इति (वा० भा०)।

—बन्ध् (बन्ध बन्धने)। न वावचनेन शकुनिरभिसम्बध्यते किन्तर्हि निपातनमभिसम्बध्यते (पा० ६।१।१५० सू० भा०)।

—भू (भू सत्तायाम्)। मृत्वा पुनः सम्भवन्ति ते सम्भवन्त एवामृतत्वमभिसंभवन्ति (श० ब्रा० १०।४।३।१०)। अभिसम्भवन्ति प्राप्नुवन्ति। तं लोकं यमिन्यभिसम्बभूव (अथर्व० ३।२८।६)। अभिसम्बभूव प्राप। एतं ह स सुकृतमात्मानमभिसम्भवति (श० ब्रा० ८।६।२।१८)। अभिसम्भवति प्राप्नोति तेन युज्यत इत्यर्थः। आत्मा शरीरम्। एतद् ब्रह्मैतद् इतः प्रेत्याभिसम्भवितास्मि (छां० उ० ३।१४।४)। सायुज्यमाप्तास्मीत्यर्थः। स सम्भवन्नग्नीषोमावभि समभवत् (तै० सं० २।४।१२।२)। अभिसमभवत् व्याप्नोत्। सत्तालक्षणं महान्तमात्मानमविद्यायोनिं पश्यन्तः प्रतिबोधेनाभिसम्भवन्ति (वा० प० १।१४६ का० हरिवृत्तौ)। प्रतिबोधेनाभिसम्भवन्ति प्रबोधेन युज्यन्त इत्यर्थः। तौ (अग्नीषोमौ) सम्भवन्तौ यजमानमभिसम्भवतः (तै० सं० ६।१।११।७६)। यजमानं लक्ष्यीकृत्य सह तिष्ठत इत्यर्थः। अथवा प्रमाणानतिरेकः सम्भवः। यजमानमभितो व्याप्य तिष्ठत इत्यर्थः। व्यवसायशिथिलहृदयैर्दुरभिसम्भवाः खल्वेवं विद्याधनार्जनोपायाः (अवदा० जा० २१)।

—**यम्** (**यम उपरमे**)। स यदेवान्त्यां समिधमादधाति, जायाया वा पाणिं जिघृक्षन् जुहोति तमभिसंयच्छेत (गो० गृ० १।१।२०)। **रक्षेदित्यर्थः।**

—**रभ्** (**रभ राभस्ये**)। दश स्वसारो अग्रुवः समीचीः पुमांसं जातमभि सं रभन्ते (ऋ० ३।२९।१३)। **अभिसंरभन्ते अभिगृह्णते।** तृष्णा क्रोधोऽभिसंरम्भः (भा० आश्व० ३१।२)। **अभिसंरम्भो द्वेषाभिनिवेशः।**

—**वस्** (**वस निवासे**)। प्रकृतिमुख्यानभिसंवास्य (कौ० अ० १३।२। १५)। **तैः संसृज्य, सहावस्थाय। विस्रम्भमुत्पाद्य।** अग्निं गृहपतिमभिसंवसानाः (तै० ब्रा० ३।७।४।४)। **अग्निनैक्यमाप्नुवन्त इत्यर्थः।**

—**विश्** (**विश प्रवेशने**)। त एतदेव रूपमभिसंविशन्ति (छां० उ० ३।६। २)। **आभिमुख्येन सम्यग् विशन्ति, तादात्म्यं लभन्त इत्यर्थः।** यत्प्रयन्त्यभिसंविशन्ति (तै० उ० ३।१)। **उक्तोऽर्थः।** सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति (छां० उ० १।११।५)। **प्राणेऽन्तर्लीयन्त इत्यर्थः।** इमं सजाता अभि संविशध्वम् (अथर्व० ३।३।४)। **सर्वतः प्रविश्य उपविश्य सेवध्वमित्यर्थः।** इमं मेथिमभिसंविशध्वं तनूपानं त्रिवरूथमोजसे (अथर्व० ८।५।२०)। **अभितः सम्यग् आश्रयध्वम् इत्यर्थः।**

—**सु** (**षुञ् अभिषवे, अभिषवः सुरासन्धानं स्नानं च**)। एकं वा एताविन्द्रमभिसंसुनुतः (तै० ब्रा० १।४।६।१)। **अभिलक्ष्य संभूय सोमयागं कुरुत इत्यर्थः।**

—**स्था** (**ष्ठा गतिनिवृत्तौ**)। तेषामुक्थ्योऽच्छावाकमभिसन्तिष्ठते होतारमितरे (का० श्रौ० १०।९।२८)। **अच्छावाकशस्त्रेण समाप्यते। अभेरुपसर्गस्य वशात् सकर्मकत्वम्। संतिष्ठतिः समाप्तौ प्रसिद्धः। ...सर्वांस्तानब्रवीद् वचः।** राज्ञश्च राजपुत्रांश्च पाण्डवानभिसंस्थितान् (भा० भीष्म० १२०।५०)। **अभिसंस्थितान् अभितः स्थितान्।**

## अभिसमाङ् (अभि+सम्+आ)

—**इ** (**इण् गतौ**)। तत्र ह कुरुपञ्चालानां ब्राह्मणा अभिसमेताः (श० ब्रा० १४।६।१।१)। **अभिसमेताः=अभितः समागताः।**

—**धा** (**डुधाञ् धारणपोषणयोः**)। तानि प्रयत्नाभिसमाहितानि... गृहाणि (रा० ५।७।४)। **प्रयत्नेनाभितः सम्यग् आहितानि यथायोगं संस्थापितानि।**

—पद् (पद गतौ)। (कः कृष्णसर्पं) तुदत्यभिसमापन्नमङ्गुल्यग्रेण लीलया (रा० ३।१६।३)। **अभिसमापन्नमभिमुखमुपेतम्।**

# प्रति

—अञ्च् (अञ्चु गतिपूजनयोः)। प्रत्यङ् नः सुमना भव (अथर्व० ३। २०।२, ऋ० १०।१४१।१)। **अस्मान्प्रत्यञ्चन्, अस्मदभिमुखं गच्छन्।** जहि प्रतीचो अनूचः पराचः (अथर्व० ३।१।४)। **प्रतीचः प्रतिमुखमागच्छतः। पराचः पराङ्मुखं गच्छतः।** ऋतवः सर्वे पराञ्चः सर्वे प्रत्यञ्चः (श० ब्रा० १२।८।२।३५)। **प्रत्यञ्चः परावृत्ताः, अभिमुखगामिनः।**

—अञ्ज् (अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु)। प्रत्यनक्त्यवदानानि (श० ब्रा० ५।१।३।६)। नराशंसः प्रति धामान्यञ्जन् (ऋ० २।३।२)। स्रुवेण कपालानि प्रत्यज्य (आप० श्रौ० २।३।११।३)। **कपालानि प्रत्येकम् अङ्क्त्वा म्रक्षयित्वा।**

—अर्च् (अर्च पूजायाम्, वेदे दीप्तावपि)। अग्ने यत्तेऽर्चिस्तेन तम्प्रत्यर्च योऽस्मान् द्वेष्टि (अथर्व० २।१६।३)। **तं प्रत्यर्च तं दग्धुं दीप्यस्वेत्यर्थः।** स्त्रियश्च तां प्रत्यर्चयामासुः (भा०)। **पूजिताः सत्यः प्रत्यपूजयन्।**

—अर्थ् (अर्थ उपयाच्ञायाम्)। प्रत्यर्थयत राघवम् (भट्टि० ६।२५)। **प्रत्यर्थिनं कुरुतेति जयमङ्गला। तत्करोति तदाचष्ट इति णिच्। अर्थयतेस्तु नित्यमात्मनेपदित्वात्प्रत्यर्थयध्वमिति स्यात्।** आश्चर्यं मृगपोतः केसरिकिशोरकं प्रत्यर्थयिष्यते। **अभियास्यति, आक्रमिष्यतीत्यर्थः।** बहुप्रत्यर्थिकं ह्येतद्राज्यं नाम कुरूद्वह (भा० आश्रम० ३६।१२)। **प्रत्यर्थी विरोधी। विरोधिबहुलमित्यर्थः।** निर्वेदप्रत्यर्थिनी खलु प्रार्थना (मध्यम० १)। **वैराग्यविरोधिनी, औदासीन्याननुरूपा।** अपराङ्मुखतार्थिभ्यः प्रत्यर्थिभ्यो विशेषतः (स्कन्द० पु० का० ४।१६।४३)। **प्रत्यर्थिनः परिपन्थिनो द्विषन्तः।**

—अस् (असु क्षेपे)। अन्तकमु तर्हि पश्चात् प्रत्यस्येत् (श० ब्रा० ३। २।१।४)। मुखे प्रथमं प्रत्यस्यति (श० ब्रा० ३।२।१।४)। तं प्रत्यस्यामि मृत्यवे (अथर्व० ६।३६।३)। **प्रत्यस्यामि प्रतिक्षिपामि, अग्रतः क्षिपामि।** तस्मा अश्वं प्रत्यास्यत् (तै० सं० ५।७।१०।४०)। **प्रातिकूल्येनाग्रतः**

क्षिप्तवान्। अश्वेन प्रतिरुद्धवान् इत्यर्थः। शार्दूलचर्मणो जघनार्धे। सीसं निहितं भवति तत्पदा प्रत्यस्यति (श० ब्रा० ५।४।१।९)। प्रत्यस्यति आहन्ति प्रहरति, ताडयति। प्रत्यस्तरूपां भावेषु क्रियेति प्रतिजानते (वा० प० ३।८। २४)। प्रत्यस्ताऽध्यारोपिता।

—इ (इण् गतौ)। असन्तप्तं तु यद् दारु (वंशादि ऋजूकृतम्) प्रत्येति प्रकृतिं पुनः (भा० शां० १०२।३१)। प्रत्येति प्रतिगच्छति अभ्येति। प्रतीयाय गुरोः सकाशम् (रघु० ५।३५)। प्रतीयाय प्रतिनिववृते। यत्तन्निः सत्तासत्तं... प्रधानं प्रतियन्ति (यो० सू० २।१९ भाष्ये)। प्रतियन्ति अपियन्ति, अभिसंविशन्ति। अग्निर्नः शत्रून्प्रत्येतु (अथर्व० ३।१।१)। प्रत्यनीकः सन् यातु, अभिमुखं प्रातिभट्येन गच्छतु। अनिशं चिन्तयानोपि यः प्रतीयाद्रथेन तम् (भा० उ० ५२।२)। तेन (कवचेन) मामद्य संयुक्तं रथस्थमिह संयुगे। प्रतीयात् कोऽद्य मामाजौ साक्षादपि पुरन्दरः (रा० ६।९२।२९)॥ सहसैन्यानहं तांश्च प्रतीयां रणमूर्धनि (भा० उ० १७२।१३)। यः प्रतीयाद्रणे द्रोणं यावद् गच्छामि पाण्डवम् (भा० द्रोण० १११।२७)। कृष्णपार्थौ जिघांसन्तः प्रतीयुर्विविधायुधाः (भा० आदि० २२७।५९)। अत्र सर्वत्रोदितचर एवार्थः। सैषाऽन्वारम्भणीयायाः स्थानं प्रत्येति (आ० श्रौ० ८।१।५)। स्थानं प्रत्येति पदमापद्यते। कलहंसमालाः प्रतीयिरे श्रोत्रसुखैर्निनादैः (भट्टि० २।१८)। प्रतीयिरे जज्ञिरेऽनुममिरे, ज्ञप्ता अनुमिताः, उन्नीताः। उच्चावचा जनपदधर्मा ग्रामधर्माश्च, तान् विवाहे प्रतीयात् (आश्व० गृ० १।७)। प्रतीयात् निश्चिनुयात्, परिचिनुयात्, व्यवस्येत्। तं मोपयातं प्रतियन्तु विप्राः (भा० पु० १। १९।१५)। प्रतियन्तु विदाङ्कुर्वन्तु। भवतु। प्रतीमस्तावत् (प्र० च०)। तत्त्वतो विजानामेत्यर्थः। कः प्रत्येति संवेयमिति (उत्तर० ४)। प्रत्येतु कस्तद् भुवि (उत्तर०)। कः श्रद्दध्यादित्यर्थः। ततः परशुरामस्य न प्रतीमः पराभवम् (महा० च० २।१४)। किं वक्ष्ये तत्र लोकश्च प्रत्येष्यति कथं मम (कथा० २९।६७)। उक्तोऽर्थः। विभाषोपपदेन प्रतीयमाने (पा० १।३। ७७)। प्रतीयमाने द्योतिते सति। प्रतियन्तं चिदेनसः (ऋ० ८।६७। १७)। प्रतिगच्छन्तम्। बलवत्तु दूयमानं प्रत्याययतीव मां हृदयम् (शा० ५।३१)। विश्वासयति। प्रत्याय्यन्ते ते च तदानीं परलोकम् (अवदा० जा० १९)। श्रद्धाप्यन्त इत्यर्थः। तं प्रतीतं स्वधर्मेण ब्रह्मदायहरं पितुः (मनु० ३।३)। प्रतीतं ख्यातम्। सोऽयं वटः श्याम इति प्रतीतः (रघु० १३।५३)। ततः प्रतीतं प्लवतां वरिष्ठम् (रा० ४।६५।३५)। उक्तोऽर्थः। तथापि नेच्छेयमिति प्रतीतः (भा० आश्व० ६।२३)। प्रतीतः कृतनिश्चयः। भरतश्चेत्प्रतीतः स्याद्राज्यं

प्राप्यैतदव्ययम् (रा० २।४२।६)। प्रतीतः सन्तुष्टः। पतिः प्रतीतः प्रसवोन्मुखीं प्रियां ददर्श...(रघु० ३।१२)॥ प्रतीतः प्रसन्नः प्रमुदितः। भव इव षण्मुख-जन्मना प्रतीतः (बुद्ध० १।६४)। एवं राजर्षयः सर्वे प्रतीता रघुनन्दन (रा० २।१०७।१४)। प्रतीताः प्रेताः। प्रतिशब्दोऽस्थाने, न विवक्षितमर्थमुपकरोति। सुहिता एतां रात्रिं वसन्ति प्रतीता अनर्वातिमुखिनः (भा० श्रौ० ८।१३।२०)। प्रतीताः समिताः संगताः। प्रतिशब्दः प्रातिमुख्यमाह, तेन च सामीप्यं संनिकर्षो लक्ष्यते। अनर्वातिमुखिनो दारिद्र्येऽऽसंलपन्तः। अर्वातिर्दारिद्र्यम्। अप्रतीतो जयति सं धनानि (ऋ० ४।५०।६, ऐ० ब्रा० ८।२६)। शत्रुभिरितः प्राप्तः प्रतीतः, तद्विपरीतोऽप्रतीत इति सायणः। अप्रत्यृतोऽपराङ्मुख इति वयम्। अत्रार्थे न किञ्चिद् उपस्करणीयं भवतीति गुणः। यौ पत्येते अप्रतीतौ सहोभिः (अथर्व० ७।२५।१)। अप्रतिरुद्धाविति सायणः। अयमप्यप्रसिद्धोऽर्थः। प्रतिपूर्व एतिर्न क्वचिद्रोधने दृष्टः। तस्मादस्मदुक्तपूर्व एवार्थः श्रेयान्। ते प्रजापतिं पितरं प्रतीत्योचुः (श० ब्रा० २।२।४।१६)। प्रतीत्य तत्सकाशमित्वा, तमुपेत्य। ऊतीः कुर्वाणो यत्पृथिवीमचरो गुहाकारमाखुरूपं प्रतीत्य (आप० श्रौ० ५।१।१।७)। प्रतीत्य प्राप्य परिगृह्य आस्थाय। हेतून्प्रत्ययान् प्रतीत्य समाश्रित्य यः स्कन्धादीनां समुत्पादः स प्रतीत्यसमुत्पादः। न मुग्धे प्रत्येतुं प्रभवति गतः कालहरिणः (का० प्र० ७।३२७)। प्रत्येतुं प्रतिनिर्वर्तितुम्। तत्प्रत्याययि-तव्योऽसौ (प्राणः) क्रमेणारण्यहस्तिवत् (स्कन्द० पु० का० ४।४१।८०)। प्रत्याययितव्यो लालयितव्यः, क्रमेण संनियाम्यः। मूढः परप्रत्ययनेयबुद्धिः (माल० १।२)। प्रत्ययो विश्वासः। साधुकामश्च स्पृहयेन्नायतिं प्रत्ययेषु च (भा० शां० २२०।११)। प्रत्ययाः सुखदुःखानुभवाः। अपेक्षते प्रत्ययमुत्तमं त्वाम् (कु० ३।८)। प्रत्ययः कारणम्। एवं परतो धर्मश्रवणं सम्यग्दृष्ट्युत्पाद-प्रत्ययो भवति (अवदा० जा० २६)। उक्तोऽर्थः। राजप्रत्ययाः प्रजाः (अमरोद्घाटने स्वामी)। राजाधीना इत्यर्थः। अथाब्रवीन्मघवा प्रत्ययं स्वम् (भा० अनु० ६४।४३)। प्रत्ययोऽभिप्रायः। लोकवीरौ महेष्वासौ त्यक्तात्मानौ च भारत। प्रत्ययं परिरक्षन्तौ महत्कर्म करिष्यतः (भा० उ० १७०।१४)॥ प्रत्ययः शपथः। प्रत्यायनं विवादं मन्यमाना दुराशयाः (कथा० ७४।१६०)। प्रत्यायनं प्रत्ययस्य विश्वासस्योत्पादनम्।

—इष् (इष इच्छायाम्, इष गतौ)। असत्यसन्धस्य सतश्चलस्यास्थिर-चेतसः। नैव देवा न पितरः प्रतीच्छन्तीति नः श्रुतम् (रा० २।१०६।१८)॥ प्रतीच्छन्ति परिगृह्णन्ति, अभ्युपयन्ति। तदहं किञ्चिद् भवतः प्रार्थये यदि प्रतीच्छसि (तन्त्रा० १।१२)। प्रतीच्छसि अभ्युपैषि। बाढं करिष्यामीति

चेत्प्रतिजानीव इत्यर्थः । गोणीं जनेन स्म निधातुमुद्धृतामनुक्षणं नोक्षतरः प्रतीच्छति (शिशु० १२।१०) । न प्रतीच्छति नाङ्गी करोति । उक्षतरो वृद्धोक्षः । पा० ५।३।६१ सूत्रेण तनुत्वे द्योत्ये स्वार्थिकः ष्टरच् । भक्ष्यान् द्विजेन्द्रैरपि सम्प्रदत्तान्नैव प्रतीच्छन्ति विभोर्भयेन (वाम० पु० ६१।३) । उक्तोऽर्थः । उष्णार्तो हि नरो यद्वज्जलधाराः प्रतीच्छति (भा० भीष्म० ११७।२४) । प्रतीच्छति प्रहीतुमिच्छति । हन्त गृह्ण प्रतीच्छेति तावुभौ योधसत्तमौ (हरि० २।७३। ४४) । गृह्ण=गृहाण । प्रतीच्छ देहि । प्रहारमिति शेषः । प्रतीच्छ मत्कृतं धर्मं यदि ते मय्यनुग्रहः (भा० शां० १६६।८३) । प्रतीच्छ गृहाण । प्रतीच्छत्याशोकीं किसलयपरावृत्तिमधरः (भोजप्र० १।७२) । प्रतीच्छति गृह्णाति आदत्ते । अत्रागत्य स्ववासांसि प्रतीच्छन्तु शुचिस्मिताः (भा० पु० १०।२२। १६) । स्वस्यैवार्थस्य प्रत्यादित्सा प्रतीच्छाशब्दार्थः । एष उपहाररमणीयतया माधवीमण्डपः स्वागतेनेव नौ प्रतीच्छति (शा० ६) । प्रतीच्छति प्रतिगृह्णाति सभाजयति । एष खलु त्वां प्रतीच्छति (विक्रम० २) । उक्तोऽर्थः । अथाऽन्येषु प्रतीच्छामि (आप० ध० १।८।२२।६) । प्रतीच्छामि अन्विष्यामि, आप्नुमीहे । गदा शक्रजिता जिघ्ये तां प्रतीयेष वालिजः (भट्टि० १४।३६) । प्रतीयेष प्रतिजग्राह रुरोध । जिघ्य इति हिनोतेरनुपसृष्टस्य कर्मणि लिटि रूपम् । लोके केवलस्य हिनोतेः प्रयोगो दुर्लभ इति मतं नः । अथ प्रवृत्तिरागच्छेत् प्रतीच्छेत् समाश्रयम् (कृत्यकल्पतरौ द्वितीये सम्पुटे पृ० ५६ कात्यायनीयं वचनमित्युद्धृतम्) । प्रतीच्छेत् प्रतीक्षेत । तेन पापानुबन्धेन वचनं न प्रतीच्छता (रा० १।३३।४) । न प्रतीच्छता न स्वीकुर्वता, न गृह्णता, नानुतिष्ठता, नानुविदधता । स तद्बाणमयं वर्षमश्मवर्षमिवाचलः । प्रतीच्छन् पाण्डुदायादः (भा० द्रोण० १२७।६५) ॥ प्रतीच्छन् प्रतिगृह्णन्, रुन्धानः । ततः शरसहस्राणि प्रतीच्छन्तौ रणैषिणौ (हरि० २।४३।३३) । उक्तोऽर्थः । सतो बन्धुमसति निरविन्दन् हृदि प्रतीष्या कवयो मनीषा (ऋ० १०।१२६।४) । प्रतीष्या प्रतीष्य अन्विष्य । सांहितिको दीर्घः । देवस्य शासनं प्रतीष्य (शा० ६) । प्रतीष्य स्वीकृत्य, अनुमत्य । सत्कारो नाम सत्कारेण प्रतीष्टः प्रीतिं जनयति (स्वप्न० ४) ।

—ई (ईङ् गतौ) । प्रतीयन्ते न नीतिज्ञा कृतावज्ञस्य वैरिणः (कथा० ६२ १०३) । प्रतीयन्ते विश्वसन्ति श्रद्दधते, प्रतियन्ति । कुशलः प्रतिपत्ता तामग्र्याथीं प्रतीयते (वा० प० २।३१६) । प्रतीयते बुध्यते मन्यते जानाति ।

—ईक्ष् (ईक्ष दर्शने) । मित्रस्य त्वा चक्षुषा प्रतीक्षे (आप० श्रौ० ११।१३

१)। **प्रतीक्षे ईक्षे पश्यामि।** तत् (मधु) प्रतीक्षते (आग्नि० गृ० १।४)। **मधुनि दृशं पातयतीत्यर्थः।** प्रतीक्षन्ते श्वशुरो देवरश्च (अथर्व० १४।१।३९)। प्राशित्रं प्रतीक्षते (का० श्रौ० २।२।१५)। मधुपर्कमाह्रियमाणं प्रतीक्षते (वा० गृ० ११।५)। गार्हपत्यं प्रतीक्षते (तै० ब्रा० २।१।४।३)। **उक्तोऽर्थः।** किं न प्रतीक्षसेऽस्माकं गृहान्बलिभुजो यथा (भा० पु० ६।१८।१६)। **न प्रतीक्षसे न ध्यायसि, नोपास्से, न सेवसे।** तत्र मे कारणं भाति कौन्तेयो यत्प्रतीक्षते (भा० वि० २१।२)। **प्रतीक्षते तदेव सूचयन्मामवेक्षतेऽवहितमीक्षते। कारणं प्राकट्यं मा भूदिति हेतुः।** संवत्सरं प्रतीक्षेत द्विषन्तीं योषितं पतिः (मनु० ६। ७७)। **प्रतीक्षेत उदासीनवदीक्षेत। सहेतेत्यर्थः।** प्रतीक्षमाणोऽभिजनं तदार्तमनार्तरूपः प्रहसन्निवाथ (रा० २।३३।२६)। **प्रतीक्षमाणः प्रेक्षमाणः।** कस्य न प्रतीक्ष्यो मुनिभावः (हर्ष० उच्छ्वासे ८)। तथासीनं च त्रिभुवनप्रतीक्ष्यं मनुदक्षचाक्षुषप्रभृतयः प्रजापतयः सिषेविरे (हर्ष०)। भक्तिः प्रतीक्ष्येषु कुलोचिता ते (रघु० ५।१४)। **प्रतीक्ष्य आदृत्यः संभावनीयः पूज्यः।** प्रतीक्ष्यं तत् प्रतीक्ष्यायै पितृष्वस्रे प्रतिश्रुतम् (शिशु० २।१०८)। **प्रतीक्ष्यं परिपाल्यं रक्ष्यम्, प्रत्यवेक्षणीयम्।** न त्वां हत्वा प्रदास्यामि क्रव्याद्भ्यो मद्रकाधम। मित्रप्रतीक्षया शल्य धृतराष्ट्रस्य चोभयोः (भा० कर्ण० ४०।५३)॥ **प्रतीक्षाऽऽदरः।** निकारा मनुजश्रेष्ठ पाण्डवैस्त्वत्प्रतीक्षया। अनुभूताः...(भा० उ० १५९।११)॥ **अनुभूताः सोढाः।** निकारो निकृतिप्रज्ञैः पाण्डवैस्त्वत्पतीक्षया। अनुभूतः (भा० भीष्म० १५।४)। **त्वत्प्रतीक्षया त्वयि समादरेण।** तस्यारण्येनैवात ऊर्ध्वं होमो वृत्तिः प्रतीक्षाऽऽच्छादनं च (आप० ध० २।९।२२। १७)। **प्रतीक्षाऽतिथिपूजा।** घोषा द्वैतवने सर्वे त्वत्प्रतीक्षा नराधिप (भा० वन० २२९।१९)। **त्वत्प्रतीक्षास्त्वां प्रतीक्षमाणाः प्रतिपालयन्तः।** तत्प्रत्ययमुदकमुत्सिच्याप्रतीक्षा ग्राममेत्य (आप० ध० २।६।१५।९)। **प्रतीक्षा प्रतिनिवृत्य ईक्षणम्, पृष्ठतो विलोकनम्। अप्रतीक्षा अविद्यमानप्रतीक्षाः, पृष्ठतोऽनवलोकयन्तः, अपराङ्मुखीभूताः।** अहं चाप्रतीक्षमेव सङ्ग्रामभूमिमागतः (महावीर० पृ० २०३, निर्णय०)। **इदं क्रियाविशेषणम्। अपराङ्मुखीभूयेत्यर्थः।** अप्रतीक्षमायन्ति (तै० ब्रा० १।६।५)। **उक्तोऽर्थः।**

—**ईड् (ईड स्तुतौ)।** प्रति त्वा स्तोमैरीडते वसिष्ठाः (ऋ० ७।७६।६)।

—**उष् (उष दाहे)।** स त्वमग्ने प्रतीकेन प्रत्योष यातुधान्यः (ऋ० १०। ११८।८, तै० सं० २।५।१२।४)। **प्रत्योष प्रतिमुखं प्रत्येकं वा दह। यातुधान्यः=यातुधानीः।** प्रति तमोष यः प्रत्युष्यः (श० ब्रा० १।९।३।२)। **प्रत्योष=ओष। सद्यो वा दहेत्यर्थः।** प्रत्युष्टं रक्षः प्रत्युष्टा अरातयः (वा०

सं० १।७)। प्रत्युष्टं=प्रत्युषितम्। प्रविज्ञाय उषितं दग्धमिति उवटः। प्रत्युष्टाः प्रत्येकं दग्धा इति च सः। उभयत्रार्थभेद एव तु युक्तः।

—ऊह् (ऊह वितर्के)। विद्युद्वन्ती प्रति वव्रिमौहत (ऋ० १।१६४।२९)। प्रत्यौहत व्यवादधात्, आच्छादयत्, तिरोधत्त, उपसमहरत्, अपाकरोत्। वव्रि रूपम्। प्रत्यौहन्मृत्युममृतेन साकम् (अथर्व० ५।२८।८)। प्रत्यौहताम-श्विना मृत्युमस्मत् (वा० सं० २७।९, अथर्व० ७।५५।१)। उक्तोऽर्थः। प्रत्यू-हेन्नाग्निषु क्रियाः (मनु० ५।८४)। अग्निहोत्रहोमान्न विघातयेदित्यर्थः। तत्र प्रत्यूहमन्तरायं न कुर्यादिति यावत्। पशून्देवताभ्यः प्रत्यौहत (श० ब्रा० १०।६।५।८)। प्रत्यौहत समार्पयत् पशून्देवतासादकरोत्। स प्रत्यूढानङ्गारान् प्रत्यूहेत् (शां० ब्रा० २।१)। प्रत्यूहेत्=व्यूहेत्, विविक्ततया विस्तारेण रचयेत्। न पास्ये न च भोक्ष्ये प्रत्यूढं मम भोजनम् (रा० ५।३१।१४)। प्रत्यूढमनादरेण पराकृतं त्यक्तम्। एवमेवेमाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विदन्त्य-नृतेन हि प्रत्यूढाः (छां० ८।३।२)। प्रत्यूढा विपरीतं नीताः। इतीन्द्रदूत्याः प्रतिवाचमर्धे प्रत्युह्य सैषाऽभिदधे वयस्याः (नै० ६।१०१)। प्रत्युह्य विहत्य, प्रतिबध्य, विच्छिद्य।

—ऋ (ऋ गतिप्रापणयोः)। अनर्वाऽप्रत्यृतोऽन्यस्मिन् (नि० ६।२३।४)। प्रत्यृत आश्रितः (इति दुर्गः)। अरणी प्रत्यृत एने अग्निः (नि० ५।१०।१)। प्रत्यृतः प्रतिगतोन्तर्निविष्टः।

—काश् (काशृ दीप्तौ)। निभसंकाशनीकाशप्रतीकाशोपमादय इति सदृशपर्यायान्पठत्यमरः।

—कूज् (कुज अव्यक्ते शब्दे)। एष क्रोशति दात्यूहस्तं शिखी प्रतिकूजति (रा० २।५६।९)। प्रतिकूजति दात्यूहं स्पर्धमानः कूजति।

—कृ (डुकृञ् करणे)। इत्येवमग्निविषसर्पेभ्यः प्रतिकुर्वीत (कौ० अ० १।२०।९)। अग्न्यादीनां प्रतिविधानं कुर्यादित्यर्थः। न तं पश्यामि लोकेस्मि-न्कृते प्रतिकरोति यः। सर्वस्य हि कृतार्थस्य मतिरन्या प्रवर्तते (भा०)॥ कृते उपकृते प्रतिकरोति प्रत्युपकारं करोति। मयास्योपकृतं पूर्वमयं प्रतिकरिष्यति (का० नी० सा० ६।११)। पूर्वं कृतार्थो मित्राणां न तत् प्रतिकरोति यः। कृतघ्नः सर्वभूतानां वध्यः प्लवगेश्वर (रा० ३।३४।१०)॥ कृतं न प्रतिकुर्याद्यः पुरुषाणां स दूषकः (रा० ४।३८।२८)। उक्तोऽर्थः। कृतार्थः पूर्वमार्येण नार्थं प्रतिचिकीर्षति (रा० ४।३४।२०)। प्रत्युपकर्तुं नेच्छति। वैरं प्रतिकुरुष्वेह तस्मिन् (रा० ३।३८।२२)। प्रतिनिर्यातयेत्यर्थः। व्याधिमिच्छामि ते ज्ञातुं

प्रतिकुर्यां हि तत्र वै (भा० आदि० ४०२७) । **प्रतिकुर्याम् उपचरेयम् चिकित्सेयम् भैषज्यं कुर्याम्।** पाण्डवा अपि तत्सर्वं प्रतिचक्रुर्यथागतम् (भा० आदि० १४१।२२) । **प्रतिचक्रुः=अपाकुर्वन्, न्यवारयन्, अपोहन्त प्रत्यघ्नन्।** नास्य प्रत्यकरोद्वीर्यं विक्लवेनान्तरात्मना (रा० ६।८८।३४) । **उक्तोऽर्थः।** संक्रमध्वजयष्टीनां प्रतिमानां च भेदकः। प्रतिकुर्याच्च तत्सर्वम्...(मनु० ६।२८५) ॥ **प्रतिकुर्यात् प्रसाधयेत, समादध्यात्, पुनर्नवाः कुर्यात्।** पुर इमाँल्लोकान् प्रतिकरवामहा इति (ऐ० ब्रा० १।२३)। **असुराणां प्रतिकूलानि सम्पादयाम इति सायणः।** अनायतना ह वै स्मः, तस्मात्पराजयामहा इति एतास्ताः प्रत्यकुर्वत हविर्धानं दिव आग्नीध्रमन्तरिक्षात् सदः पृथिव्याः (गो० ब्रा० उ० २।७)। **प्रत्यकुर्वत विरोधायाकुर्वत निरमिमत।** भीष्मे प्रतिचिकीर्षामि (भा० उ० १८७।६)। **भीष्माय वैरं निर्यातयितुमिच्छामीत्यर्थः।** कृते प्रतिकरिष्यन्तः केशवस्यार्जुनस्य च (भा० द्रोण० १०४।१८)। **प्रतिकर्तुकामाः प्रत्यपकारबुद्धयः।** वयं च मन्युना दग्धा वैरं प्रतिचिकीर्षवः (भा० स्वर्गा० १।२१)। **वैरं निर्यातयितुमिच्छन्त इत्यर्थः।** अकृतज्ञोऽप्रतिकृतो हन्ति सत्त्ववतां मनः (रा० ४।२७।४५)। **अप्रतिकृतः=अकृतप्रत्युपकारः।** कर्तास्मि कृते प्रतिकृतं तव (भा० वन० १८७।६)। **उक्तोऽर्थः।** प्रतिकर्तुं प्रकृष्टस्य नापकृष्टेन युज्यते (रा० ४ १७।४७)। **प्रतिकर्तुं प्रत्युपकर्तुम्, कृतमुपकारं प्रणिदातुम् प्रत्यर्पयितुम्।** प्रतिकर्तुं बलवति नहुषे देवमोहिते। पितामहनियोगेन भवन्तं सोऽहमागतः (भा० अनु० अनु० ९९।२२) ॥ **प्रतिकर्तुं प्रतिविधातुम् प्रत्यपकर्तुम्।** न शेकुरतिकायस्य प्रतिकर्तुं महाहवे (रा० ६।७१।४२)। **उक्तोऽर्थः।** कृते च प्रतिकर्तव्यमेष धर्मः सनातनः (रा० ५।१।११४)। कृत उपकृते। **प्रतिकर्तव्यं प्रत्युपकर्तव्यम्।** व्याधशाकुनिकपतितपापकारिणां न च प्रतिकर्तव्यम्। **नैवोपचरितव्यम्। तेषु भिषक्कर्म न प्रयोज्यमित्याह।** प्रतिकृत्य यथाकामं शत्रूणां शत्रुसूदनः (भा० सौ० १।४४)। **प्रतिकृत्य वैरं निर्यात्य।** व्याधिमप्रतिकृत्य। **अचिकित्सित्वा, उपचारमकृत्वा।** परिजनोपनीतमपि प्रतिकर्म नाग्रहीत् (हर्ष०)। **प्रतिकर्म प्रसाधनम्। अङ्गसंस्कारोपकरणम्।** प्रतिकर्म च रामस्य कारयामास वीर्यवान् (रा० ६।१२८।१६)। **प्रतिकर्माङ्गसंस्कारः।** विभूषितेयं प्रतिकर्मनित्या वसत्वरण्ये सह राघवेण (रा० २।३७।३५)। उषिताः स्मो वने वासं प्रतिकर्म चिकीर्षवः (भा० वि० ५८।१८)। **प्रतिकर्म शत्रूणामपकारः।** ऋचीकस्तु महातेजाः पुत्रस्याप्रतिकर्मणः (रा० १।७५।२२)। **अप्रतिकर्मणः प्रतिक्रियारहितस्य। स्वघातके कार्तवीर्ये शापादिप्रतिकारशून्यस्येत्यर्थः।** सा कृष्णमाराधय सौहृदेन प्रेम्णा च नित्यं प्रतिकर्मणा च (भा० वन० २३४।४)। **प्रतिकर्मणा**

कायक्लेशेनेति नीलकण्ठः। कथमस्यार्थस्योपलब्धिरिति न विजानीमः। मिथ्योपचारः प्रतिकर्मणां च (चरक० चि० १२।)। प्रतिकर्म प्रतिक्रिया वमनादिः। प्रतिकर्मपराचार ऋत्विजां स्म विधीयते (भा० शां० ७६।२)। शान्तिकपौष्टिकादि कर्म प्रयोगशुद्ध्याख्यम्। यश्चास्य वैद्यः प्रतिकर्म करोति (चरक० सूत्र० २६।६)। प्रतिकर्म प्रतिक्रिया चिकित्सा, भैषज्यम्। उपकारेण वीरस्तु प्रतिकारेण युज्यते (रा० ४।२७।४५)। प्रतिकारः प्रत्युपकारः। विकारं खलु परमार्थतोऽज्ञात्वाऽनारम्भः प्रतीकारस्य (शा० ३)। प्रतीकार उपचारः चिकित्सा। प्रतीकारो व्याधेः सुखमिति विपर्यस्यति जनः (भर्तृ० ३।६२)। उक्तोऽर्थः। प्रियस्य भर्तुः प्रतिकारकामा (रा० २।३७।३७)। अनुकार इह प्रतिकारः। प्रतिः सादृश्ये। वेषादिभिस्तदवस्थासदृशावस्थासम्पादनकामेत्यर्थ इति तिलकः। खलानां कण्टकानां च द्विविधैव प्रतिक्रिया। उपानन्मुखभङ्गो वा दूरतो वा विसर्जनम्॥ प्रतिक्रिया प्रतिकारः प्रतिविधानम्। भैक्षेणाप्यर्जयिष्यामि पुनर्न्यास-प्रतिक्रियाम् (मृच्छ० ३।२६)। प्रतिक्रिया निर्यातनम्, प्रत्यर्पणम्। मङ्गलालम्भनं चैव शरीरस्य प्रतिक्रिया (भा० शां० ५६।६६)। प्रतिक्रिया प्रतिकर्म अलङ्क्रिया। तत्राप्रतिकारिणोऽपचारिणश्च रोगो व्यक्ततरः (सुश्रुत० चि० ५।४)। अप्रतिकारी यो भैषज्यं न कारयति। अपचारी अयथार्थकारी। सा तु रज्ज्वादिभिर्बद्धा विषप्रतिकरी मता (सुश्रुत० उत्तर० सर्प० कल्प० ५।५)। विषप्रतिकरी विषप्रतिकारहेतुः।

—कृष् (कृष विलेखने)। प्रतिकृष्टं मतं गुह्ये द्विरावृत्त्यां च कर्षिते। प्रतिकृष्टः प्रेषिते स्यात्प्रत्याख्याते च वाच्यवत् (विश्वः)॥ निकृष्टप्रतिकृष्टार्वयाप्यरेफावमाधमाः (अमरः)। उत्सर्जनस्य वा प्रतिकर्षः (आप० ध० १।६।३ इत्यत्रोज्ज्वलायाम्)। भविष्यतोऽर्थस्य प्राक् सम्भावनं प्रतिकर्षः।

—कॄ (कॄ विक्षेपे)। उरोविदारं प्रतिचस्करे नखैः (शिशु० १।४७)। प्रतिचस्करे हतः (हिंसितः)। निरङ्कुशः कविरस्थाने किरतेः सुटं करोति। प्रतिस्कीर्णं हं ते वृषल भूयात्। तथा ते वृषल विक्षेपो भूयाद्यथा हिंसामनुबध्नाति (हिंसायां प्रतेश्च ६।१।१४१ सूत्रे वृत्तिः)।

—क्लृप् (कृपू सामर्थ्ये)। तद्यथा राजानमायान्तमुग्राः प्रत्येनसः सूतग्रामण्योऽन्नैः पानैरावसथैः प्रतिकल्पन्ते (श० ब्रा० १४।७।२।४३)। प्रतिग्रहीतुं सम्भावयितुं सज्जन्त उद्यता भवन्तीति यावत्।

—क्रम् (क्रमु पादविक्षेपे)। तदु ह जानश्रुतिः पौत्रायणः षट् शतानि गवां

निष्क्रमश्वतरीरथं तदादाय प्रतिचक्रमे (छां० उ० ४।२।१)। **प्रतिचक्रमे प्रतिजगाम।** भद्रे प्रतिक्राम नियच्छ वाचम् (भा० वन० १६६।२३)। **प्रतिक्राम निवर्तस्व इतः प्रतियाहि। गृहान् प्रतिनिवर्तस्व।**

**—क्रुध्** (**क्रुध क्रोधे**)। क्रुध्यन्त न प्रतिक्रुध्येत् (मनु० ६।४८)।

**—क्षि** (**क्षि निवासगत्योः**)। आ त्वा जिघर्मि मनसा घृतेन प्रतिक्षियन्तं भुवनानि विश्वा (ऋ० २।१०।४)। **विश्वानि भुवनानि प्रत्येकमधिवसन्तम्। अधितिष्ठन्तम्।**

**—क्षिप्** (**क्षिप प्रेरणे**)। प्रतिक्षिपन्तः संसारमिहिकावरणं वयम् (यो० वा० ५।४।३०)। **प्रतिक्षिपन्तः प्रास्यन्तः पराकुर्वन्तः। प्रतिक्षिप्तोऽधिक्षिप्त इत्यमरः। प्रतिक्षिप्यते न्यक् क्रियते स्मेति स्वामी।** अग्नावेनां प्रतिक्षिप्य (भा० आदि० )। **प्रतिक्षिप्य=प्रास्य।** न हि सामान्यमात्रलक्षणेनोपयोगिविशेषलक्षणानां प्रतिक्षेपः शक्यः कर्तुम् (ध्वन्या० ३।३३ इत्यत्र लोचने)। तस्य प्रदीपादिनिष्ठस्य वास्तवस्य शब्दार्थ-विषयत्वस्य प्रतिक्षेपात् (व्यक्ति० १)। **प्रतिक्षेपो निरासोऽनङ्गीकारः।**

**—ख्या** (**ख्या प्रकथने, चक्षिङ आदेशो वा**)। तामस्य रीतिं परशोरिव प्रत्यनीकमख्यम्...(ऋ० ५।४८।४)। **प्रत्यख्यम् ऐक्षिषि।** तं हो प्रतिख्यायोवाच (याज्ञवल्क्यः) (श० ब्रा० ११।६।३।३)। **प्रतिख्याय=अभिवीक्ष्य।** अशनायां ह वा एषा यजमानस्य प्रतिख्याय वाश्यते तामन्नभप्यादयेच्छान्त्यै (ऐ० ब्रा० ५।२७)। **प्रतिख्याय प्रख्याप्य सूचयित्वा।** पाप्मानं प्रतिख्याय (तै० ब्रा० १।४।६।२)। **प्रख्याप्येत्यर्थः।**

**—गद्** (**गद व्यक्तायां वाचि**)। आभिर्गाथाभिरव्यग्रः प्रश्नं प्रतिजगाद ह (भा० अनु० १२४।८)। **प्रतिजगाद प्रत्युवाच।**

**—गम्** (**गम्लृ गतौ**)। प्रकर्षेणानित्यः स विज्ञायते। स पुनः सत्येवाश्रयेऽभूत्वा भवतीति यो भूत्वा प्रतिगच्छति स एव भवितुमर्हति (वर्णे चानित्ये ५।४।३१ सूत्रे न्यासः)। अहं न तान् (लोकान्) वै प्रतिगन्ता (भा० आदि० ६३।५)। **प्रतिगन्ता=प्रतिगन्तास्मि=निर्वर्तिताहे।** प्रतिजग्मुर्यथागतम् (नै० ५।३६)। **उक्तोऽर्थः।** तस्य सन्दिदिहे बुद्धिस्तां दृष्ट्वा तद्विनिर्णये। अधीतां योगहीनस्य विद्यां प्रतिगतामिव (रा० ५।१८।१८)॥ **प्रतिगतां विस्मृताम्।** प्रयतेनात्मना तात प्रतिगम्याभिवादय (भा० वन० १४२।१०)। **प्रतिगम्य=उपेत्य=तत्सकाशमित्वा।**

—गर्ज् (गर्ज अव्यक्ते शब्दे)। कृष्टासेः प्रतिबिम्बं स्वं हित्वा नान्योऽस्य संमुखः। नापरः प्रतिशब्दाच्च गर्जतः प्रतिगर्जति (राज० ८।१५६३)॥ प्रतिगर्जति प्रतिद्वन्द्वितया गर्जति। अहो अयोनिजोपमा कवेः। ऋषीणां कदनं कृत्वा गर्जति मामपि प्रतिगर्जति। सिंहो घनध्वनिं प्रतिगर्जति। उक्तोऽर्थः।

—गाह् (गाहू विलोडने)। प्रतिगाहन्ते वनानि (रा० ३।७६।३४)। प्रतिगाहन्तेऽन्तः प्रविशन्ति, हठात् प्रविशन्तीति वा।

—गुप् (गुपू रक्षणे)। प्रतिगुप्त० (श० ब्रा० ३।२।२।२७)। प्रतिगुप्तः=गुप्तः=रक्षितः, कृतावेक्षणः, कृतप्रतिजागरः।

—गुह् (गुहू संवरणे)। प्रत्यगूहुर्महानद्यः (भा० सौ० १।३)। प्रत्यगूहुः प्रत्यगूहन् (प्रत्यगूहन्त) अन्तरदधत, तिरोऽदधत।

—गृध् (गृधु अभिकाङ्क्षायाम्)। आघ्राय सुबहून्गन्धांस्तानेव प्रतिगृध्यति (भा० आश्व० ३०।६)। तेषु गन्धेषु गृध्यति लुभ्यतीत्यर्थः। प्रतिः केवलं सकर्मकतां प्रयोजयति नार्थे विशेषं करोति।

—गॄ (गॄ शब्दे)। प्रति वां सूर उदिते मित्रं गृणीषे वरुणम् (ऋ० ७।६६।७)। प्रतिगृणीषे उपह्वयसि, स्तौषि। प्रति षीमग्निर्जरते समिद्धः। प्रति विप्रासो मतिभिर्गृणन्तः (ऋ० ७।७८।२)॥ उक्तोऽर्थः। शंसावाध्वर्यो प्रति मे गृणीहि (ऋ० ३।५३।३)। प्रतिगृणीहि प्रतिवाचं ब्रूहि। ओमुन्नय हव्य देवेभ्यः पाप्मनो माम् इत्युच्चैः प्रतिगृणाति (भा० श्रौ० ६।११।२)। प्रतिशंसतीत्यर्थः। होत्रेऽनुगृणाति होत्रे प्रतिगृणाति। होतारं शंसन्तं प्रोत्साहयतीत्यर्थ इति अनुप्रतिगृणश्च (पा० १।४।४१) इति सूत्रे वृत्तिः। ओमामोदैव इत्यादिको होतुरुत्साहजननः प्रतिगरः (आश्व० श्रौ० ७।११)। ओम् इत्यध्वर्युः प्रतिगरं प्रतिगृणाति (तै० सं० १।८।१)। उक्तोऽर्थः। प्रत्यगृणात्तस्मै लक्ष्मणः (मुग्ध-बोधव्याकरणे)। इत्युदाहरन्मुग्धो बोपदेवो वृत्ति-विरोधावुपेक्ष्यः। प्रतिशंसने होतृकर्मकेऽध्वर्युकर्तृके प्रतिनियतः प्रतिगृणातिरनन्यविषयः। अनुगरः प्रतिगरः शंसितुः (होतुः) प्रोत्साहने वर्तते इति पा० १।४।४१ सूत्रे वृत्तिः।

—ग्रह् (ग्रह उपादाने)। केनेमान् कामान् प्रतिग्रहीष्यामः (श० ब्रा० ६।३।२।७)। प्राप्स्याम इत्यर्थः। तां चार्जुनः प्रत्यगृह्णात्सुतार्थे (भा० आदि० १।१७१)। तामुत्तरां सुतस्याभिमन्योरर्थेऽभ्युपैदित्यर्थः। प्रतिजग्राह चाग्निस्तु राजकन्यां सुदर्शनाम् (भा० अनु० २।३४)। प्रतिजग्राह अभ्युपजगाम आददे

**उपयेम इत्यर्थः** । प्रतिग्रहीता तामस्मि न भरेयं च यामहम् (भा० आदि० ४६। ६) । **उक्तोऽर्थः** । न तु पापकृतां राज्ञां प्रतिगृह्णन्ति साधवः (भा० अनु० ६१। ५) । **न प्रतिगृह्णन्ति, दानं न प्रतीच्छन्ति** । ददति प्रतिगृह्णन्ति षट्सु कर्म्मस्ववस्थिताः (भा० शां० ७७।११) । रथन्तरं प्रतिगृह्णाति पश्चात् (अथर्व० १३।३।११) । **प्रतिगृह्णाति अवलम्बते** । परशुं तप्तं प्रतिगृह्णाति (छां० उ० ६।१६।१) । स चैनं वृत्तपीनाभ्यां बाहुभ्यां प्रत्यगृह्णत (भा० वन० ४३।१६) । **प्रत्यगृह्णत=प्रत्यगृह्णात्, प्रत्यगृह्णीत=पर्यरभत=उपागूहत =पर्यष्वजत । स इन्द्रः । एनं कौन्तेयम्** । अभिपद्य च बाहुभ्यां प्रत्यगृह्णादमर्षितः । मातङ्गमिव मातङ्गः प्रभिन्नकरटामुखम् (भा० वन० ११।५६) ॥ **प्रत्यगृह्णादवालम्बत उपापीडयत्, अबाधत** । ते तं ...मङ्गलानि प्रयुञ्जानाः प्रत्यगृह्णन्दृढव्रताः (रा० ३।१।११ कतकधृतः पाठः) । **प्रत्यगृह्णन् असभाजयन्, समभावयन्, सदकुर्वन्** । अभिवादयमानं त्वां पाणिभ्यां भीमपूर्वजः । प्रतिगृह्णातु सौहार्दात् कुन्तीपुत्रो युधिष्ठिरः (भा० उ० १३८।१४) ॥ **उपेतं त्वाम् आद्रियताम् इत्याह**। दृष्ट्या प्रसादामलया कुमारं प्रत्यग्रहीत्संवरणस्रजेव (रघु० ६।८०) । **प्रसन्नावदातया दृशा कुमारं समभीमवदित्यर्थः** । स चापि प्रतिजग्राह धर्मेण विदुरं ततः (भा० आदि० २०६।१०) । **आतिथ्येन सच्चकारेत्यर्थः** । स रामं सर्वकामैस्तं भरद्वाजः प्रियातिथिम् । सभार्यं सह च भ्रात्रा प्रतिजग्राह हर्षयन् (रा० २।५४।३३)॥ **प्रतिजग्राह कामैः काम्यैः पदार्थैरुपचचारेति यावत् । आतिथ्येन वशीकृतवानिति तिलकः** । प्रत्यगृह्णाद् यथान्यायं विदुरश्च महामनाः (भा० आश्व० ६६।६) । **तानागतान्सदकरोदित्यर्थः** । स चैनं प्रतिजग्राह विधिदृष्टेन कर्मणा (भा० उ० ४१।६) । **उक्तोऽर्थः । विधिदृष्टेन कर्मणा मधुपर्कादिना** । कच्चिद् वचः प्रतिगृह्णाति तत्त्र (भा० आश्व० ६।२१)। **प्रतिगृह्णाति अनुरुणद्धि अनुसरति, अनुमन्यते** । तद्वाक्यं......न प्रतिजग्राह मर्तुकाम इवौषधम् (रा० ३।४४।१) । तथेति च नृपस्याज्ञां मन्त्रिणः प्रतिगृह्णते (रा० १।११।१८) । **उक्तोऽर्थः** । एवं शप्तस्तु गुरुणा प्रत्यगृह्णात्कृताञ्जलिः (भा० पु० ६।२।१०) । प्रियमाख्यामि ते देवि राघवस्य महाजयम् । धर्मज्ञे वर्धसे दिष्ट्या जयोऽयं प्रतिगृह्यताम् (रा० ६।६८।६)॥ **प्रतिगृह्यतां समुपजोषं बुध्यतां श्रूयताम्** । तं देवासः प्रति गृभ्णन्त्यश्वम् (ऋ० १।१६२।१५) । **प्रतिगृभ्णन्ति प्रतिगृह्णन्ति प्रतीच्छन्ति स्वीकुर्वन्ति** । एष ह वै कुणपमत्ति यः सत्रे प्रतिगृह्णाति । **प्रतिग्रहं दानमादत्ते**। गायतश्च मत्तस्य च न प्रतिगृह्यं यत्प्रतिगृह्णीयाच्छमलं प्रतिगृह्णीयात् (तैं० ब्रा० १।३।२।७) । **उक्तोऽर्थः** । ये दानशीलान् प्रतिगृह्णते सदा न चाप्यर्थांश्चाददते परेभ्यः (भा० अनु० १०२।३०) । सो अर्णवो न नद्यः समुद्रियः प्रति गृभ्णाति । (ऋ० १।५५।२)। **प्रतिगृभ्णाति आत्मन्यन्तर्धत्ते, समावेशयति** ।

**वशा** यज्ञं प्रत्यगृह्णाद् वशा सूर्यमधारयत् (अथर्व० १०।१०।२५) । **उक्तोऽर्थः** । यथा हि गोवृषो वर्षं प्रतिगृह्णाति लीलया (भा० द्रोण० १२८।१७) । **प्रतिगृह्णाति सहते** । प्रतिजग्राह कालिङ्गस्तमस्त्रैर्गजसाधनः (रघु० ४।४०) । **प्रतिजग्राह रुरोध** । तानि मुक्तानि शस्त्राणि...। प्रतिजग्राह विशिखैर्नद्योघानिव सागरः (रा० ३।२५।१३) ॥ अवरुरोधेति तिलकः । तत्र द्रुमाणां शिलानां च वर्षं प्राणहरं महत् । प्रतिजग्राह धर्मात्मा राघवस्तीक्ष्णसायकैः (रा० ३।२६।३-४) ॥......सायकैः शितैः । तीक्ष्णाग्रैः प्रतिजग्राह सम्प्राप्तानतिथीनिव (रा ३।२६।२०) । तं शरैः प्रतिजग्राह (रघु० १२।४७) । उक्तोऽर्थः । तुरगादीनि भिन्नानि प्रतिगृह्णाति यद्बलम् । प्रतिग्रह इति ख्यातः स तु कार्यो भरक्षमः (का० नी० सा० २०।४ इत्यत्र प्रक्षिप्तः श्लोकः)॥ **निगदव्याख्यातम्** । यस्त्वा शाले प्रतिगृह्णाति (अथर्व० ६।३।६) । **प्रतिगृह्णाति वासाय परिगृह्णाति स्वीकरोति** । अन्येन पात्रेण पशून्दुहन्ति, अन्येन प्रतिगृह्णन्ति (तै० ब्रा० १।४।१५) । **प्रतिगृह्णन्ति मुखेन सन्धाय गृह्णन्ति अश्नन्ति** । प्रयम्यमानान् (सोमान्) प्रति षू गृभाय (ऋ० ३।३६।२) । उक्तोऽर्थः । एकाहमपि पश्येयं यद्यहं राममातरम् । अञ्जलिं प्रतिगृह्णन्तीम्... ...(रा० २।१२।४८) ॥ **अञ्जलिबन्धं सत्कारं प्रतीच्छन्तीम्** । प्रतिगृह्णन्नविद्वांस्तु भस्मीभवति दारुवत् (मनु० ४।१८८) । **प्रतिगृह्णन् दानमाददानः** । स्तुवतो दुहिता त्वं वै याचतः प्रतिगृह्णतः । अथाहं स्तूयमानस्य ददतोऽप्रतिगृह्णतः (शर्मिष्ठादेवयान्योः संवादगाथा, बौ० ध० २।२।४।२७) ॥ **उक्तोऽर्थः** । मुष्टं प्रतिग्राहयता स्वमर्थं पात्रीकृतो दस्युरिवासि येन (शा० ५।२०) । तन हि वर्षवरप्रतिगृहीतमेनं तत्र भवतः सकाशं प्रापय (माल० ४) । **प्रतिगृहीतमवलम्बितम् अवष्टब्धम्** । प्रतिगृहीतं वचः सिद्धिदर्शिनो ब्राह्मणस्य (माल० ३) । सखे त्वमम्बया पुत्र इति प्रतिगृहीतः (शा० २) । **प्रतिगृहीतः स्वीकृतः** । जाया-प्रतिग्राहितगन्धमाल्याम् (रघु० २।१) । **प्रतिग्राहिते स्वीकारिते** । प्रतिग्राहितविप्रप्रकीर्यमाणशान्त्युदकविप्रुषि (हर्ष० पञ्चम उच्छ्वासे) । **प्रतिग्राहिता विप्राः स्वीकारिताः प्रतिग्रहं प्रतिपादिताः** । तेषामञ्जलिपद्मानि प्रगृहीतानि सर्वशः । प्रतिगृह्य......(रा० २।३।१) ॥ **प्रतिगृह्य स्वीकृत्य प्रतीष्य** । प्रतिगृह्येप्सितं दण्डम् (मनु० २।४८) । **प्रतिगृह्य गृहीत्वा** । प्रतिगृह्याप्यनध्यायः (शां० गृ० ४।७।५५) । **प्रतिग्रहं गृहीत्वा** । विधिवत् प्रतिगृह्यापि त्यजेत्कन्यां विगर्हिताम् (मनु० ६।७२) । **विधिनोपयम्येत्यर्थः** । प्रतिगृह्य तु कैकेयी श्वशुरं सुकृतेन मे (रा० ३।४७।७) । **प्रतिगृह्य स्वीकृत्य वशेकृत्वा, आत्मसात् कृत्वा प्राध्वंकृत्य** । ग्रामादाहृत्य वाऽनीयादष्टौ ग्रामान्वने वसन् । प्रतिगृह्य

पुटेनैव पाणिना शकलेन वा (मनु० ६।२८) ॥ प्रतिगृह्य आदाय। नरः प्रतिग्राह्य महीं न याति परमापदम् (भा० अनु० ६२।३२)। प्रतिग्राह्य प्रदिश्य वितीर्य दत्त्वा। यदि चास्मि प्रतिग्राह्यः साम्प्रतं तद् वदस्व मे (भा० आश्व० ५७।११)। प्रतिगृह्यतेऽस्मादिति प्रतिग्राह्यः। प्रतिग्रहे योग्य इत्यर्थः। अपादाने कृत्यो बाहुलकात्। नास्माभिः प्रतिग्राह्यं सखे देयं तु सर्वदा (रा० २।८७।१७)। न प्रतिग्राह्यं दानमिति न ग्राह्यम्। इयं भरतोक्तिः। स ते प्रतिग्रहीतव्यः सौमित्रिसहितोऽतिथिः (रा० ३।७४।१६)। प्रतिग्रहीतव्यः प्रत्येषणीयः सत्कर्तव्यः संभावनीयः। प्रतिग्रहसमर्थोऽपि प्रसङ्गं तत्र वर्जयेत् (मनु० ४।१८६)। यत् प्रतिगृह्यते स्वीक्रियत आदीयते याचमानैरयाचमानैर्वा विप्रादिभिः क्षत्रियादिभ्यः स प्रतिग्रहः। प्रतिग्रहाद्याजनाद्वा तथैवाध्यापनादपि। प्रतिग्रहः प्रत्यवरः····(मनु० १०।१०६) ॥ निन्दितादसतः प्रतिग्रह इति कुल्लूकः। तत्र निन्दितादित्युक्तिरमूला। राज्ञः प्रतिग्रहोऽयम् (शा० १)। प्रतिग्रह उपहारः प्राभृतकमुपदा। प्रतिग्रहाय कृष्णस्य यमौ प्रास्थापयत्तदा (भा० आदि० २२१।३४)। प्रतिग्रहाय सन्मानेनानेतुम्। प्रतिग्रहाय पाण्डूनां प्रेषयामास कौरवान् (भा० आदि० २०७।१२)। प्रत्युद्गमनायेत्यर्थः। तां सर्वशक्त्या प्रहितां सुशक्ति······। प्रतिग्रहायाभिननर्द शल्यः (भा० शल्य० १७।४६)। प्रतिग्रहाय=प्रतिवारणाय। यश्च बाल एव प्रीत्या द्विजातीनप्रीत्या चारातीन् समग्रान् प्रतिग्रहानग्राहयत् (हर्ष० ७मे उच्छ्वासे)। प्रतिग्रहः सैन्यपश्चाद्भागः। तथा चामरः—सैन्यपृष्ठे प्रतिग्रहः। पृष्ठानीकाद् द्विशतधनुर्व्यवहितं पृष्ठतोऽवस्थितं राजावस्थानं प्रतिग्रह उच्यते (का० नी० सा० २०।३० इत्यत्रोपाध्यायनिरपेक्षा)। निगदव्याख्यातम्। अजः केशप्रतिग्राहाय (गो० गृ० ३।१।६)। केशप्रतिग्राहः केशकल्पको नापितः। प्रतिग्राहः पतद्ग्रहः (इत्यमरः)। श्रोत्रिया अप्रतिग्राहका उपसमेता भवन्ति (श० ब्रा० १३।४।३।१४)। अप्रतिग्राहका ये न प्रतिगृह्णन्ति दानं न स्वीकुर्वते। अप्रतिग्राहिणां चैव यतीनामूर्ध्वरेतसाम् (भा० वि० १८।२२)। उक्तोऽर्थः।

—चक्ष् (चक्षिङ् व्यक्तायां वाचि, छन्दसि दर्शनेऽपि)। प्रति यच्चष्टे अनृतमनेना अव द्विता वरुणो मायी नः सात् (ऋ० ७।२८।४)। प्रतिचष्टे प्रतिपश्यति। स्वसा स्वस्रे ज्यायस्यै योनिमारैगपैत्यस्याः प्रतिचक्ष्येव (ऋ० १।१२८।४)॥ उक्तोऽर्थः। स्वसारावुषसौ। प्रति चक्ष्व वि चक्ष्वेन्द्रश्च सोम जागृतम् (अथर्व० ८।४।२५)। प्रतिचक्ष्व प्रतिकूलं प्रत्येकं वा पश्य। यदा त्वं सर्वभूतेषु दारुष्वग्निमिव स्थितम्। प्रतिचक्षीत मां लोकः (भा० पु० ३।६।३२)

प्रतिचक्षीत पश्येत् । छन्दश्छायानुकार्येव कविः । लोके तु दर्शनेऽर्थे प्रयोगः सुदुरापः । प्रत्यचष्ट'''द्विजागमनमेव सः (भा० पु० ६।४।४१) । प्रत्यचष्ट प्रत्यैक्षत उदैक्षत आशंसत । अत्रार्थेऽपि च्छन्दोनुकार एव कारणम् । विश्वा रूपा प्रतिचक्षाणः (ऋ० ६।८५।१२) । प्रतिचक्षाणः प्रतिपश्यन् । यद्वा केशेषु प्रतिचक्षणे वा (अथर्व० १।१८।३) । प्रतिचक्षणं चक्षुः ।

—चर् (चर गतिभक्षणयोः) । अत उ त्वा पितुभृतो जनित्रीरन्नावृधं प्रति चरन्त्यन्नैः (ऋ० १०।१।४)। प्रतिचरन्ति अभिमुखमायान्ति उपक्रामन्ति । देवताभिरेव देवताः प्रतिचरति (तै० सं० २।२।६।२) । प्रतिचरति प्रापयति ।

—चि (चिञ् चयने) । धमनीप्रतिचयः (चरक० सूत्र० २०।२०) । धमन्युपलेप इत्यर्थः ।

—चिन्त् (चिति स्मृत्याम्) । शास्त्रं सुविचिन्त्यापि प्रतिचिन्तनीयम् (सुभाषितम्) । प्रतिचिन्तनीयं पुनश्चिन्तनीयम् ।

—जन् (जनी प्रादुर्भावे) । त्वमेव प्रतिजायसे (प्रश्नोप० २।७) । पुनर्जायसे इत्यर्थः । प्रतिजातकोपः = पुनरुत्पन्नक्रोधः ।

—जागृ (जागृ निद्राक्षये) । सर्वदा स भवत्येवं सर्वत्र प्रति-जागृविः (अष्टाङ्ग० सूत्र० ७।१) । ज्योतिरग्रा उषसः प्रति जागरासि (अथर्व० १४।२। ३१) । प्रति जागरासि जागृहि । अनत्यन्तसंयोगेऽपि उषस इति द्वितीयान्तम् । प्रतियोगे वा द्वितीया द्रष्टव्या । तदा प्रतिरनुपसर्गो भवति । उद्बुध्यस्वाग्ने प्रतिजागृहि (वा० सं० १५।५४) । प्रतिजागृहि संनिकर्षे सनीडे जागरिता भव । जाग्रस्तून् ।

—जुष् (जुषी प्रीतिसेवनयोः) । प्रति देवाँ अजुषत प्रयोभिः (ऋ० ६।६२।१) ।

—ज्ञा (ज्ञा अवबोधने) । वास्तोष्पते प्रति जानीह्यस्मान् (तै० सं० ३।४।१०।३६) । आत्मीयत्वेन बुध्यस्व प्रत्येकं वाऽस्माञ्जानीहीति भट्टभास्करः । प्रतिजानीहि अङ्गीकुर्विति लौ० गृ० सू० देवपालः । चाण्डाल प्रतिजानीहि येन मोक्षमवाप्स्यसि (भा० अनु० १०१।२६) । प्रतिजानीहि= जानीहि । नार्थः प्रतिना । अनामयं प्रतिजाने तवाहं सहानुजैः कुशली चास्मि विद्वन् (भा० उ० २३।६) । अत्रापि जान इत्येवार्थः । सञ्जयकृतस्य कुशलप्रश्नस्यानन्तरं यौधिष्ठिरं प्रतिवचनमिदम् । येदिलस्येहितं सद्यः प्रतिजज्ञे प्रतापवान् (शि० भा० ४।७) । उक्तचर एवार्थः । कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति (गीता० ९।३१) । प्रतिजानीहि निश्चितं जानीहि, अवधारय ।

शतं प्रतिजानीते (पा० १।३।४६ वृत्तौ)। प्रतिश्रृणोति। हरचापारोपणेन कन्यादानं प्रतिजानीते (प्र० रा०)। उक्तोऽर्थः। ब्रह्मन्न प्रतिजानीमो नास्तिको जायते जनः (रा० १।६५।१४)। प्रतिकारं प्रतिक्रियां न जानीम इति कतकः। नो हि न प्रत्यज्ञास्था ३ इति (ऐ० ब्रा० ६।३४)। आदित्यैरुक्तमर्थमभ्युपगतवानसीत्याह। प्रति त्वा जानन्तु पितरः परेतम्। (अथर्व० १८।४।५१)। अभिजानन्तु प्रत्यभिजानन्त्वित्यर्थो भाति। सायणस्त्वनुजानन्त्वित्याह। बृहस्पतिर्म आकूतिमाङ्गिरसः प्रति जानातु वाचमेताम् (अथर्व० १६।४।४)। मह्यं दातुं प्रतिजानातु स्मरत्विति सायणः। सा यन्न प्रतिजानीत ज्ञातिभ्यो हास्यै तदहितꣳ स्यात् (श० ब्रा० २।५।२।२०)। प्रतिजानीत स्वीकुर्यात्। स्वकृतं व्यभिचारमिति शेषः। को नु त्वाऽनुशशासेत्यन्ये मनुष्येभ्य इति ह प्रतिजज्ञे (छां० उ० ४।६।२)। प्रतिजज्ञे प्रत्युवाच। त्वं नु भगवः सयुग्वा रैक्व इत्यहं ह्यरा ३ इति ह प्रतिजज्ञे (छां० उ० ४।१।८)। प्रतिजज्ञे बाढमित्युवाच। प्रतिजानन्ति पूर्वाह्णे व्ययं व्यसनजं तव (भा० सभा० ५।६६)। प्रतिजानन्ति प्रतिज्ञापयन्ति निवेदयन्ति। प्रेतलोकं गते मर्त्ये तत्तत्सर्वं विभावसुः। प्रतिजानाति पुण्यात्मा…(भा० अनु० १३०।१७)॥ प्रतिजानाति अर्पयति। प्रतिज्ञातो म एष वरः (श० ब्रा० १४।६।१।८)। प्रतिज्ञातः स्वीकृतः। प्रतिज्ञातं मया तावत् त्वयोक्तं देवि शृण्वता (रा० २।३८।१०)। प्रतिज्ञातं तथास्त्वित्यनुमतम्। तीर्त्वा जवेनैव नितान्तदुस्तरां नदीं प्रतिज्ञामिव तां गरीयसीम् (शिशु० १२।७४)। प्रतिज्ञा प्रतिश्रवः, सङ्गरः। दैवात् तीर्णप्रतिज्ञः (मुद्रा० ४।१२)। उक्तोऽर्थः। न्याये साध्यस्यार्थस्योपन्यासः प्रतिज्ञोच्यते यथा पर्वतो वह्निमान्।

—तॄ (तॄ प्लवनतरणयोः)। प्लवं प्रतितरैर्हीनं कर्णधार इवाम्भसि (सुश्रुत० १।३४।१७)। नाव्यन्तः प्रविष्टजलोत्क्षेपकाः पुरुषाः प्रतितराः।

—दह् (दह भस्मी करणे)। प्रति ते ते अजरासस्तपिष्ठा अघशंसं शोशुचतो दहन्तु (ऋ० १०।८७।२०)। प्रतिदहन्तु प्रत्येकं दहन्तु ते तेऽजराः= शिखाः। स तिग्मजम्भ रक्षसो दह प्रति (वा० सं० १५।३७)। प्रति दह यातुधानम् (अथर्व० १।२८।२)। उक्तोऽर्थः।

—दा (दाण् दाने, डुदाञ् दाने)। सहस्रं वै प्रति पुरुषः पशूनां प्रति यच्छति (तै० सं०)। पुरुषः सहस्रस्य पशूनां भारेण तुल्यभारो भवतीत्यर्थः। तिलेभ्यः प्रति यच्छति माषान् (पा० २।३।११ इत्यत्रोदाहरणम्)। तिलानादाय तदर्थे माषान् ददाति। इह प्रतिः कर्मप्रवचनीयः। एतदादाय ते प्राणान् प्रतिदास्यन्ति पाण्डवाः (भा० सौ० १५।२७)। प्रतिदास्यन्ति

प्रणिदास्यन्ति विनिमास्यन्ते । मन्यस्व नरदेवाय जानकी प्रतिदीयताम् (रा० ५।५१।२१) । आत्तपूर्वायाः सीताया दानं प्रतिदानम् । जानकी प्रत्यर्प्यतामित्यर्थः । अद्यापि कोपविमुखीकृतगन्तुकामा नोक्तं वचः प्रतिददाति यथैव पूर्वम् (चौर० ३६) । उक्तं वचो न प्रतिददाति न प्रतिसन्दिशतीत्यर्थः । सन्देशं प्रतिदास्यामि विष्णोः (हरि० ७२५०) । प्रतिसन्देशं दास्यामीत्यर्थः । प्रतिदास्यामि भगवन् पुंलिङ्गं तव सुव्रत (भा० उ० १९२।६) । पूर्वमात्तं प्रत्यर्पयिष्यामीत्यर्थः । दत्तैषा भवता मह्यं तां ते प्रतिददाम्यहम् (भा० आश्व० ८६।१७) । उक्तोऽर्थः । इहैव सन्तः प्रति दद्म एनत् (अथर्व० ६।११७।२) । एनदृणं प्रतिदद्मो विगणयामः प्रतिनिर्यातयामः । यत्र खल्वेकः प्रत्यादेयं ददाति द्वितीयश्च प्रतिदेयं गृह्णाति तत्रास्य दृष्टत्वात्प्रधानमृणशब्दः (न्या० सू० ४।१।६० भा०) । प्रतिदेयं पुनर्देयम् । पुमानुपनिधिर्न्यासः प्रतिदानं तदर्पणम् इत्यमरः । प्रतीपं दानं प्रतिदानमिति स्वामी ।

—दिव् (दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु) । शतं प्रतिदीव्यति । सहस्रं प्रतिदीव्यति । शतस्य प्रतिदीव्यति (पा० २।३।५९ सूत्रे वृत्तौ) । पणत इत्यर्थः । प्रतिरनर्थकः । यो दीव्यतेरर्थः स एव प्रतिदीव्यतेः । शलाकां प्रतिदीव्यति (पा० २।३।५९ सूत्रे वृत्तौ प्रत्युदाहरणम्) । प्रतिदीव्यति प्रातिमुख्येन क्षिपतीत्यर्थः । यो अस्मान् प्रतिदीव्यति (अथर्व० ७।१०९।४) । प्रतिकूलं द्यूतं करोतीत्यर्थः । एतद्राजन्मम धनं प्रतिपाणोऽस्ति कस्तव । येन मां त्वं महाराज धनेन प्रतिदीव्यसे (भा० सभा० ६०।७) ॥ प्रतिदीव्यसे प्रतिदीव्यसि विजिगीषसे, द्यूतं करोषि (मया समम्) ।

—दिश् (दिश अतिसर्जने) । भुजगपतिप्रतिदेशितात्मकृत्यः (भा० शां० ३६५।९) । प्रतिदेशितं ज्ञापितम् ।

—दुष् (दुष वैकृत्ये) । न भिन्नभाण्डे भुञ्जीत न भावप्रतिदूषिते (मनु० ४।६५) । भावप्रतिदूषितं = यत्र मनो विचिकित्सति, निर्णिक्ततामस्य भाण्डस्य शङ्कते । अनेन प्रतिदुष्टकर्मणा हता भवेदार्यपथे परे स्थिता (रा० ५।१२।३) । अत्र पाठशुद्धिरतिशङ्क्यते । नेह प्रतिरुपसर्गः । लोके व्यवहितस्योपसर्गस्य प्रयोगाभावात् । निपातस्य सतोऽप्यर्थोऽस्फुटः । एतेषु चार्थेषु प्रतिशब्दं पठत्यमरः—प्रतिः प्रतिनिधौ वीप्सालक्षणादौ प्रयोगतः ।

—दुह् (दुह प्रपूरणे) । गौर्वै प्रतिधुक्, तस्यै शृतं तस्यै शरस्तस्यै दधि तस्यै मस्तु तस्या आतञ्चनं तस्यै नवनीतं तस्यै घृतं तस्या आमिक्षा तस्यै वाजिनम् (श० ब्रा० ३।३।३।२) । प्रतिधुक् तत्कालदुग्धम् ।

—दृश् (दृशिर् प्रेक्षणे)। उद्यन्तं त्वा मित्रमहो दिवेदिवे ज्योग्जीवाः प्रति पश्येम सूर्य (ऋ० १०।३७।७)। उद्यति मित्रेऽहरहर्हशं पातयेमेत्याह। दक्षिणस्यां दिशि यमं प्रत्यपश्यं व्यवस्थितम् (भा० वन० ६८।१४)। यमो मे दृशोर्गोचरोऽभूदित्यर्थः। दृशीक्ष्योः सदृशेप्यर्थे नाभेदः प्रतिपूर्वयोः (वा० प० ३।१२।१३)। प्रतिपश्यतीति तु प्रतीपदर्शनमर्थं इति हेलाराजः। यावन्तो मा सपत्नानामायन्तं प्रतिपश्यथ (अथर्व० ७।१४।२)। प्रतिपश्यथ प्रतिकूलं निरीक्षध्वे। आ पश्यति प्रति पश्यति परा पश्यति (अथर्व० ४।२०।१)। प्रतिपश्यति प्रतिमुखं स्थितं वर्तमानमपि भयकारणं निरसितुं जानातीति सायणः। प्रति भद्रा अदृक्षत गवां सर्गा न रश्मयः (ऋ० ४।५२।५)। प्रत्यदृक्षत प्रत्यदर्शिषत प्रत्यदृश्यन्त। प्रति केतवः प्रथमा अदृश्रन् (ऋ० ७।७८।१)। प्रत्यदृश्रन् आभिमुख्येनादृश्यन्त। प्रति यदापो अदृश्रमायतीर्घृतं पयांसि बिभ्रतीर्मधूनि (ऋ० १०।३०।१३)। संयोगो वै प्रीतिकरो महत्सु प्रतिदृश्यते (भा० आदि० १७०।५६)। प्रतिदृश्यते प्रत्यक्षं दृश्यते। राशयः प्रत्यदृश्यन्त वाससां नेजनेष्विव (भा० द्रोण० १८७।१३)। नेजनानि प्रक्षालप्रदेशाः। नाद्य त्वां प्रतिपश्यामि गिरावस्मिन्नरोत्तम (भा० वन० ६४।२६)। एकाकिन्या दमयन्त्या उक्तिः। यत्र नैवाद्य न प्रातर्भोजनं प्रतिदृश्यते (भा० उ० १३४।१२)। विदुलाया उक्तिरेषा। एतस्मिन्नन्तरे रक्षो रावणः प्रत्यदृश्यत (भा० वन० २७८।११)। झटिति दृष्टिविषयतामगात्। न ध्वजो नार्जुनस्तव न रथो न च केशवः। प्रत्यदृश्यत धारेण शरवर्षेण संवृतः (भा० द्रोण० १९।१८)॥ प्रत्यदृश्यत तत्कालमदृश्यत। तपस्वी तत्र भगवानगस्त्यः प्रत्यदृश्यत (भा० उ० १७।२)। सद्योऽदृश्यतेत्यर्थः। ब्राह्मणो गुणवान् कश्चित् पुरोधाः प्रतिदृश्यताम् (भा० आदि० १७४।१३)। प्रतिदृश्यताम् अनुसन्धीयताम्, अन्विष्यताम्। ते देवा असुरान् प्रतिदृश्य यज्ञमन्यदेव कर्तुं दध्रिरे (श० ब्रा० ९।५।१।२१)। प्रतिदृश्य संमुखमायतो दृष्ट्वा। गृहान्प्रतिदृश्य जपति (लौ० गृ० २७।३)। प्रतिदृश्य आभिमुख्येन दृष्ट्वा। एतादृङ् च प्रतिदृङ् च (तै० सं० १।८।१३)। प्रतिदृङ् यः प्रतिकूलं पश्यति सः।

—धा (डुधाञ् धारणपोषणयोः)। सरड्ढ वा अश्वस्य सक्थ्यावृहत्, तद् देवाश्चतुष्टोमेनैव प्रत्यदधुः (तै० सं० ५।३।१२।५)। प्रत्यदधुः पूर्ववत् स्थापितवन्तः। तद् ग्रीवाः प्रतिदधाति (श० ब्रा० ३।४।४।१)। ते देवा अश्विनावब्रुवन्। भिषजौ वै स्थः, इदं यज्ञस्य शिरः प्रतिधत्तम् ( )। अथास्य शिरश्छित्त्वाऽन्यत्रापनिदधतुरथाश्वस्य शिर आहृत्य तद्धास्य प्रतिदधतुः

(श० ब्रा० १४।१।१।२४)। सद्यो जङ्घामायसीं विश्पलायै धने हिते सर्तवे प्रत्यधत्तम् (ऋ० १।११६।१५)। प्रति जङ्घां विश्पलाया अधत्तम् (ऋ० १।११८।८)। अत्र सर्वत्र पूर्वोक्त एवार्थः। तेषां छिन्नं प्रत्येतद् दधामि (तै० सं० १।५।१०।४)। सन्दधामीत्यर्थः। समोऽर्थे प्रतिः। प्रत्येव प्रथमेन धत्ते विसृजति द्वितीयेन (तै० सं० ६।५।५)। उक्तोऽर्थः।...मध्वो अग्रमिन्द्रो मदाय प्रति धत् पिबध्यै (ऋ० ४।२७।५)। प्रतिधत् प्रतिधत्ते मुखेन सन्धत्ते मुखे दधाति। तदस्मै जातायान्नाद्यं प्रति दधाति यथा कुमाराय स्तनम् (ऐ० ब्रा० ६।२६)। उक्तोऽर्थः। तदग्ने चक्षुः प्रति धेहि रेभे शफारुजं येन पश्यसि यातुधानम् (ऋ० १०।८७।१२)। प्रतिधेहि प्रतिदेहि। तेन युक्तं कुर्वित्यर्थः। उप मेतं प्रति म एतद् धत्तम् (श० ब्रा० ८।२।१।१२)। उक्तोऽर्थः। स इदस्तेव प्रति धादसिष्यन् (ऋ० ६।३।५)। प्रतिधात् धनुषि सन्धत्ते। इषु र्न धन्वन्प्रतिधीयते (ऋ० ९।६९।१)। अहानि शं भवन्तु नः शं रात्री प्रति धीयताम् (अथर्व० ७।७२।१)। प्रतिधीयताम् सन्दधातु। व्यत्ययेन कर्तरि कर्मप्रत्यय इति सायणः। प्रतिधीयताम्=व्युच्छतु इति संस्कृतशार्मण्य-कोषः। यदि व्यत्ययो नाभिमतस्तर्हि धीङ् आधारे दिवादिरभ्युपेयताम्। ऊर्ध्वा धीतिः प्रत्यस्य प्रयामन्यधायि (ऋ० १।११९।२)। प्रत्यधायि व्यधायि प्रारम्भि। प्रति स्तोमं दधीमहि तुराणाम् (ऋ० ७।४०।१)। उक्तोऽर्थः। सुग्रीष्मः प्रतिधीयतां नः (पा० गृ० ३।२)। सम्पद्यतामित्यर्थः। सोऽस्यायमात्मा पुण्येभ्यः कर्मभ्यः प्रतिधीयते (ऐ० उ० २।४)। विहितानि कर्माणि कर्तुं पितुः स्थाने प्रतिनिधीयते प्रतिनिधी क्रियते। प्रतिदधानेभ्यश्च वो नमः (वा० सं० १६।२२) शरसन्धानं कुर्वद्भ्य इत्यर्थः। तस्मात्सर्वाश्चतुरः पदः प्रति-दधत् पलायते (अश्वः) (तै० सं० ५।४।१२।५६)। प्रतिदधत् प्रतिक्षिपन् विहरन्, न्यस्यन्। सर्वैः पद्भिः प्रतिदधत् पलायते (श० ब्रा० १२।३।३।१)। उक्तोऽर्थः। सप्त ऋषयः प्रतिहिताः शरीरे (वा० सं० ३४।५५)। प्रतिहिताः प्रतिनिहिताः, व्यवस्थिताः। प्रतिहितामायतां (इषुम्) मा विस्राष्टम् (अथर्व० ११।२।१) प्रतिहितां संहिताम् (इषुम्)। धनुर्ज्यारोपिताम् इत्यर्थः। नमस्ते रुद्रास्यते नमः प्रतिहितायै (अथर्व० ६।९०।३)। उक्तोऽर्थः। इषुः स्त्री छन्दसि प्रायेण। इषुः पुमाँल्लोके प्रायेण। प्रतिहिते च महिष्यां च जुहोति (बौ० श्रौ० १२।११)। प्रतिहितोऽत्यन्तप्रियः पुत्र इति सायणः। मा शकन् प्रतिधामिषुम् (अथर्व० ८।८।२०)। प्रतिधाम् प्रतिधातुं सन्धातुम्। शकि णमुल्कमुलौ (पा० ३।४।१२) इति तुमुन्नर्थे णमुल्। अपदे पादा प्रतिधातवेऽकः (ऋ० १।२४।८)। प्रतिधातवे प्रतिधातुम्। तुमर्थे तवेन्। प्रतिधिरिति

पृथिवीम् (तै० सं० ५।३।६।२८)। प्रत्येकं धारयति मातृवत् प्रजा इति धिः पृथिवीति भट्टभास्करः। प्रतिधिना पृथिव्या पृथिवीं जिन्व (वा० सं० १५।६)। अन्तिरसि सन्धिरसि प्रतिधिरसि (गो० ब्रा० उ० २।१३)। एकया प्रतिधाऽपिबत् साकं सरांसि त्रिंशतम् (ऋ० ८।७७।४, नि० ५।२।६)। एकया प्रतिधा=एकेन प्रतिधानेन। सक्तुसन्धाय मुखेन पानपात्रम्। एकेनोच्छ्वासेनेत्यर्थः। काङ्क्षत नाभिकृन्तनेन स्तनप्रतिधानेन च (गो० गृ० २।७।१७)। उक्तोऽर्थः। केचिदत्र धेट् पाने इत्यस्य प्रयोगं मन्वते। तदसत्। उत्तरत्र (२।७।२२) स्तनं च प्रतिधत्तेति श्रवणात्। एतं वो युवानं प्रतिदध्मः (अथर्व० ६।४।२४)। प्रतिदध्मोऽर्पयामः, उपहरामः।

—धाव् (धावु गतिशुद्धयोः)। उत्कूलमुद्वहो भवोदुह्य प्रति धावतात् (अथर्व० १६।२५।१)। प्रतिधावतात् प्रत्यग् धाव। वेगितया गत्या निवर्तस्व।

—धी (धीङ् आधारे)। शं रात्री प्रति धीयताम् (अथर्व० ७।७२।१)। प्रतिधीयतां प्रतितिष्ठतु।

—धृ (धृञ् धारणे)। तस्मादेनाः स्यन्दमाना न किञ्चन प्रतिधारयति (श० ब्रा० ३।६।४।४)। प्रतिधारयति वारयति उपरमयति, रुणद्धि। प्रतिधारयति वै ग्रीवा अथो शिरः (ऐ० ब्रा ३।२)। उत्थातुमादौ गलमुन्नमयतीत्यर्थ इति सायणः। उद्ग्रीवो भवतीति यावत्।

—धृष् (धृष प्रसहने)। कस्त इन्द्र प्रति वज्रं दधर्ष (ऋ० ८।६६।६)। प्रतिदधर्ष प्रसहते प्रतिगृह्णाति प्रतिरुणद्धि। तिग्मा अस्य हनवो न प्रतिधृषे (ऋ० ८।६०।१३)। उक्तोऽर्थः।

—ध्यै (ध्यै चिन्तायाम्)। सुपर्णोऽथाब्रवीद् विप्रं प्रतिध्यातं मया द्विज (भा० उ० ११३।८)। प्रध्यातं वै मया द्विजेति पाठान्तरम्। प्रतिध्यातं ध्यातं चिन्तितम्।

—ध्वंस् (ध्वंसु अवस्रंसने, गतावपि)। प्रतिध्वस्तोष्ठदन्तस्य न्यस्तसर्वायुधस्य च (भा० शां० १००।३६) प्रतिध्वस्तमवस्रस्तं प्रपतितम्।

—नद् (णद अव्यक्ते शब्दे)। निशम्य तं (निनादं) प्रत्यनदंस्तु कौरवाः (भा० द्रोण० १०६।३७)। प्रत्यनदन् प्रतिघोषमकुर्वन्। सिंहव्याघ्रवराहाणां नादेन प्रतिनादितम् (वनम्) (हरि० २।१२२।५६)। प्रतिनादितं प्रतिशब्दितम्।

गम्भीरं प्रतिनद्येव निनादं नदतो गिरिः (राज० ४।२८५)। **गम्भीरं प्रतिनद्य कृतं नादमुद्दिश्य गभीरं नदित्वा।**

—**नन्द् (टुनदि समृद्धौ)**। प्रतिनन्दन्तु पितरः संविदानाः (हिरण्य० गृ० २।१४।४)। **अस्मासु प्रीताः प्रसन्ना भवन्त्वित्याह।** नदन्ति परुषं श्येनाः शिवाः क्रोशन्ति दारुणम्। मृगेन्द्राः प्रतिनन्दन्ति (भा० शां० १५३।६८)। **प्रसीदन्तीत्यर्थः।** तस्मात् पुरस्ताद्वान्तम्। सर्वाः प्रजाः प्रतिनन्दन्ति (तै० ब्रा० २।३।६।५)। **सञ्चरन्तं वायुं प्रति हृष्यन्तीत्याह।** यां देवाः प्रतिनन्दन्ति रात्रिं धेनुमुपायतीम् (अथर्व० ३।१०।२)। **प्रतिनन्दन्ति स्तुवन्ति प्रशंसन्ति।** यथा वयः कुरून्सर्वान् प्रतिनन्दन्ति पाण्डवाः (भा० उ० ४७।१५)। **सहर्षं सत्कुर्वन्तीत्याह।** तत्र स्थितः प्रजाः सर्वाः प्रतिनन्द्य विसर्जयेत् (मनु० ७।१४६)। **संभाषणदर्शनादिभिः परितोष्येत्यर्थः।** वधूर्विधात्रा प्रतिनन्द्यते स्म कल्याणी वीरप्रसवा भवेति (कु० ७।८७)। **प्रतिनन्द्यते स्म आशिषा वर्ध्यते स्म।** पूजयेदशनं नित्यमद्याच्चैतदकुत्सयन्। दृष्ट्वा हृष्येत् प्रसीदेच्च प्रतिनन्देच्च सर्वशः (मनु० २।५४)॥ **अस्माकं नित्यमस्त्वेतदित्यभिधाय वन्दनं प्रतिनन्दनमिति कुल्लूकः।** प्रतिनन्दाम ते वाक्यं सर्वं चैव विशाम्पते (भा० वि० ३४।८)। **सहर्षं स्वीकुर्म इत्यर्थः।** उपधानेन दत्तेन प्रत्यनन्दद् धनञ्जयम् (भा० भीष्म० १२०।४६)। **धनञ्जयमाशिषाऽवर्धयद्** भीष्मः।

—**नम् (णम प्रह्वत्वे शब्दे च)**। कुमारश्चित्पितरं वन्दमानं प्रति नानाम रुद्रोपयन्तम् (ऋ० २।३३।१२)। **प्रतिनानाम प्रतिननाम प्रणतोऽभूत्, प्रह्वोऽभवत्।**

—**नर्द् (नर्द अव्यक्ते शब्दे)**। महामेघ महाघोरं दर्दुरः प्रति नर्दति (भा० कर्ण० ३६।२६)। **प्रतिनर्दति प्रातिभट्येन नर्दति रौति।**

—**नह् (णह बन्धने)**। **प्रतिनाहः प्रतीनाह इति ध्वजनामधेयमित्याभिधानिकाः।**

—**नी (णीञ् प्रापणे)**। मृत्यो ये अघला दूतास्तेभ्य एनान् प्रति नयामि बद्ध्वा (अथर्व० ८।८।१०)। **प्रतिनयामि प्रापयामि समर्पयामि।**······नौ गृहाय प्रतिनेष्यति (रा० २।६८।२२)। **प्रतिनेष्यति प्रतिनिवर्त्य नेष्यति।** स्थालीपाके धृतपिण्डात् प्रतिनीयाऽश्नाति (कौ० सू० ५२)। **प्रतिनीय सन्नीय, सङ्गतान् कृत्वा।** तं प्रतिनेतुमयोध्याम् (रा० २।६०।१७)। **प्रत्यावर्त्य नेतुम् इत्यर्थः।**

**—नुद् (णुद प्रेरणे)।** प्रत्यजातान् जातवेदो नुदस्व (अथर्व० ७।३५।१)। **प्रतिनुदस्व पृष्ठतः प्रेरयाऽपसारय।** आदित्या वा एतं भूत्यै प्रतिनुदन्ते (तै० सं० २।३।१।१)। अग्ने मन्युं प्रतिनुदन्परेषाम्...परि पाहि नस्त्वम् (ऋ० १०।१२८।६)। **उक्तोऽर्थः।** दक्षिणाः प्रतिनुत्ता न प्रतिग्राह्याः (काठक० २८।४)। **प्रतिनुत्ताः प्रतिग्रहीष्यन्तं प्रति प्रक्षिप्ताः।**

**—नृत् (नृती गात्रविक्षेपे)।** येऽस्मान्पुरोपनृत्यन्त मूढा गौरिति गौरिति। तान् वयं प्रतिनृत्यामः पुनर्गौरिति गौरिति (भा० शल्य० ५६।७)॥

**—पण् (पण व्यवहारे स्तुतौ च)।** शुनं नो अस्तु प्रपणो विक्रयश्च प्रतिपणः फलिनं मा कृणोतु (अथर्व० ३।१५।४)। **प्रत्यानेतुं परद्रव्यस्य परिमाणकल्पनं प्रतिपण इति सायणः।**

**—पत् (पत्लृ गतौ)।** तान्यनीकानि हंसो यथा मेघमिवापतन्तं धनञ्जयः प्रत्यपतत् तरस्वी (भा० वि० ६०।६)। **प्रत्यपतत् = वेगेनोपाद्रवत्।**

**—पद् (पद गतौ)।** यस्य गार्हपत्याहवनीयावन्तरेणाऽनो वा रथो वा श्वा वा प्रतिपद्येत (ऐ० ब्रा० ७।१२)। **प्रतिपद्येत आगच्छेत्।** पूर्वः कूर्चेन प्रतिपद्यते (वरम्) (भा० गृ० २।२३)। **प्रतिगच्छतीत्यर्थः।** अनीकं यातुधानानां समन्तात् प्रत्यपद्यत (रा० ३।२४।२८)। **प्राप्नोदित्यर्थः।** अगस्त्याद् भारताचार्यः प्रत्यपद्यत मे पिता (भा० सौ० १२।१३)। **उक्तोऽर्थः।** तद्यूयं पुनः सर्वाः स्वरूपं प्रतिपत्स्यथ (भा० आदि० २१७।१०)। **प्रतिपत्स्यथ = प्रतिपत्स्यध्वे = प्रतिलप्स्यध्वे।** प्रायः स्वं महिमानं क्षोभात्प्रतिपद्यते हि जनः (शा० ६।३१)। ततः पूरोः सकाशाद्वै स्वां जरां प्रत्यपद्यत (हरि० १।३०।३६)। **उक्तोऽर्थः।** वेत्थ यथेमाः प्रजाः। प्रयत्योपि प्रतिपद्यन्ता इति (श० ब्रा० १४।६।१।२)। **प्रतिपद्यन्ते आवर्तन्ते, पुनराभवन्ति। इह प्रतिपदिः प्रत्यागमनेऽर्थे।** तेषामाजि यतामभिसृष्टानां वायुर्मुखं प्रथमः प्रत्यपद्यत (ऐ० ब्रा० २।२५)। **प्रत्यपद्यत प्राप्नोत् आसादयत्।** गत्वा चैवाश्रमं सा तु तापसं प्रत्यपद्यत (भा० अनु० १२।२३)। **तापसं प्रत्यपद्यत तापसेन संगतवती, समभवत्, सहाशेत।** भर्तृत्वेन स्वीकृतवतीति त्वन्ये। जघने सर्वसैन्यानां ममाश्वान् प्रतिपादय (भा० शल्य० १६।३३)। **प्रतिपादय गमय।** एतेन तूर्णं प्रतिपादयेमान् श्वेतान् हयान् (भा० वि० ५४।४)। **उक्तोऽर्थः।** तन्महात्मा महाभागः केतुः सर्वधनुष्मताम्। प्रत्यपादयदाचार्यः प्रीयमाणो धनञ्जयम्

(भा० सौ० १२।५)। तदस्त्रं ब्रह्मशिरो नाम । **प्रत्यपादयत् प्रापयामास ।** ऋतुपर्णं जना राज्ञे भीमाय प्रत्यपादयन् (भा० वन० ७३।१)। **प्रत्यपादयन् अगमयन्, अनयन्, प्रापयन् ।** स्यन्दनं च बलं चैव समीपं प्रत्यपादयत् (रा० ६।७८।७)। अधर्मात्पाहि मां राजन्धर्मं च प्रतिपादय (भा० आदि० ८२।२१)। **उक्तोऽर्थः ।** सुग्रीवमेव तद्राज्ये राघवः प्रत्यपादयत् (रा० १।१।७०)। **प्रत्यपादयत् प्रत्यष्ठापयत् ।** यदद्य राजा सुतम् . . . यौवराज्ये प्रतिपादयिष्यति (रा० गोरे० २।६।३३)। **उक्तोऽर्थः ।** तद्धनुर्ग्रहणमेव राघवः प्रत्यपद्यत समर्थमुत्तरम् (रघु० ११।७९)। **अजानादित्यर्थः ।** न किञ्चित्प्रत्यपद्यन्त पुत्रास्ते भरतर्षभ (भा० भीष्म० ११९।१११)। **नाबुध्यन्त किं कर्तव्यमिति ।** तिमिरे हि कौशिकानां रूपं प्रतिपद्यते दृष्टिः (      )। **प्रतिपद्यतेऽनुभवति ।** प्रतिपेदे चतुष्पादं धनुर्वेदं नृपात्मजः (भा० उ० १९२।६१)। **प्रतिपेदे शिशिक्षे, उपयुयुजे ।** यत् पशुं सारमेयं प्रतिपादयसि (पञ्चत०)। **प्रतिपादयसि मन्यसे ।** अतिप्रियत्वान्नहि मे कातरं प्रतिपद्यते चेतो वालिवधं राम · · · (भट्टि० ६।१११)॥ **प्रतिपद्यते प्रत्येति श्रद्धत्ते ।** प्रतिपन्नं पुमांसमपहायाप्रतिपन्न-सन्दिग्धाः प्रेक्षावद्भिः प्रपिपाद्यन्ते (भामत्याम्) । **प्रतिपाद्यन्ते बोध्यन्ते ।** उक्तमेवार्थमुदाहरणैः प्रतिपादयति । **बोधयति स्थापयति, उपपादयति ।** ततः पुत्रवतीमेनां प्रतिपत्स्ये त्वदाज्ञया (रघु० १५।७३)। **अभ्युपैष्यामि, अङ्गीकरिष्यामीत्याह ।** न साम्ना प्रतिपद्येत यदि गन्धर्वराडसौ (भा० वन० २४३।१७)। तं चापि भगवानत्रिः पुत्रवत् प्रत्यपद्यत (रा० २।११७।५)। **आलिङ्गनमूर्धाघ्राणादिभिः पुत्रवदङ्गीचकारेत्यर्थः ।** न मासे प्रतिपत्तासे मां चेन्मर्तासि मैथिलि (भट्टि० ८।९५)। **न प्रतिपत्तासे नाङ्गी कर्तासि ।** मां सुखं प्रतिपद्यस्व दासो भीरु भवामि ते (भा० वि० २२।१०)। मन्ये ध्रुवं मयोक्ता सा वचनं प्रतिपत्स्यते (भा० आदि० १२४।८)। धारयन्निव चैतस्यै वसूनि प्रत्यपद्यत (भट्टि० ८।७४)। **प्रत्यपद्यत प्रत्यशृणोत् ।** सर्वे सर्वेषु भूतेषु यथावत् प्रतिपेदिरे (भा० शां० २२७।६२)। **प्रतिपेदिरे व्यवजह्रुः, व्यवहृत-वन्तः, आचेरुः ।** (अतिथीन्) महाभागानमितधी ब्रह्मा लोकपितामहः । दया-वान् सर्वेषु भूतेषु यथार्हं प्रतिपद्यते (भा० सभा० ११।५७)॥ **व्यवहरति आचरति ।** कामाभिभूतः क्रोधाद्वा यो मिथ्या प्रतिपद्यते । स्वेषु चान्येषु वा ······(भा० उ० १२९।३५)॥ स भवान्मातृपितृवदस्मासु प्रतिपद्यताम् (भा० उ० ९५।५५)। शिष्यवृत्ति समापन्नान्गुरुवत् प्रत्यपद्यत (भा० आश्रम० २।१२)। **आचरदित्यर्थः ।** इह प्रतिपदिः सकर्मकः । सत्करणं त्वार्थिकोऽर्थः । कथं नु पाण्डवा राजन्प्रतिपत्स्यन्ति कौरवम् (भा० शल्य० ३०।६७)। कौरवे व्यवहरि-

ष्यन्ति, तत्र वर्तिष्यन्त इत्यर्थः। अभ्युपेत्य च शुश्रूषां यस्तां न प्रतिपद्यते (नारद०)। न प्रतिपद्यते न करोति, नानुतिष्ठति, न विधत्ते। तात इदानीमिमं वृत्तान्तं श्रुत्वा न जाने किं प्रतिपत्स्यते (शा० ४)। किं प्रतिपत्स्यते किमाचरिष्यति। प्रेषितस्तदेव प्रतिपद्यते (आप० ध० १।२।७।२५)। नियुक्तः सन्नियोगमेव कुर्यादित्युक्तं भवति। किं पापं प्रतिपत्स्यसे (रा० २।१२।९०) स्वधर्मं प्रतिपद्यस्व नाधर्मं वोढुमर्हसि (रा० १।२३।७)। परेतकाले पुरुषो यत्कर्म प्रतिपद्यते (रा० ३।५१।३१)। प्रतिपत्स्यति बीभत्सुर्भवतश्चौर्ध्वदेहिकम् (भा० मौ० ६।२३)। अवहननादि कर्म प्रतिपद्यते (आप० श्रौ० ७।७।२२।१०)। सौभद्रे प्रतिपत्तिं कां प्रत्यपद्यन्त मामकाः (भा० द्रोण० ४६।३)। किं प्रतिविधानमाचरन्नित्याह। तथाहं प्रतिपत्स्यामि ज्ञात्वा तेषां बलाबलम् (रा० ६।३०।१८)। आचरिष्यामीत्यर्थः। न चायं किञ्चिदस्मासु शत्रुवत् प्रत्यपद्यत (अवदा० जा० २२।७४)। स कालयवनश्चापि किं कृष्णे प्रत्यपद्यत (हरि० २।५७।४)। कथमाचरद् इत्यर्थः। प्रतिपत्स्यति राजा स पिता ते यदनन्तरम् (भा० उ० १७६।६)। स्वभाग्यनिन्दां प्रतिपत्स्यते वा (अवदा० सुत जा०, १२)। आचक्षध्वं च भीष्माय रूपेण च गुणैश्च माम्। स एव सुमहातेजाः साम्प्रतं प्रतिपत्स्यति (भा० आदि० १३१।३५-३६)॥ युक्तमादरिष्यत इत्याह। यस्त्वधर्मेण द्रव्याणि प्रतिपादयति ज्येष्ठोपि तमभागं कुर्वीत (आप० ध० २।१४।१५) प्रतिपादयति व्यवहरति विनियुङ्क्ते। समीक्ष्य कुलधर्मांश्च स्वधर्मं प्रतिपादयेत् (मनु० ८।४१)। प्रतिपादयेत् व्यवस्थापयेदिति कुल्लूकः। यद्विधम् (अन्नमुच्चावचं) प्रतिपेदे च रामे प्रियहितेऽतिथौ (रा० २।८७।१४-१५)। प्रतिपेदे ददौ, उपजहार। प्रत्यपादि हरयेऽद्भुता द्युतिः (पारिजात० १७।२५)। प्रत्यपादि अदायि, उपहृता। ऋणिकस्तं प्रतिभुवे द्विगुणं प्रतिपादयेत् (याज्ञ० २।५६ मिताक्षरायां नारदवचनम्)। दद्यादित्यर्थः। कर्म वै सफलं कृत्वा गुरूणां प्रतिपादयेत् (भा० अनु० १६२। ४४)। कर्म=अध्ययनम्। प्रतिपादयेत् दद्यात्। दक्षिणामिति शेषः। तत्र यद् रिक्थजातं स्यात्तत् तस्मिन् प्रतिपादयेत् (मनु० ९।१९०)। प्रतिपादयेत् समर्पयेत्। तदाज्यभागावन्तरेणाहुती प्रतिपादयेत् (मुण्डकोप० १।२।२)। उक्तोऽर्थः। उच्यमानोपि परुषं नोत्तरं प्रतिपद्यते (रा० २।१।१०)। प्रतिपद्यते प्रयच्छति। स यदि प्रतिपद्येत यथान्यस्त यथाकृतम् (मनु० ८।१८३)। स्वीकृत्य दद्यात्। सत्यमस्ति गृहीतमिति वदन् कुल्लूकस्तु तात्पर्यमाचष्टे। केवलः प्रतिपदिः प्रतिवचनेऽपि वर्तते। तत्र काश्चिद् दिशो निर्दिश्यन्ते—तं ह पप्रच्छ

स ह न प्रतिपेदे (गो० ब्रा० पूर्व० १।३२)। **प्रतिपेदे प्रत्युवाच, प्रतिवचनं ददौ।** तेभ्यो ह न सर्वमिव प्रतिपत्स्ये (छां० उ० ५।११।३)। **प्रतिवक्तुं नेशिष्य इत्यर्थः।** उपोत्तमेन सुहृदो ब्राह्मणस्य शकृत्पिण्डान् पर्वस्वाधाय शकधूमं किमद्याहरिति पृच्छति। भद्रं सुमङ्गलमिति प्रतिपद्यते (कौ० सू० ५०।१५, १६)। **प्रतिपद्यते प्रतिवक्ति।** कौन्तेय यदि प्रश्नांस्तान्मयोक्तान्प्रतिपत्स्यसे (भा० वन० ३१२।२७)। **उक्तोऽर्थः।** किं प्रतिपद्यते वैदर्भः (माल० १)। **किमुत्तरमाहेत्याह।** अथ यत्र प्रतिपद्यते। तच्चतुर्धा पुरोडाशं कृत्वा बर्हिषदं करोति (श० ब्रा० १।८।१।४०)। **अत्र प्रतिपदिरुच्चैर्व्याहृतौ वर्तते।** तामनुकृतिं होताऽऽग्निमारुते शस्त्रे वैश्वानरीयेण सूक्तेन प्रतिपद्यते (नि० ७।२३।२)। **प्रतिपद्यते प्रारभते।** ओङ्कारः स्वर्गद्वारं तस्माद् ब्रह्माध्येष्यमाण एतदादि प्रतिपद्येत (आप० ध० १।१३।६)। **प्रतिपद्येत उपक्रमेत। अध्येतुमारभेतेत्यर्थः।** अत्र बर्हिरादि कर्म प्रतिपद्यते (भा० श्रौ० ७।६।१)। साध्वस्मा अस्तु वितथ एष एनस इत्युक्त्वा शास्तुं प्रतिपद्येत (आप० ध० २।६।२)। **शास्तुं शासितुम्।** सुविचितं विचित्य दैवप्रश्नेभ्यो राजा दण्डाय प्रतिपद्येत (आप० ध० २।५।११२)। **प्रतिपद्येत प्रक्रमेत। दण्डं प्रणेतुं व्यवस्येदित्यर्थः।** यस्मात्तु लोके दृश्यन्ते क्षमिणः पृथिवीसमाः। तस्माज्जन्म च भूतानां भवश्च प्रतिपद्यते (भा० वन० २६।३१)॥ **प्रतिपद्यते सम्पद्यते वर्तते जायते।** भूयिष्ठेन तु राजानः श्रियं भुक्त्वाऽऽयुषः क्षये। तरुणाः प्रतिपद्यन्ते भोक्तुं सुकृतदुष्कृते (भा० उ० ६७।७)॥ **उक्तोऽर्थः।** एवमु हास्याग्नेयीभिरेव प्रतिपद्यमानस्य पावमान्योऽनुशस्ता भवन्ति (ऐ० ब्रा० २।३७)। **प्रतिपद्यमानस्य प्रारभमाणस्येति सायणः। प्रतिपदिः शंसनार्थं इति षड्गुरुशिष्यः।** अर्थिभ्यः प्रतिपाद्यानमनिशं प्राप्नोति वृद्धिं पराम् (भर्तृ० २।१६)। **प्रतिपाद्यमानं दीयमानम्।** प्रतिपन्नायां शर्वर्यां संमानितसर्वराजलोकः सुष्वाप (हर्ष० ७)। **प्रतिपन्नायां प्राप्तायामागतायामवतीर्णायाम्।** अस्त्रं ततोऽन्यत् प्रतिपन्नमद्य (भा० कर्ण० ४२।१२)। **प्रतिपन्नं प्राप्तम्।** अन्यथा प्रतिपन्नास्तु (भा० आश्व० ३६।२७)। **तिर्यक्स्थावरादियोनिं प्राप्ता इत्यर्थः।** अयशो जीवलोके च त्वयाहं प्रतिपादितः (रा० २।७४।६)। **प्रतिपादितः प्रापितो लम्भितः।** कच्चिद् द्विषामविदितः प्रतिपन्नश्च सर्वदा (भा० सभा० ५।३६)। **प्रतिपन्नो विदितवान्, अवेक्षावान्, सावधानः। प्रतियत्त इति पाठे प्रतीकारे यत्नवान् इत्यर्थः।** लीलयापि यत्सन्तः प्रतिपन्नाः सकृत्क्वचित् (तन्त्रा० १।६।६६)। **प्रतिपन्नाः स्वीकृतवन्तः, प्रतिज्ञातवन्तः।** सूत्रार्थद्वयमप्याचार्येण शिष्याः प्रतिपादिताः (५।१।५० सू० वृत्तौ)। **बोधिताः पाठिताः।** तच्च श्रुत्वा प्रतिपादितवन्तः प्राड्विवाकाः परस्परस्य तत् तुलादारकदानमिति (तन्त्रा० १।१७)। **प्रतिपादितवन्तो निर्णीतवन्तः।**

त्वयि सम्यङ् महाबाहो प्रतिपन्ना यशस्विनः (भा० उ० १२४।३२) । **प्रतिपन्ना व्यवहृतवन्तः** । वैरे तस्मिन्प्रतिपादिते (रा० ४।२२।२०) । **प्रतिपादिते कारिते जनिते** । कृष्ण दिष्ट्या मम प्रीति र्महती प्रतिपादिता (भा० द्रोण० १४९।८) । **उक्तोऽर्थः । प्रीतिः प्रहर्षः** । किं करिष्यति पाण्डित्यं वस्तुष्वप्रतिपादितम् (तन्त्रा० १।१४।१६१) । **अप्रतिपादितमविनियुक्तमनुपयुक्तमव्यापृतम्** । तथा धर्माहृतेन द्रव्येण तीर्थे प्रतिपन्नेन (आप० ध० २।६।१६।२४) । **प्रतिपन्नेन प्रतिपादितेन दत्तेन** । कृतगोपवधूरतेर्घ्नतो वृषमुग्रे नरकेपि सम्प्रति । प्रतिपत्तिरधः कृतैनसः…… (शिशु० १६।८) ॥ **अधः प्रतिपत्तिरधः प्राप्तिः । पक्षे प्रतिपत्तिः प्रवृत्तिः पुरुषकारः** । प्राग्वाससः प्रतिपत्तेरित्येके (गौ० ध० ९।२३) । **प्रतिपत्तिर्बोधः** । वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये (रघु० १।१) । विद्या शस्त्रस्य शास्त्रस्य द्वे विद्ये प्रतिपत्तये (हितोप० प्र० ७) । प्रतिपत्तिविमोहाच्च धर्मस्तेषामनीनशत् (भा० शां० ५९।१६) । **प्रतिपत्तिविमोहो ज्ञानविलोपः** । तथापि ते व्यवसायः प्रतिपत्तिनिष्ठुरः (रघु० ८।६५) । **प्रतिपत्तिर्निश्चयः, निश्चयेन क्रूरः, कर्कशः** । कैकेय्याः प्रतिपत्तिर्हि कथं स्यान्मम वेदने (रा० २।२२।१६) । **प्रतिपत्तिरध्यवसायः, बुद्धिः** । वेदन इत्यस्य स्थाने गोविन्दराजः पीडन इति पठति । पश्यद्भिर्दूरतोऽपायान्सूपायप्रतिपत्तिभिः (का० नी० सा० १२।९) । **प्रतिपत्तिर्ज्ञानपूर्विका फलप्राप्तिरिति टीका** । तस्मान्न प्रतिपत्तिस्तु कार्या युक्ता मता मम (भा० सभा० १६।४) । **प्रतिपत्तिर्बुद्धौ राजसूयविषया** । एवं बुद्धिश्च तेजश्च प्रतिपत्तिश्च भारत । भवन्ति भवकालेषु विपद्यन्ते विपर्यये (भा० मौ० ८।३२-३३) ॥ **प्रतिपत्तिरनागतावेक्षणम् । भवकालो भूतिकालः** । चिरेणानुगुणं प्रोक्ता प्रतिपत्तिपराङ्मुखी (भट्टि० ८।९५) । **प्रतिपत्तिरभ्युपगमः स्वीकारः** । प्रतिपत्तिभेदः (ऋ० प्रा० ) । **मतद्वैधम्, दर्शनविसंवादः** । कर्मसिद्धावाशु प्रतिपत्तिमानय (मुद्रा० ४) । **प्रतिपत्तिः प्रवृत्तिर्वार्ता वृत्तान्त उदन्तः** । धैर्यात्तु कार्यप्रतिपत्तिदक्षाः कृच्छ्राण्यकृच्छ्रेण समुत्तरन्ति (अवदा० जा० १४।१०) । **कार्यप्रतिपत्तिः कार्यानुष्ठानं कृत्यनिर्वृत्तिः** । वयस्य का प्रतिपत्तिरत्र (माल० ४) । **प्रतिपत्तिर्विधेयम् प्रतिविधेयं वा** । चन्द्रगुप्तस्य जनपदे नृशंसा प्रतिपत्तिः (मुद्रा० ६) । **प्रतिपत्तिर्व्यवहारः, परत्र वृत्तिः** । विषादलुप्तप्रतिपत्तिविस्मितं सैन्यम् (रघु० ३।४०) । **प्रतिपत्तिरितिकर्तव्यता** । सौभद्रे प्रतिपत्तिं कां प्रत्यपद्यन्त मामकाः (भा० द्रोण० ४६।३) । **कां प्रतिपत्तिं कां प्रतिक्रियाम्** । नाराचैः प्रतिचिच्छेद प्रतिपत्तिविशारदः (भा० द्रोण० १२१।४३) । **उक्तोऽर्थः** । इह सात्यकिरित्थम्भूत उक्तः । प्रतिपत्तिविशारदः (अर्जुनः) (भा० आदि० २२७।१६) । प्रतिपत्तिविशारदः (भा० शां० ८०।२८) । **उभयत्र कर्तव्याकर्तव्यविवेककुशल इत्यर्थः** । तदमुष्य गणित्वस्य तीव्रसेवा-

श्रमस्य च । प्रतिपत्त्या कतमया तावदानृण्यमाप्नुयाम् (राज० ३।१६६) ॥ **प्रतिपत्तिः प्रतिक्रिया, प्रत्युपकारः, निष्कृतिः ।** तपः प्रभावसिद्धाभिर्विशेषप्रतिपत्तिभिः (रघु० १५।१२) । **प्रतिपत्तयः संविधाः ।** दुष्टानां प्रतिपत्तिं च कृत्स्नं चैव विकित्सितम् (भा० वि० १२।७) । **प्रतिपत्तिर्दोषनिराकरणप्रकार इति नीलकण्ठः । प्रतिविधानमिति शब्दार्थः । वेद्मीति शेषः । नकुलस्योक्तिरियम् ।** छेदो दंशस्य दाहो वा··· आयुष्याः प्रतिपत्तयः (माल० ४।४) । **प्रतिपत्तयः प्रतिपादनोपायाः ।** सामान्यप्रतिपत्तिपूर्वकमियं दारेषु दृश्या त्वया (शा० ४।१७) । **प्रतिपत्तिरादरः ।** आपातमात्रसौन्दर्यं कुत्र नाम न विद्यते । अत्यन्तप्रतिपत्त्या तु दुर्लभोऽलङ्कृतो जनः (तन्त्रा० १।१४।१६५) ॥ **इह प्रतिपत्तिर्गौरवमाहेति मम भाति ।** भिन्नानि मृन्मयानि प्रतिपाद्यानि (बौ० १।४।१३।८) **इत्यत्र प्रतिपत्तिर्नाम संस्कारः ।** कार्योपयुक्तस्योपयुक्तशेषस्य वा वस्तुनो विहितदेशे प्रक्षेपणं प्रतिपत्तिरिति **गोविन्दस्वामिवचनम् । स्थावरोदकं** तडागादि । तत्र तस्याः शाखाया उत्सर्गः प्रतिपत्तिकर्मेति (लौ० गृ० १८।२) सूत्रे देवपाल. । क्लेशायाससहो दक्षश्चारः स्यात् प्रतिपत्तिमान् (का० नी० सा० १३।२६) । **प्रतिपत्तिमान् =भयस्खलितेष्वाशु प्रतिविधाता ।** द्वापरस्यांशशेषे तु प्रतिपत्तिः कलेरथ (मात्स्यपु० १४४।२१) । **प्रतिपत्तिः प्रवृत्तिः प्रारम्भ उपक्रमः ।** अपात्रे प्रतिपत्तिश्च पात्रे चाप्रतिपादनम् (भा० उ० ३३।५१) । **प्रतिपत्तिर्दानम् ।** सत्पात्रे प्रतिपत्तिश्च राजवृत्तं चतुर्विधम् (का० नी० सा० १।२०) । **उक्तोऽर्थः ।** तया प्रतिपत्तिकुशलयाऽभिहितः (विटः) । प्रष्टव्यं पृच्छसि (तन्त्रा० ३।८) । **प्रतिपत्तिः प्रतिवचनदानम् ।** त्वमद्य कृत्यं प्रतिपत्तुमर्हसि (रा० ३।३४।२५) । **प्रतिपत्तुमनुष्ठातुम् ।** न युक्तं भवताऽस्मासु प्रतिपत्तुमसाम्प्रतम् (भा० उ० ९१।१९) । **प्रतिपत्तुं व्यवहर्तुमाचरितुम् ।** प्रतिपत्तुमङ्ग घटते च न तव नृपयोग्यमर्हणम् (शिशु० १५।२२) । **प्रतिपत्तुं न घटते स्वीकर्तुं न युज्यत इत्यर्थः ।** न्याय्यः श्रेयोऽभिकामेन प्रतिपत्तुं जनार्दनः (भा० अनु० १४८।४७) । **प्रतिपत्तुं प्रपत्तुं शरणीकर्तुम् । प्रशब्दस्यार्थे प्रतिः । प्रपत्तिः शरणागतिर्भवति ।** गोष्ठमुपतिष्ठते **ऊर्जा** वः पश्याम्यूर्जा मा पश्यत इति प्रतिपद्य मयि वो रायः श्रयन्ताम् इत्यन्तेन (भा० श्रौ० ६।३।१) । **प्रतिपद्य =प्रारभ्य ।** प्रतिपादयिता च तीर्थे (आप० ध० २।२०।१९) । **तीर्थं गुणवत् पात्रं तत्र प्रतिपादयिता विश्राणयिता दाता ।** अत्र यत् प्रतिपत्तव्यं तन्मे ब्रूहि पितामह (भा० सभा० ४०।३) । **प्रतिपत्तव्यमाचरितव्यं विधातव्यम् ।** त्वयि सम्यङ् महाबाहो प्रतिपन्ना यशस्विनः । त्वयापि प्रतिपत्तव्यं तथैव भरतर्षभ (भा० उ० १२४।३२-३३) ॥ **प्रतिपत्तव्यं व्यवहर्तव्यम् ।** गुणवते कन्या प्रतिपादनीया (शा० ४) । वाच्यार्थपूर्विका तद्वत् प्रतिपत्तस्य

वस्तुनः (ध्वन्या० १।१०)। प्रतिपत् प्रतिपत्तिर्बोधः। पुण्यां प्रतिपदमुद्भावयन् (अवदा० कुम्भजा०)। प्रतिपदं बुद्धिम्। ब्रह्मैव प्रतिपदं करोति (तै० सं० १।६।१०।४)। प्रतिपद् आरम्भः। त्रिष्टुभो म इमाः सूक्तप्रतिपद इत्येव विद्यात् (ऐ० ब्रा० ६।२१)। मे=शंसितुः। प्रतिपद आदिभूताः। वैश्वानराय धिषणामृतावृध इत्याग्निमारुतस्य प्रतिपत् (ऐ० ब्रा० ५।२)। पवस्व वाचो अग्रिय इति श्रैष्ठ्यकामः प्रतिपदं कुर्वीत (जै० ब्रा० १।६१)। इत्यनुवाकं शंसेदित्यर्थः। आज्यस्य प्रतिपदं करोति (तै० ब्रा० ३।८।१५।२)। प्रतिपदं प्राथम्यम्। निदर्शयित्वा रामाय सीतायाः प्रतिपादने (रा० ३।७३।१)। प्रतिपादने प्रापणे (उपायमिति शेषः)। त्रेताविमोक्षसमये द्वापरप्रतिपादने (भा० शां० १४१।१४)। अनावृष्टिरभूद् घोरेति पूर्वेणान्वयः। द्वापरप्रतिपादने द्वापरप्रारम्भे। असंमूढेन चास्त्राणां कर्तव्यं प्रतिपादनम् (भा० वन० १७३।७४)। प्रतिपादनं दानम्। अर्जुनं प्रतीन्द्रवचनमिदम्। द्रविणोपार्जनं भूरि पात्रे च प्रतिपादनम् (भा० शां० २३।११)। धनानामेष वै पन्थास्तीर्थेषु प्रतिपादनम् (भा० शां० २७०।५)। उक्तोऽर्थः।

—पा (पा पाने)। प्रतिपानह्रदान्पूर्णान् (रा० २।९१।७८)। भुक्तजरणार्थं यत्पीयते तत् प्रतिपानम्।

—पाल् (पा रक्षणे णिचि लुगागमः)। हित्वा त्वद्दर्शनं किञ्चिद् विघ्नं न प्रतिपालयेत् (भा० शां० ३६०।७)। प्रतिपालयेत् प्राप्नुयात्। त्वद्दर्शनं हित्वा तव दर्शनं विना। अरिष्टं गच्छ पन्थानं पुत्रान्मे प्रतिपालय (भा० उ० १३७।२४)। प्रतिपालय पाहि रक्ष अवेक्षस्व।

—पिष् (पिष्लृ संचूर्णने)। वरुणो ह वै सोमस्य राज्ञोऽमीवाक्षि प्रतिपिपेष तदश्वयत् (श० ब्रा० ४।२।१।११)। प्रतिपिपेष ताडयामास प्रजहार। पिनाकं प्रतिपिनष्ट्येनेन (नि० ३।२१)। प्रतिपिनष्टि चूर्णयति प्रणिहन्ति। स त्वा प्रतिपेक्ष्यति (छां० उ० २।२२।४)। उक्तोऽर्थः। स्फुरतां प्रतिपिष्टानामश्वानां शीघ्रगामिनाम्।......शब्दश्च तुमुलः समपद्यत (भा० शल्य० २३।७४)। प्रतिपिष्टानां संघृष्टानाम्। प्रतिविष्टानामिति पाठान्तरम्।

—पीड् (पीड अवगाहने)। सुग्रीवस्य शुभौ मूर्ध्नां चरणौ प्रत्यपीडयत् (रा० ५।६२।११)। समधर्षत्, अस्पृशत्। विविधानि (गोसहस्राणि) हरिष्यामः प्रतिपीड्य पुरं बलात् (भा० वि० ३०।१०)। प्रतिपीड्य बाधित्वा कदर्थयित्वा।

—पूज् (पूज पूजायाम्)। नारदोपि ययौ स्वर्गं दानवैः प्रतिपूजितः (स्कन्दपु० केदार० ८५।३०)। दानवैः प्रतिपूजितः=दानवैः प्रत्येकं

पूजितः । प्रतिपूज्य यथान्यायमिदं वचनमब्रुवन् (मनु० १।१) । मनुना पूर्वं स्वागतवचनेनासनदानादिना च पूजिताः सन्तस्तस्य पूजां कृत्वेत्यर्थः ।

—पूर् (पूरी आप्यायने) । रत्नैर्धनैश्च पशुभिः सस्यैश्चापि पृथग्विधैः । नगरं विषयश्चास्य प्रतिपूर्णस्तदाऽभवत् (भा० अनु० २।१५) ॥ प्रतिरनर्थकः पूर्ण इत्येवार्थः । न तल्लोके द्रव्यमस्ति यल्लोकं प्रतिपूरयेत् । समुद्रकल्पः पुरुषो न कदाचन पूर्यते (भा० अनु० ९३।४६) ॥ पूर्ववाक्ये प्रतिशब्दः श्रूयते, उत्तरस्मिंश्च तदभावः । समानश्चार्थः । तेन प्रतिशब्दोऽनर्थकः ।

—प्रच्छ् (प्रच्छ ज्ञीप्सायाम्) । सुभाषितप्रश्नप्रतिप्रश्नैः कालोऽतिवर्तते (तन्त्रा० ३।४) । प्रतिप्रश्नः प्रश्ने सति प्रश्नः ।

—पॄ (पॄ पालनपूरणयोः) । प्रति वामत्र वरमा जनाय पृणीतमुद्नो दिव्यस्य चारोः (ऋ० ७।६५।४) । प्रतिपृणीतं प्रतिदत्तम् ।

—प्लु (प्लुङ् प्लुवनतरणयोः) । प्रतिप्लवनमेवाथ··· (रा० १।३।३३) । प्रतिप्लवनं (सागरस्य) पुनस्तरणम् ।

—फल् (फल निष्पत्तौ) ।

—बन्ध् (बन्ध बन्धने) । वृक्षे नावं प्रतिबध्नीष्व (श० ब्रा० १।८।१।६) । बधानेत्यर्थः । प्रतिशब्दोर्थे विशेषं न करोति धात्वर्थानुवादी । प्रतिबध्नाति हि श्रेयः पूज्यपूजाव्यतिक्रमः (रघु० १।७९) । प्रतिबध्नाति रुणद्धि व्यवधत्ते । स हि बहुश्रुतो बहुदृष्टत्वादनेकविषये मन्त्रार्थे न क्वचित् प्रतिबध्यते (नि० १।१६।१० इत्यत्र दुर्गः) । न रुद्धप्रसरो भवतीत्यर्थः । वनाय पीतप्रतिबद्धवत्सां यशोधनो धेनुमृषेर्मुमोच (रघु० २।५) । प्रतिबद्धः पुनर्बद्धः, पूर्वं विसृष्टः पश्चाद् बद्धः । बहलानुरागकुरुविन्ददलप्रतिबद्धमध्यमिव दिग्वलयम् (शिशु० ९।८) । प्रतिबद्धमध्यम् प्रत्युप्तमध्यम् । प्रायः सर्वाः क्रियास्तस्मिन्प्रतिबद्धाः शरीरिणाम् (अष्टाङ्ग० सूत्र० १२।७) । तस्मिन्प्रतिबद्धास्तदायत्ताः, तन्निबन्धनाः, तन्मूलाः । नैतेषामित्संज्ञा प्रतिषिध्यतेऽपि तु तत्प्रतिबद्धं कार्यम् (पा० १।३।९ सूत्रे कैयटः) । उक्तोऽर्थः । स्वरितत्वप्रतिबद्धा हि शब्दानामनुवृत्तिः (पा० ७।१।३ सूत्रे न्यासः) । तदन्तरज्ञानमात्रप्रतिबद्धा हि सम्पदः (तन्त्रा० १।१।३३) । प्रतिबद्धा निबद्धा आधृताः । न प्रतिबद्धं गमयति वक्ति न वा प्रश्नमेकमपि पृष्टः । निगदति न च शिष्येभ्यः कथं स शास्त्रविज्ज्ञेयः (व० बृ० सं० २।१) ॥ प्रतिबद्धं पिहितं संवृतं गूढं जटिलम् । येन च प्रतिबद्धं तद् व्यापकम् (सां० कौ०) । प्रतिबद्धमविनाभूतम् । मनोहतः प्रतिहतः प्रतिबद्धो

हृतश्च स इत्यमरः। प्रतिबद्धो मनोहृतो भग्नाश इत्यनर्थान्तरम्। प्रयोगस्तु मृग्यः। स तपः प्रतिबन्धमन्युना (रघु० ८।८०)। प्रतिबन्धो विघ्नः प्रत्यूहो ऽन्तरायः। सखे दृढप्रतिबन्धो भव (शा० २)। प्रतिबन्धो विरोधः। न ननाम प्रतिबन्धेन न चावस्कन्दकर्मणा (हरि० २।४२।४५)। प्रतिबन्धो रोधः परिवेष्टनम् परिक्षेपः। धनुः प्रतिबन्धं भक्षयितुमारब्धः (तन्त्र० २।३)। प्रतिबन्धो मौर्वी।

—बाध् (बाधृ लोडने, लोडनं प्रतिघातः)। ततः स्म मागधं संख्ये प्रति बाधेम यद्वयम् (भा० सभा० १५।२४)। प्रतिबाधेम प्रतिबाधेमहि प्रतिहन्याम प्रतिप्रहरेम, हिंस्याम। तस्थौ च तत्रैव महाधनुष्मान्। शरैस्तदस्त्रं प्रतिबाधमानः (भा० भीष्म० ८५।२६)॥ प्रतिबाधमानः प्रतिघ्नन्, वारयन्। भविष्यन्ति वने यानि तपोविघ्नकराणि ते। रथेन प्रतिबाधिष्ये तानि सर्वाणि राघव (रा० २।५२।५०)॥ उक्तोऽर्थः। सुमन्त्रस्य रामं प्रत्युक्तिरियम्।

—बुध् (बुध अवगमने)। प्रसुप्तः प्रतिबुध्यते (मनु० १।७४)। प्रतिबुध्यते जागर्ति निद्रां जहाति। प्रति त्वा दुहितर्दिव उषो जीरा अभुत्स्महि (ऋ० ७।८१।३)। प्रत्यभुत्स्महि पश्यामः, त्वयि दृशं प्रेरयामः, उपेता त्वमिति जानीमः। प्रति स्तोमैरभुत्स्महि (ऋ० ४।५२।४)। स्तोमैस्त्वा त्वां हे उषः प्रत्यभुत्स्महि। तदपोहितुमर्हसि प्रिये प्रतिबोधेन विषादमाशु मे (रघु० ८।५४)। स्त्रीणामशिक्षितपटुत्वममानुषीषु संदृश्यते किमुत याः प्रतिबोधवत्यः (शा० ५।२२)। प्रतिबोधो बुद्धिरभ्यूहः। संमोहः खलु विस्मयनीयो न प्रतिबोधः (शा० ६)। प्रतिबोधः स्मृतिः। प्रतिबुद्धापि किं करिष्यामि (शा० ४)। प्रतिबुद्धा जागरिता। अप्रतिबुद्धोपि चूतप्रसवोऽत्र बन्धनभङ्गसुरभिर्भवति (शा० ६)। अविकसितः, अविजृम्भितः, अनुन्मीलितः अविनिद्रितः।

—ब्रू (ब्रूञ् व्यक्तायां वाचि)। मनश्चिन्मे हृद आ प्रत्यवोचत् (ऋ० ८।१००।५)। स एकया पृष्टो दशभिः प्रत्युवाच (ऐ० ब्रा० ७।१३)। प्रातर्वः प्रतिवक्तास्मि (ऐ० ब्रा० ३।२२)। प्रतिवक्तास्मि पृष्टमाख्यास्यामि, प्रश्नं वक्ष्यामि, प्रतिवचनमुत्तरं दास्यामि। स यदि त्वा पृच्छेत् तिस्र इति प्रतिब्रूयात् (तै० ब्रा० ३।११।८।२)। उक्तोऽर्थः। प्रत्याह यश्चापि नियुज्यमानः (भा० उ० ३७।२६)। प्रत्याह प्रत्याचष्टे, निषेधवचनमाह। स यदि पितरं वा मातरं वा .... किञ्चिद् भृशमिव प्रत्याह (छां० उ० ७।१५।२)। प्रतीपं वच आहेत्यर्थः। त्वयेदिन्द्र युजा वयं प्रति ब्रुवीमहि स्पृधः (ऋ० ८।९२।३२)। प्रतिब्रुवीमहि स्पृधः—अवस्कन्तॄनरातीन् पराणुदेमहीत्याह। त्वया युजा—

त्वया सख्या समम् । त्वया प्रतिब्रुवे युजा (ऋ० ७।३१।६) । त्वया ह स्विद्युजा वयं प्रति श्वसन्तं वृषभं ब्रुवीमहि (ऋ० ८।२१।११) । उक्तोऽर्थः । सजातैरिद्धोऽप्रतिब्रुवद्भिः (अथर्व० ३।८।३) । इद्धोऽग्निः । अप्रतिब्रुवद्भिरप्रतिकूलवादिभिः । एतेन योगः प्रत्युक्तः (ब्र० सू० २।१।३) । प्रत्युक्तः प्रत्याख्यातः प्रत्यादिष्टो निरस्तः ।

—भज् (भज् सेवायाम्) । इदं रत्नं चोरितचरं राजानं प्रतिभजते पुरा । पुरा प्रतिभजते = अचिरेण प्रतिनिवर्त्स्यति प्रतियास्यति । यावत्पुरानिपातयोर्लट् ।

—भा (भा दीप्तौ) । प्रतिभान्त्यद्य वनानि केतकीनाम् (घट० १५) । प्रतिभान्ति भान्ति शोभन्ते । अस्थाने प्रतिः । स्त्रीरत्नसृष्टिरपरा प्रतिभाति सा मे (शा० २।१०) । प्रतिभाति प्रतीयते, आभासते । त्रितं कूपेऽवहितमेतद् सूक्तं प्रतिबभौ (नि० ४।६।१) । उक्तोऽर्थः । नोत्तरं प्रतिभाति मे । न स्फुरति, बुद्धि नोपैति । सा भार्या प्रतिभाति मे (कथा०) । प्रतिभाति औपयिकी भाति । तमृते पाण्डवश्रेष्ठ वनं न प्रतिभाति मे (भा० वन० ८०।१२) । न प्रतिभाति न रोचते । कैकेयीसंश्रितं जल्पं नेदानीं प्रतिभाति माम् (रा० २।६०।१४) । न माम् प्रतिभाति न मे स्मृतिमुपारोहति, नाहं तं स्मरामि । अप्सराः प्रत्यभात्तस्य सा हि चित्ते न देवता (राज० ३।४१८) । प्रत्यभात् = आविरभूत् । अहो स्वामिनो धर्मशास्त्रं प्रति प्रतिभा (तन्त्रा० १।६) । प्रतिभा बोधः । नवनवोन्मेषशालिनी बुद्धिः प्रतिभा । प्रतिभामुपसर्गांश्चाप्युपसंगृह्य योगतः (भा० शां० २४०।२४) । प्रतिभा सकलशास्त्रार्थभानम् । संवत्सरं प्रतीक्षेताऽप्रतिभायाम् (गौ० ध० २।४।२८) । वक्तव्यं न प्रतिभातीति तदा ।

—भिद् (भिदिर् विदारणे) । स्वप्नकीर्तितविपक्षमङ्गनाः प्रत्यभैत्सुरवदन्त्य एव तम् (रघु० १६।२२) । प्रत्यभैत्सुः प्रतिचक्रुः, तिरश्चक्रुः । प्रतिभिद्य कान्तमपराधकृतम् (शिशु० ६।५८) । प्रतिभिद्य = अधिक्षिप्य = अपोह्य = गर्हित्वा = निन्दित्वा । निराकृत्येति वा । दूर्वाप्रवालैः प्रतिभिन्नशोभम् (कु० ७।७) । विशेषितशोभम्, उपचितशोभम् इत्यर्थः । चन्द्रेण प्रतिभिन्नमौलेः (कु० ७।३५) । सङ्गतमुकुटस्य । समर्थे प्रतिः ।

—भू (भू सत्तायाम्) । प्रति द्युमन्तं सुवितात भूषति (ऋ० १०।४०।१) । प्रतिभूषति लेटि सिपि रूपम् । (यान्तं) द्युमन्तं (रथं) प्रतिभूषति = समर्थयति । एषा विद्येतरे विद्ये प्रतिभविष्यति (श० ब्रा० ४।६।७।१६) । प्रतिभविष्यति तुल्या

भविष्यति । प्रतिभवति तस्य ग्रहीतुः स्थाने भवतीति प्रतिभूरिति नारदस्मृतौ भवस्वामी । ग्रामेयान्ग्रामदोषांश्च ग्रामिकः प्रतिभावयेत् । तान्ब्रूयाद् दशपायासौ स तु विंशतिपाय वै (भा० शां० ८७।४) ।। प्रतिभावयेत् विभावयेत्, उपलभेत, जानीयात् । कुलिशं सर्वलोहानामम्भसां शैलसेतवः । अभेद्या प्रतिभाव्यन्ते ··(राज० ६।२७३) । उक्तोऽर्थः । य उ हैवंविदं । स्वेषु प्रतिबुभूषति (श० ब्रा० १०।३।५।६) । प्रतिद्वन्द्वीभवितुमिच्छतीत्याह । न दुर्बलः प्रातिभाव्यं करोति (भा० उ० ३३।११०)। प्रतिभावः प्रतिकूलश्चित्ताभिप्रायः । स एव प्रातिभाव्यम्, विरोध इति क्लिष्टा कल्पना नीलकण्ठस्य । प्रतिभुवो भावः कर्म वा प्रातिभाव्यमिति व्युत्पत्तिस्तु प्रसिद्धेरादर्तव्या । न चार्थासङ्गतिश्शङ्कनीया । दुर्बलस्यासमर्थस्य कृशधनस्य प्रातिभाव्येऽयोगात् ।

—भृ (भृञ् भरणे) । प्रति धाना भरत तूयमस्मै (ऋ० ३।५२।८) । शीघ्रमस्मा इन्द्राय धानाः प्रतिभरत उपहरतेत्याह ।

—मन् (मनु अवबोधने) । तदु ह शौनकः कापेयः प्रतिमन्वानः प्रत्येयाय (छां० उ० ४।३।७) । तद् (ब्रह्मचारिणो वचः) प्रतिमन्वानो मनसा विमृशन्, प्रतिवस्तु चिन्तयन्नित्यर्थः ।

—मा (माङ् माने) । गायत्रेण प्रति मिमीतेऽर्कम् (ऋ० १।१६४।२४) । प्रतिमिमीतेऽनुकरोति । नराशंसः प्रति शूरो मिमानः (तै० ब्रा० २।६।८।१) । प्रतिमिमानः परिच्छिन्दन् । असौ वै लोकः प्रतिमेव ह्यन्तरिक्षलोके प्रतिमित इव (श० ब्रा० ८।३।३।५) । प्रतिमितः प्रतिबिम्बितः प्रतिफलितः । प्रतिमितरविदीपोद्भासिशुभ्रातपत्र० (राज० ५।४८३) । उक्तोऽर्थः । कासीत् प्रमा प्रतिमा किं निदानम् (ऋ० १०।१३०।३) । प्रतिमा प्रतिकृतिः । सहस्रस्य प्रतिमासि (वा० सं० १५।६५) । यज्ञस्य (सोमः) प्रमाभिमोन्मा प्रतिमा वेद्यां क्रियमाणायाम् (काठक० ३४।१४) । अतीव सर्वलोकेषु यशसाऽप्रतिमः सदा (हरि० १।२६।३) । अप्रतिमोऽनुपमः । चन्द्रप्रतिमः । चन्द्रोपमः । प्रतिमशब्द उत्तरपदस्थः स्वसदृशे वर्तते । वृष्णो वध्रिः प्रतिमानं बुभूषन् (ऋ० १।३२। ७) । प्रतिमानं तुल्यबलः सपत्नः, अभ्यमित्रीयः । आससाद रणे भोजं प्रतिमानं धनुष्मताम् (भा० द्रोण० ११६।३१) । सोऽर्जुनेन हतः कर्णः प्रतिमानं धनुष्मताम् (भा० कर्ण० ८।१८) । प्रतिमानं ध्वजभूतः । प्रतिमानेषु कुम्भेषु दन्तवेष्टेषु चापरे (भा० कर्ण० २८।३१) । प्रतिमानं गजकुम्भान्तरालम् । अधः कुम्भस्य वाहित्थं प्रतिमानमधोऽस्य यदित्यमरः ।

—मान् (मान पूजायाम्) । स्विष्ट्याऽभितुष्टानि हि दैवतानि भूतानि वृष्ट्या प्रतिमानयन्ति (अवदा० यज्ञजा० ८) । प्रतिमानयन्ति प्रतिपूजयन्ति ।

—मीव् (मीव स्थौल्ये)। पश्चाद्वातं प्रति मीवति (तै० सं० २।४।६।१)। प्रतिमीवति क्षीणं करोति, कृशयति। उपसर्गकृतो धात्वर्थबाधः।

—मुच् (मुच्लृ मोक्षणे)। अप्रजस्तामस्वगतामवर्तिम्। उग्र ईशानः प्रति मुञ्च तस्मिन् (अथर्व० ६।२।३)॥ प्रतिमुञ्च = मुञ्च। प्रतिशब्दो धात्वर्थानुवादी। प्रतिमुञ्चन्ति वत्सान् (श० ब्रा० ११।१।४।१)। मुञ्चन्ति विसृजन्तीत्यर्थः। प्रतिरपार्थकः। ये त्वां प्रोत्साहयन्त्येते नैते कृत्याय कर्हिचित्। वैरं परेषां ग्रीवायां प्रतिमोक्ष्यन्ति संयुगे (भा० उ० १२५।१३)॥ उक्तोऽर्थः। परेषामस्मदादीनाम्। तत्स्वीकृत्यानुगृह्णातु देवस्तां प्रतिमुच्य वा (कथा० ६१।१२)। अद्य ते पुरुषव्याघ्र प्रतिमोक्ष्ये ऋणं तव (भा० भीष्म० १०६। २६)। प्रतिमोक्ष्ये मोक्ष्ये विगणयिष्यामि विनेष्ये शोधयिष्यामि। प्रजा रक्षन् परं शक्त्या किल्बिषात्प्रतिमुच्यते (मनु० १०।११८)। पापाद्धीयत इत्यर्थः। विश्वा रूपाणि प्रति मुञ्चते कविः (ऋ० ५।८१।२, वा० सं० १२।२)। प्रतिमुञ्चते बध्नाति आत्मनि धारयतीति सायणः। प्रतिमुञ्चते प्रतिबध्नाति द्रव्येष्वपहृत्य शार्वरं तमः प्रकाशयतीति उवटः। अस्थाने प्रतिशब्दस्य प्रयोग उवटेन। प्रतिमुञ्चतेर्बन्धनमर्थमुदीर्य प्रकाशनेऽर्थे तात्पर्यवचनं दुर्वचम्। पिशङ्गं द्रापिं प्रति मुञ्चते कविः (ऋ० ४।५३।२)। पिङ्गं वासः परिधत्त इत्यर्थः। ब्रह्मज्यस्य प्रति मुञ्च पाशान् (अथर्व० १३।३।१)। प्रतिमुञ्च बधान, सिनीहि। वरुणो वरुणपाशैः प्रत्यमुञ्चत् (शां० ब्रा० ५।६)। उक्तोऽर्थः। ये रूपाणि प्रतिमुञ्चमाना असुराः सन्तः स्वधया चरन्ति (वा० सं० २।३०)। पितृरूपाणि बध्नन्त आत्मनि दधत आतिष्ठन्तीत्यर्थः। त्रिंशत् स्वसार उपयन्ति निष्कृतं समानं केतुं प्रतिमुञ्चमानाः (तै० सं० ४।३।११।३)। उक्तोऽर्थः। ज्योतिष्मती प्रति मुञ्चते नभो रात्री देवी (तै० सं० ४।३।११।३)। छायासु प्रतिमुक्तशष्पकवलं निद्रायते गोकुलम् (मृच्छ० ८।११)। प्रतिमुक्तो मुक्तस्त्यक्तः। गृहीतप्रतिमुक्तस्य...महेन्द्रनाथस्य (रघु० ४।४३)। प्रतिमुक्तोऽपरतन्त्रीकृतः। आमुक्तः प्रतिमुक्तश्च पिनद्धश्चापिनद्धवदित्यमरः। भ्रूणहत्याया एवैषा रूपं प्रतिमुच्यास्ते (व० ध० सू० ५।८)। प्रतिमुच्य परिगृह्य, आस्थाय। तमेकदा मणिं कण्ठे प्रतिमुच्य महाप्रभम् (भा० पु० १०।५६।१३)। प्रतिमुच्य बद्ध्वा, आसज्य। अमुं तुरङ्गं प्रतिमोक्तुमर्हसि (रघु० ३।४६)। प्रतिमोक्तुं मोक्तुं विस्रष्टुम्। रक्षोवधान्तो न च मे प्रयासो व्यर्थः स वैरप्रतिमोचनाय (रघु० १४।४१)। वैरप्रतिमोचनं वैरनियतिनम्।

—मुद् (मुद हर्षे)। ओषधयः प्रतिमोदध्वमग्निमेतम् (वा० सं० ११। ४७)। प्रत्युत्थानादिभिः प्रतिहर्षयताग्निम् इत्याह।

—मुह् (मुह वैचित्ये)। परनेयोऽग्रणीर्यस्य स मार्गान्प्रतिमुह्यति (भा० सभा० ५५।४)। मार्गेष्वाश्रयणीयेषु विमुह्यतीत्यर्थः। प्रतिः कर्मप्रवचनीयो वा स्यात्।

—मृज् (मृजू शुद्धौ)। विष्णोः स्तूपोऽसीति कर्षन्निवाहवनीयं प्रति प्रस्तरमपादत्ते...न प्रतिमार्ष्टि (आप० श्रौ० २।३।८।५)। प्रतिमार्ष्टि अग्रादारभ्य स्पृशति।

—मृश् (मृश आमर्शने, आमर्शनं स्पर्शः)। यस्ते गर्भं प्रतिमृशात् (अथर्व० ८।६।१८)। प्रतिमृशात् पीडयेत् (यथा जीवो न जायेत)।

—मोक्ष् (मोक्ष उत्सर्गे मुच्लृ मोक्षणे, जसि मोक्षणे इत्यत्र ज्ञापितः)। न्यायतश्च करादानं स्वयं च प्रतिमोक्षणम् (का० नी० सा० १४।५४)।

—यज् (यज देवपूजासंगतिकरणदानेषु)। आज्येनेतरे प्रतियजन्त आसते (श० ब्रा० ४।६।८।१९)। प्रतियजन्तः केनाप्युद्देशेन यजन्तः। अत्र वा दिशः प्रतियजेत् (आप० श्रौ० ७।८।२५।१४)। प्रतिदिशं यागं कुर्यादित्यर्थः।

—यत् (यती प्रयत्ने, यत निकारोपस्कारयोः)। त्वमिमानि रक्षांसि प्रतियतस्व (श० ब्रा० ६।२।३।३) प्रतियतस्व रुन्द्धि, प्रतिकुरु, प्रतिविधेहि। कृञः प्रतियत्ने (पा० २।३।५३)। उपात् प्रतियत्नवैकृतवाक्याध्याहारेषु च (पा० ६।१।१३६)। सतो गुणान्तराधानमाधिक्याय, वृद्धस्य वा तादवस्थ्याय समीहा प्रतियत्नः। सुगन्धितामप्रतियत्नपूर्वां बिभ्रन्ति यत्र प्रमदाय पुंसाम् (शिशु० ३।५४)। प्रतियत्नस्तु संस्कार इति वैजयन्तीति मल्लिः। कृत्वा हि सुमहत्कर्म हत्वा भीष्ममुखान्कुरून्। जयः प्राप्तो यशः प्राग्र्यं वैरं च प्रतियातितम् (भा० शल्य० ५८।११)॥ प्रतियातितं निर्यातितं शोधितम्। भ्रातॄंस्तान् विपिने त्यक्त्वा वैरमप्रतियात्य च (भा० वन० ३७।५५)। अप्रतियात्य अनिर्यात्य। अनिर्विदा या विदधे विधात्रा पृथ्वी पृथिव्याः प्रतियातनेव (शिशु० ३।३४)। प्रतियातना प्रतिकृतिः। तथा चामरः पठति— प्रतियातना प्रतिच्छाया प्रतिकृतिरिति।

—यम् (यम उपरमे)। यया शूर प्रत्यस्मभ्यं यंसि त्मनमूर्जं न विश्वध क्षरध्यै (ऋ० १।६३।८)। प्रतियंसि प्रतियच्छसि, प्रयच्छसि।

—या (या प्रापणे, प्रापणमिह गतिः)। उभा यातं प्रति हव्यानि वीतये (ऋ० ८।६०।७)। प्रतियातम् इतोऽभिमुखमेतम्। भानावस्तं प्रतियाते महीध्रम् (भा० ५।७२१६)। अस्ताचलमुपेते सति। वेगेनापततस्तांस्तु

प्रभिन्नानिव वारणान्। पाण्डुपुत्रौ महेष्वासौ प्रतियातावरिन्दमौ (भा० आदि० १८६।१४)॥ प्रतियानमिह युयुत्सयाऽभिमुखं गमनम्। गयं नृपः कः प्रतियाति कर्मभिः (भा० पु० ५।१५।६)। को नृपो गयेन राज्ञा साम्यमुपैतुमर्हतीत्याह भागवतकारः। प्रतियानं साम्यप्राप्तिरिति तस्यैककस्योत्प्रेक्षा। या माऽभजन् दुर्जरगेहशृङ्खलाः संवृश्च्य तद्वः प्रतियातु साधुना (भा० पु० १०।३२।२२)। तच्छब्दस्तृतीये चरणे पठितं स्वसाधुकृत्यमित्येतत् प्रत्यवमृशति। तद्वः साधु कर्म युष्माकं साधुत्वेनैव शक्यं निर्यातयितुं न मत्कृतेन यत्नेनेति कवेराशयः कथंचिदुन्नेयो भवति।

—याच् (टुयाचृ याच्ञायाम्)। गोभिस्तु भक्षितं सस्यं यो नरः प्रतियाचते (याज्ञ० २।१६१ मिताक्षरायामुद्धृतं नारदवचनम्)। यावन्मे सस्यं तव गोभिर्भक्षितं तावन्मे प्रतिदीयतामित्यभियुङ्क्त इत्यर्थः।

—यु (यु मिश्रणामिश्रणयोः)। प्राणानेवास्य प्रतीचः प्रति यौति (तै० सं० ३।४।८।५)। प्रतियौति नियच्छति प्रतिरुणद्धि। प्रातिकूल्येन प्रवर्तयतीति तु भट्टभास्करः। विष्णोः स्तूपोऽसीति कर्षन्निवाहवनीयं प्रति प्रस्तरमपादत्ते नोद्यौति न प्रयौति न प्रतियौति (आप० श्रौ० २।३।८।५)। न प्रतियौति न पश्चात्सारयतीति धूर्तस्वामिभाष्यम्। न प्रतिचीनं हरतीति रुद्रदत्तः। सोऽयं शब्दभेदो नार्थभेदः। प्रतियुतो वरुणस्य पाशः (तै० सं० १।४।४५।३)। प्रतियुतः प्रत्येकं पृथक् कृत इति भट्टभास्करः। तै० ब्रा० २।६।६।४ इत्यत्रापीदं श्रूयते। तत्र प्रतियुतस्त्यक्त इति सायणः।

—युज् (युजिर् योगे)। परि ष्वजध्वं दश कक्ष्याभिरुभे धुरौ प्रति वह्नि युनक्त (ऋ० १०।१०१।१०)। प्रतियुनक्त=प्रतियुङ्क्त बध्नीत। ये मदर्थे हताः शूरास्तेषां कृतमनुस्मरन्। ऋणं तत्प्रतियुञ्जानो न राज्ये मन आदधे (भा० शल्य० ५।४४)॥ ऋणनिर्यातनं चिन्तयन्नित्यर्थः। ऋणस्य दाता प्रयोक्तोच्यते। ऋणदानं च प्रयोगः। तस्य प्रत्यर्पणं प्रतियोगः। दहत्यशेषं प्रतियोगिगर्वम् (विक्रम० १।११७)। प्रतियोगी परिपन्थी, शत्रुः। रागप्रतियोगी विरागः। विरोधीत्यर्थः। प्रतियोगिनं दृष्ट्वा प्रतियोगी निवर्तते। प्रतियोगिनं सत्प्रतिपक्षम्। तन्मात्रप्रतियोगिकम्। विद्यमानवस्तुमात्रनिरूपितम् इत्यर्थः। यस्याभावः स प्रतियोगी।

—युध् (युध सम्प्रहारे)। तांश्च स प्रतियुध्यन्वै युद्धे राजा प्रवासितः (रा० १।७०।२६)। प्रतियुध्यन् प्रतिपक्षतया युध्यन् (युध्यमानः) इति तिलकः। प्रतिशब्दस्य सार्थकतामनिच्छन्नेवमाह तिलककारः। अहं तु मन्ये

प्रतिरुपसर्गः केवलं सकर्मकतामापादयति धातोरर्थे तु नान्तरं करोति । तथा चोदाहृतिभिर्वक्ष्यमाणाभिर्व्यक्तं भविष्यति । विप्ररूपं विधायेदं मन्ये मां प्रतियुध्यसे (भा० आदि० १६०।२८)। प्रतियोद्धुं न शक्यो हि मानुषैरिह संयुगे (भा० अनु० १४८।३१) । कथं भीष्ममहं संख्ये द्रोणं च मधुसूदन । इषुभिः प्रतियोत्स्यामि (गीता २।४) । केवलो युधिरकर्मकः । आह च वृत्तिकारः—युधिरकर्मकः, अन्तर्भावितण्यर्थः सकर्मको भवति । (पा० ३।२।६५ सूत्रे) । प्रतिपक्षभावस्त्वन्तरेणापि प्रतिशब्दं गम्यत एव ।

—रक्ष् (रक्ष पालने) । विश्वा आशाः प्रति रक्षन्त्वेते (अथर्व० १०।८। ३६) । अग्नेरनीकमप आविवेशापांनपात् प्रतिरक्षन्नसुर्यम् (वा० सं० ८।२४)। असुर्यमसुरस्य मायादिकं प्रतिरक्षन् निवर्तयन् । आत्मानं रक्षन्निति तु शब्दार्थः ।

—रञ्ज् (रञ्ज रागे) । व्यवहारेष्वसाध्यानां लोके वा प्रतिरज्यताम् (प्रतिज्ञा० ३।३) ।

—रभ् (रभ राभस्ये) । सर्वेणापररात्रेण विरम्य प्रत्यारम्भो न विद्यते (कौ० सू० १४१।४१) । प्रत्यारम्भः पुनरारम्भः । नह प्रत्यारम्भे (पा० ८।१। ३१) । चोदितस्यावधीरणे उपालिप्सया प्रतिषेधयुक्तः प्रत्यारम्भः क्रियते—नह मोक्ष्यसे इति वृत्तिः । निषेधयुक्त आरम्भः प्रत्यारम्भ इति सिद्धान्तकौमुद्यां दीक्षितः ।

—रम् (रमु क्रीडायाम्) । रामो हि सर्वलोकस्य हिते प्रतिरतः सदा (रा० ६।१०४।३७) । प्रतिरतो निरतः, सहर्षं प्रवृत्तः ।

—रस् (रस शब्दे) । केनास्मत्सिंहनादप्रतिरसितसखो दुन्दुभिर्वादितोऽयम् (वेणी० १।२२) । प्रतिरसितं प्रतिश्रुत् प्रतिशब्दः प्रतिध्वनिः ।

—राज् (राजृ दीप्तौ) । अनूपोपवनैः कान्तैः कान्ता (कान्त्या) जनमनोहरा । सतारका द्यौरिव सा द्वारका प्रत्यराजत (हरि० २।५८।५२) ॥ प्रत्यराजत अशोभताऽऽत्मना ।

—राध् (राध साध संसिद्धौ) । प्रतिरित्सामि जिहिंसिषामि । पा० ७।४।५४) इत्यत्र सनि राधो हिंसायामच इस् वक्तव्य इति वार्तिकम् । प्रतिशब्दो हिंसार्थस्य द्योतकः । तस्य ह प्रतिराद्धस्य त्रेधा साधुकृत्या विनश्यति (जै० ब्रा० १।४६) । प्रतिराद्धो हिंसितः क्षतः । राधो हिंसायाम् (६।४।१२३) इत्यत्र राधेर्हिंसार्थः स्वीकृतः । द्रव्यापचये त्ववरं प्रतिराद्धः (गौ० ध० ३।४।८)।

प्रतिराद्धोऽभियुक्तः । प्रतिराधेन वै देवा असुरान् प्रतिराध्य (ऐ० ब्रा० ६।३३) प्रतिराध्य प्रतिकूलमाचर्य, अभिभूय ।

—रु (रु शब्दे) । एकरुते न शुभं यदि वा स्यादेकरुते प्रतिरौति चिरेण (व० बृ० सं० ८८।३७) । प्रतिरौति प्रतिरवं करोति । अन्यप्रतिरुता याम्या सोद्बन्धमृतशंसिनी (व० बृ० सं० ९०।७) । अन्यया शिवया कृतं रवमनुकृत्य कृतरवा ।

—रुध् (रुधिर् आवरणे) । यज्ञश्चेत्प्रतिरुद्धः स्यादेकेनाङ्गेन यज्वनः (मनु० ११।११) । प्रतिरुद्धोऽसम्पन्नोऽसम्पूर्णः । ···भ्रातरं पूर्वजं हि यः । अश्मभिः प्रत्यरौत्सीत् ·····बिले (रा० ४।५५।३) ।। प्रत्यरौत्सीत् = अप्यधात् ।

—रुह् (रुह बीजजन्मनि) । छिन्नस्य यदि वृक्षस्य न मूलं प्रतिरोहति (भा० शां० ६८९६) । उत्खातप्रतिरोपिताः (कलमाः) (रघु० ४।३७) । प्रतिरोपिताः पुना रोपिता रोहिताः ।

—लभ् (डुलभष् प्राप्तौ) । इन्द्रात् प्रवृत्तिम् (रा० ३।६३।२९) । प्रतिलभ्य = उपलभ्य, ज्ञात्वा । प्रतिलभ्य च धर्मात्मा शिष्यं धर्मपरायणम् । वरेण छन्दयामास (भा० अनु० ४१।३४)। प्रतिलभ्य अनुभूय, अवेत्य, विज्ञाय । पितरि च सुरपुरमुपगते स्त्रं राज्यं प्रतिलेभे (अवदा० सुत० जा०) । प्रतिलेभे = पुनर्लेभे ।

—लिख् (लिख अक्षरविन्यासे) । इदमिदानीमनेन प्रतिलिखितम् (माल० १) । प्रत्युत्तरं लिखितम् ।

—ली (लीङ् श्लेषणे) । प्रतिलीनस्तदहरासीत् (शां० गृ० ३।१।१२) ।

—वच् (वच् व्यक्तायां वाचि) । स तथेत्युक्त्वा प्रत्युक्तः पुनराजगाम (ऐ० ब्रा० ६।३४) । प्रत्युक्त आगच्छेतीरित इति षड्गुरुशिष्यः । उक्तं प्रतिवचनं प्राप्त इति सायणः । न चास्मि प्रतिवक्तव्यः सीतां प्रति कथं चन (रा० ७।४५।१९) । प्रतिवक्तव्यो निरोद्धव्यः ।

—वद् (वद व्यक्तायां वाचि) । राज्ञा च प्रत्यवादि सः (कुम्भकर्णः) (भट्टि० १५।६) । प्रत्यवादि प्रतिवचनमुक्तः । स चापि तत् प्रत्यवदद्यथोक्तम् (कठोप० १।१५) । कथितमनुकथितवान्, अन्ववदत्, प्रत्युवचारयत् । किंचित् किंचित्प्रतिवदंस्तूष्णीमासं मुहुर्मुहुः (भा० उ० १३६।१४) । विरोधिवचनं ब्रुवन् इत्यर्थः । इति प्रत्युदिता याम्या दूताः (भा० पु० ६।२।२१) । प्रत्युदिताः

प्रतिसन्दिष्टाः । अप्रतिवादिनी ह्यस्य गृहेषु पत्नी भवति (ऐ० ब्रा० ३।२४)। अप्रतिवादिनी = अप्रतिकूलवादिनी ।

**—वप्** (डुवप बीजसन्ताने)। तान्येव तेन प्रत्युप्यन्ते (तै० ब्रा० १।२।६।५)। स्थाप्यन्त इत्यर्थः ।.... मौलिमन्तर्गतस्रजम् । प्रत्यूपुः पद्मरागेण प्रभामण्डलशोभिना (रघु० १७।२३)। प्रत्यूपुः कृतप्रतिवापं चक्रुः। पद्मरागखचितं व्यदधुः। भस्मना शुनः पदं प्रतिवपेत् (आश्व० श्रौ० ३।१०।१४)। प्रतिवपेत् अवकिरेत् आकिरेत्, आच्छादयेत् । मुकुटप्रत्युप्तमुक्ताकण... बृहद्बाहुः (राज० ३।५२९)। मुकुटे प्रत्युप्ता लग्ना मुक्ताकणाः। दुर्जरभर्तुरङ्गेषु प्रत्युप्तामिव वल्लभाम् (अपश्यत्) (राज० ३।५०७)। प्रत्युप्ताम् दृढमासक्तां सुष्ठु श्लिष्टाम् । प्रत्युप्तस्येव दयिते तृष्णादीर्घस्य चक्षुषः (उत्तर० ३।४६)। प्रत्युप्तं खचितं बलवद् बद्धम् । यथा तिरश्चीनमलातशल्यं प्रत्युप्तमन्तः (उत्तर० ३।३५)। अन्तः प्रत्युप्तमन्तर्निखातम् । प्रतीवापः क्वथिते क्षीरादौ तक्रादेर्विक्षेपः, आतञ्चनम् ।

**—वस्** (वस निवासे)। समुद्रकुक्षिमाश्रित्य प्रतिवसन्त्युत (भा० वन० १२०।६३)। आवसथं कृत्वा तिष्ठन्ति। देवानामुपरिष्टाच्च गावः प्रतिवसन्ति वै (भा० अनु० ८१।४)।

**—वस्** (वस आच्छादने)। यस्त्वां राजन्मया सार्धमजिनैः प्रतिवासितम् (भा० वन० २७।४)। प्रतिवासितं संवीतम् ।

**—वह्** (वह प्रापणे)। इमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढाः (छां० उ० ८।३।२)। प्रत्यूढा विपरीतं नीताः। प्रत्यूढं जन्यं भयम् (भा० श्रौ० ६।१०।१२)। प्रत्यूढमपनीतम् । तं यजमानस्य दक्षिण ऊरौ प्रत्युह्य (श० ब्रा० ३।३।३।१०)।

**—विद्** (विद ज्ञाने)। प्रति त्वा पर्वतिर्वेत्तु (तै० सं० १।१।६।१)। प्रतिवेत्तु अनुजानातु मातेव दुहितरमुत्सङ्गस्थाम् इति भट्टभास्करः। प्रति त्वादितिर्वेत्तु (वा० सं० १।१४)। प्रतिवेत्तु प्रतिगृह्य मदीयेयं त्वगिति जानातु इति महीधरः। जानातु अभिजानातु प्रत्यभिजानातु परिचिनोत्वित्यनर्थान्तरम् । ततोऽहं ज्वलमानं (= ज्वलत्) पायसं प्रत्यवेदयम् (भा० अनु० १५६।२४)। प्रत्यवेदयं न्यवेदयम् । सुखं पृष्ट्वा प्रतिवेद्यात्मसंस्थाम् (भा० उ० ३८।२)। प्रतिवेद्य निवेद्य उपवर्ण्य । गन्धप्रतिवेदी च रूपरसाद्यनुमिनोति (३।१।३ न्यायभाष्ये)। प्रतिवेदनमुपलम्भो ज्ञानम् ।

**—विद्** (विद्लृ लाभे)। स देवेषु न प्रत्यविन्दत् (ऐ० ब्रा० ४।५)। स इन्द्रोऽपरं स्वातिरिक्तं शूरं नाप्नोदित्याह । पञ्चालराजस्तु विषण्णरूप-

स्तान् पाण्डवानप्रतिविन्दमानः (भा० आदि० १९२।१४) अप्रतिविन्दमानो ऽप्रतिलभमानः। अजानान इति तात्पर्यार्थः।

—विध् (विध परिचर्यायां छान्दसः)। प्रति वां सूर उदित विधेम नमोभिर्मित्रावरुणोत हव्यैः (ऋ० ७।६३।५)। प्रतिविधेम सपर्येम वरिवस्येम।

—विश् (विश प्रवेशने)। स्फुरतां प्रतिविष्टानामश्वानां शीघ्रगामिनाम् (भा० शल्य० २३।७४)। प्रतिविष्टानां प्रतिनिविष्टानाम्। तद् दक्षिणतः प्रतिवेशतः केशवात् पुरुषात्सीसेन परिस्रुतं क्रीणाति (श० ब्रा० ५।१।२।१४)। प्रतिवेशः संनिहितं गृहमुच्यते। तद्वासी च लोके प्रतिवेशीति भण्यते। प्रतिवेशोऽसि प्र मा भाहि प्र मा पद्यस्व (तै० उ० १ ४।३)। प्रतिवेशः श्रमापनयनस्थानमासन्नगृहम्। क्षेत्रस्य पतिं प्रतिवेशमीमहे (ऋ० १०।६६।१३)। प्रतिवेशः सदेशवर्ती, निकटे वसन्। मा ते अग्ने प्रतिवेशा रिषाम (अथर्व० ३।१५।८, १९।५।५)। प्रतिशब्दः सान्निध्यवाची। प्रतिवेशाः परिचरणादिना त्वत्प्रत्यासन्नाः। हतासो अस्य वेशसो हतासः प्रतिवेशसः (अथर्व० ४।२३।१२)। प्रतिवेशसः प्रतिवेशाः। प्रतिवेशिनः। प्रतिवेशात् पत्न्यश्नाति (भा० श्रौ० १३।१६)। दक्षिणाग्नौ पत्न्याः प्रतिवेशमोदनं पचति (आप० श्रौ० ८।१०।१०)। प्रतिवेशं प्रातिस्विकम्।

—वृत् (वृतु वर्तने)। अयं स्राक्त्यो मणिः प्रतीवर्तः (अथर्व० ८।५।४)। प्रतीवर्तः प्रतिकूलं प्रतिमुखं वर्तयत्यनेन।

—वृष् (वृषु सेचने)। शरौघेण प्रत्यवर्षं गुरुं तम् (भा० उ० ७२१५)। प्रत्यवर्षमभ्यवर्षमभ्यषिञ्चम्।

—व्यध् (व्यध ताडने)। प्रत्यविध्यदमेयात्मा किरीटी भरतर्षभ (भा० भीष्म० ५२।२९)। स तु बाणैः शितैस्तूर्णं प्रत्यविध्यत मारिष (भा० द्रोण० ४७।१४)। प्रत्यविध्यत् परैर्विद्धः सन्नविध्यदित्यर्थः। अप्रतिविद्धस्यात्ययः सपादः सप्तविंशतिपणः (कौ० अ० २।१९।४१)। अप्रतिविद्धोऽमुद्रितः। अत्ययो दण्डः।

—शंस् (शंसु स्तुतौ)। कथं नु भगवः शस्तं कथमप्रतिशस्तमिति (श० ११।५।५।१०)। अप्रतिशस्तम् अप्रतिषिद्धम्।

—शक् (शक्लृ शक्तौ)। पाण्डवाश्चान्वपद्यन्त प्रतिशेकुर्न सैन्धवम् (भा० द्रोण० ४३।१८)। न प्रतिशेकुः प्रतिरोद्धुं नाशक्नुवन्नित्यर्थः।

—शास् (शासु अनुशिष्टौ)। कृतवानप्रतिशासनं जगत् (रघु० ८।२७)।

(सोऽजः) जगदनन्यशासनमकरोत्, एकातपत्रं जगतः प्रभुत्वमध्यगमदित्यर्थः ।

—शी (शीङ् स्वप्ने) । प्रतिशिष्ये जलनिधिं विधिवत्कुशसंस्तरे (भा० वन० २८३।३२) । अरिरात्सयोपोषितः सन्वारांनिधेरभिमुखे शयिष्ये यावत्प्रसादमित्याह । अनया किलास्मै प्रतिशयिताय स्वप्ने समादिष्टम् (दशकु०) । उक्तोऽर्थः । सर्वस्य प्रतिशीवरी भूमिस्त्वोपस्थ आधित (तै० सं १।४।४०) । प्रतिशीवरी अभिमुखशायिनीति सायणः । प्रतिशीवरी प्रत्येकं सुखेन शयनाधिकरणभूता । शेतेरौणादिकः क्वरच् इति भट्टभास्करः । मा हिंसीस्तत्र नो भूमे सर्वस्य प्रतिशीवरि (अथर्व० १२।१।३४) ।

—शॄ (शॄञ् हिंसायाम्) । अप्रतिशराय (ऐ० ब्रा० १।२६) । अप्रतिघातायेत्यर्थः ।

—श्यै (श्यैङ् गतौ) । सन्धारणं मूत्रपुरीषयोश्च सद्यः प्रतिश्यायनिदानमुक्तम् (सुश्रुत० उत्तर० २४।२) । वातं प्रति अभिमुखं श्यायो गमनं कफादीनां यत्र स प्रतिश्याय इति डल्हणः । प्रतिशीनः साभिष्यन्दः, सप्रवाहः ।

—श्रि (श्रिञ् सेवायाम्) । ब्राह्मण्या जीवपत्न्या जीवप्रजायाः अगार एतां रात्रिं प्रतिश्रयेत् (आश्व० गृ० १।५।२१) । प्रतिश्रयो नाम परकीयगृहे वास इति हरदत्तः । जीवः पतिर्यस्याः सा जीवपत्नी । तं च सर्वासु वेलासु भक्ष्यभोज्यप्रतिश्रयैः । पूजयामास सा कन्या ······ (भा० वन० ३०५।३) । प्रतिश्रयैराश्रयैः शय्यासनाद्यैः । प्रतिश्रयं च वासार्थम् (भा० शां० १६८।३२) । प्रतिश्रयो गृहं शरणम् । चण्डालश्वपचानां तु बहिर्ग्रामात्प्रतिश्रयः (मनु० १०।५१) । प्रतिश्रयो वसतिः । येषां चान्नानि भुञ्जीत यत्र च स्यात्प्रतिश्रयः (भा० वन० ३।११४७२) । प्रतिश्रय आश्रयो वासः । यत्रसायंप्रतिश्रयाः (तै० १३।३०) । नष्टदारधनः सोयं नाट्याचार्येऽप्रतिश्रयः (कथा० ५२।२६५) । अप्रतिश्रयोऽनिकेतः । सार्थिकानामेकप्रतिश्रय उषितानां प्रातरुत्थाय प्रतिष्ठमानानां न कश्चित् परस्परं सम्बन्धः (भाष्ये) । प्रतिश्रय आवसथः, आवासः । प्रवासिनामाश्रयः । भूदीपाश्चान्नवस्त्राम्भस्तिलसर्पिः प्रतिश्रयान् (याज्ञ० १।२१०) । उक्तोऽर्थः । प्रतिश्रयं प्राप्य समीक्ष्य शून्यम् (रा० ३।५८।१६) । प्रतिश्रयमाश्रमपदम् । स्वाश्रमसमीपदेशमिति तु कतकः । प्रतिश्रयार्थी तद्वेश्म ब्राह्मणस्य जगाम ह (भा० आदि० १६५।३) । प्रतिश्रयार्थी वासार्थी । मा त्वविज्ञातशीलाय कश्चिद् दद्यात् प्रतिश्रयम् (तन्त्रा० १।६।८५) । प्रतिश्रय आश्रयः । स्यात्सभायां प्रतिश्रय इत्यमरः । आस्पदेपीति स्वामी । कथं समुद्रः पूर्णश्च भगीरथप्रतिश्रयात् (भा० ३।८८२८) । प्रतिश्रयः साहायकम् । प्रतिश्रितं प्रविष्टम् इति क्षीरस्वामी ।

**—श्रु (श्रु श्रवणे)।** स यामनि प्रति श्रुधि (ऋ० १।२५।२०)। प्रति घोराणां......मरुतां शृण्व आयतामुपब्दिः (ऋ० १।१६९।७)। **श्रवणमेवार्थः। प्रतिशब्दो धात्वर्थानुवादी।** चतुष्कृत्वोऽह्वयत। अग्निर्वायुरादित्यश्चन्द्रमाः। ते प्रत्यशृण्वन् (तै० ब्रा० २।३।६।१-२)। **अशृण्वन्नित्येवार्थः।** तस्मै ह स्मामन्त्र्यमाणो न प्रतिशृणोति (श० ब्रा० १।४।१।१०)। **न प्रतिशृणोति न प्रतिवक्ति।** अथ हैनमृषभोऽभ्युवाद सत्यकाम३ इति भगव इति ह प्रतिशुश्राव (छां० उ० ४।५।१)। **प्रतिशुश्राव प्रत्युवाच।** तस्मै दशमं हूतः प्रत्यशृणोत् (तै० ब्रा० २।३।११।१)। **भोः इत्युत्तरं दत्तवान्। दशमं दशमे पर्याये।** न मे स्वर्गो बहुमतः संमानश्च सुरर्षभ। त्वया राम विहीनस्य सत्यं प्रतिशृणोमि ते (रा० ६।११९।१३)॥ **सत्यं ते ब्रवीमीत्याह।** प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता (पा० १।४।४०)। विप्राय गां प्रतिशृणोति दास्यामीति प्रतिजानीते इति वृत्तिः। स तत् कर्म प्रतिशुश्राव दुष्करम्। **प्रतिज्ञातवानित्यर्थः।** ते छात्राः परमम् इति तत्तस्य वचनमयुक्तमपि युक्तमिव प्रत्यश्रौषुः (अवदा० जा० १२)। **प्रत्यश्रौषुः स्वीचक्रुः प्रतिपेदिरे।** अनिर्दिश्य मया भिक्षा ब्राह्मणस्य प्रतिश्रुता (हरि० १।३०।२४)। **उक्तोऽर्थः।** स तद्वचः प्रतिश्रुत्य वाक्यमाह विहङ्गमः (भा० शां० १४६।१५)। **प्रतिश्रुत्य श्रुत्वा।** तथा स्त्रीषु प्रतिश्रुत्य पौरुषं पुरुषेषु च। कत्थमानोऽभिनिर्याय किमर्थं न युयुत्ससे (भा० वि० ३९।२२)॥ **प्रतिश्रुत्य प्रतिज्ञाय सशपथं प्रज्ञाप्य।** अपसृत्याप्रतिश्रुत्य प्रजासंहरणं तदा (भा० शां० २५८।१५)। **अप्रतिश्रुत्यानङ्गीकृत्याऽनभ्युपेत्याऽननुमत्य।** तस्यै प्रतिश्रुत्य रघुप्रवीरस्तदीप्सितम्... (रघु० १४।२९)। **उक्तोऽर्थः।** प्रतिश्रवणे च (पा० ८।२।९९)। **प्रतिश्रवणमभ्युपगमः प्रतिज्ञानम्, श्रवणाभिमुख्यं चेति वृत्तिः। नित्यः शब्दो भवितुमर्हति। देवदत्त भोः किमात्थ इति च तत्र प्रतिश्रवण उदाहरणम्।** प्रतिश्रवणसंभाषे शयानो न समाचरेत् (मनु० २।१९६)। **प्रतिश्रवणमाज्ञाङ्गीकरणम्।** प्रतिश्रवणपूर्वाणि नक्षत्राणि चकार सः (विश्वामित्रः) (भा० आदि० ७१।३४) श्रोत्रे द्वे प्रतिश्रवणे द्वे। तस्मात्पुरुषः सर्वा दिशः शृणोति (षड्विंश० ७।१।२)। **प्रतिश्रवणं श्रोत्रैकदेशविशेषः स्यात्।** स्त्री चाप्रतिश्राविणी पतिकृतमृणम् (अग्राह्या) (कौ० अ० ३।११।२३)। **अप्रतिश्राविणी अनङ्गीकारिणी।** प्रतिश्रुत्याऽभिनादिता (वाचः) (हरि० ४५८२)। **प्रतिश्रुतिः प्रतिश्रुत् प्रतिध्वानः। स्त्री प्रतिश्रुत् प्रतिध्वान इत्यमरः। प्रति प्रथमं शब्दं लक्ष्यीकृत्य श्रूयत इति प्रतिश्रुत्। क्विप्। स्वामी त्वाह —प्रतीपं श्रूयत इति प्रतिश्रुत्।**

**—सच् (षच सेचने सेवने च)।** इत्थं वा इमे ऽस्मानमुष्मिँल्लोकेऽसचन्त

तान्वयमिहो इति प्रतिसचामहा इति (श० ब्रा० ११।६।१।५)। प्रतिसचामहै विनिमयेन व्यवहरामहै।

—सद् (षद्लृ विशरणगत्यवसादनेषु)। उद्वेपते ते हृदयं मनस्तु प्रतिसीदति (भा० उ० ७५।१८)। प्रतिसीदति सीदतीत्येकोऽर्थः प्रतिभाति। भारतभावदीपकारस्त्वत्र जोषमास्ते।

—सिच् (षिच क्षरणे)। प्रतिषिक्ता अरातयः (आप० श्रौ० ७।२०।२)। अप्रतिषेक्यं स्यात् तेजस्कामस्य (आप० श्रौ० ६।२।६।४)। उपरिष्टादब्बिन्दुप्रक्षेपः प्रतिषेक इति रुद्रदत्तः।

—सिध् (षिध गत्याम्, षिधू शास्त्रे माङ्गल्ये च)। प्रतिषेधन्ति राजानो लुब्धा मृगमिवेषुभिः (भा० शां० २८।६)। प्रतिषेधन्ति निरुन्धन्ति। निघ्नन्तीत्यर्थः। इति शत्रुषु चेन्द्रियेषु च प्रतिषिद्धप्रसरेषु जाग्रतौ (रघु० ८।२३)। वारितप्रगतिष्वित्यर्थः। प्रतिषेधत्सु चाधर्मान् हितं चोपदिशत्स्वपि (मनु० २।२०६)। अधर्मान्प्रतिषेधत्सु मा स्मा करोरित्येवं शासत्सु।

—सृ (सृ गतौ)। दैत्यः प्रत्यसरद् देवं मत्तो मत्तमिव द्विपम् (हरि०)। प्रत्यसरद् उपाद्रवत्, अवास्कन्दत्। कनकवलयं स्रस्तं स्रस्तं मया प्रतिसार्यते (शा० ३।१२)। प्रतिसार्यते प्रतीपं नीयते। ऊर्ध्वं ह्रियत इत्यर्थः। शिलैलानतसिन्धूत्थैः सक्षौद्रैः प्रतिसारयेत् (सुश्रुत० उत्तर० १४।४)। ततोऽग्निना वा प्रतिसारयेत् (तां दोषोपहतां बलिम्) (सुश्रुत० उत्तर० १६।७)। प्रतिसारयेत् =अवघर्षयेत्। दीपयेत्। पथ्याफलेन प्रतिसारयेत्तु (सुश्रुत० उत्तर० १६।४)। उक्तोऽर्थः। क्षौद्रायुतैश्च कटुभिः प्रतिसारयेत्तु (सुश्रुत० उत्तर० १९।९)। उक्तोऽर्थः। तयोरपाङ्गप्रतिसारितानि······विलोचनानि (रघु० ७।२३)। प्रतिसारितानि आततानि। श्लक्ष्णपिष्टैः समाक्षीकैः प्रतिसार्योष्णवारिणा। प्रक्षाल्य ····। (सुश्रुत० उत्तर० १३।२)। प्रतिसार्य=अवघृष्य। अयं प्रतिसरो मणिर्वीरो वीराय बध्यते (अथर्व० ८।५।१)। प्रतिसरति पराङ्मुखं निवर्तत आभिचारिकं कर्मानेनेति प्रतिसरो रक्षासूत्रम्। प्रत्यगेनान् प्रतिसरेण हन्मि (अथर्व० ४।४०।१)। इह प्रतिसरो रक्षाकर्माह। प्रतीचीः कृत्याः प्रतिसरैरजन्तु (अथर्व० ८।५।५)। प्रीत्या प्रतिसरा विधेयाऽस्मि ते (हर्ष० १)। प्रतिसराऽनुकूला। दन्तमांसौष्ठजिह्वानां प्रधानं प्रतिसारणम् (का० सं० खिल सूति० श्लो० १६०)। प्रतिसारणमवघर्षणम्। सा ते समृद्धिर्यैरात्ता चपला प्रतिसारिणी (भा० वन० ५१।२७)। प्रतिसारिणी प्रतीपसारिणी, नीचानुगामिनी।

—स्कु (स्कुञ् आप्रवणे)। स नो वृषन्नमुं चरुं सत्रादावन्नपा वृधि। अस्मभ्यमप्रतिष्कुतः (ऋ० १।७।६)। अप्रतिष्कुतः=अप्रतिस्खलितः (नि० ६।१६।७)। ईशानो अप्रतिष्कुतः (अथर्व० २०।७०।१४)। उक्तोऽर्थः।

—स्तम्भ् (स्तम्भु रोधने धारणे वा, सौत्रः)। कायस्य रूपे संयमाद् रूपस्य या ग्राह्या शक्तिस्तां प्रतिष्टम्भ्नाति (३।२१ योग-भा०)। प्रतिष्टम्नाति धारयति। बाहुप्रतिष्टम्भविवृद्धमन्युः (रघु० २।३२)।। प्रतिष्टम्भः प्रतिघातो निश्चेष्टता। प्रतिस्तब्धनिस्तब्धौ (पा० ८।३।११४)। प्रतिस्तब्धः स्तब्धः। सर्वत्रोदाहृतिषु प्रतिशब्दो नान्तरमर्थं करोति। अप्रतिष्टब्धः पाणिना (आसीत) (आप० ध० १।६।१६)। पाण्यवलम्बनो नासीतेत्यर्थः। पाणिनिस्तु प्रतिस्तब्ध इत्येव रूपमिच्छति।

—स्तुभ् (ष्टुभु स्तम्भे)। स्तोमास्त्वा विचारिणि प्रतिष्टोभन्त्यक्तुभिः (तै० सं० २।२।१२।६)। प्रतिष्टोभन्ति प्रत्येकं स्तुवन्ति।

—स्था (ष्ठा गतिनिवृत्तौ)। स्वर्गे लोके प्रतितिष्ठति (के० उ० ४।६)। चिरां स्थितिं लभते। उदेति च यतः सूर्यो यत्र च प्रतितिष्ठति। तत्सर्वं यौवनाश्वस्य मान्धातुः क्षेत्रमुच्यते (भा० द्रोण० ६२।११)।। प्रतितिष्ठति विश्राम्यति, निम्लोचति, अस्तमेति। यावत्सूर्य उदेत्यस्तं यावच्च प्रनितिष्ठति। सर्वं तद्यौवनाश्वस्य मान्धातुः क्षेत्रमुच्यते (विष्णु पु० ४।२।६५)।। अस्तं प्रतितिष्ठतीत्यन्वयः। अस्तं गच्छतीत्यर्थः। शब्दमर्यादया तु नैष लभ्यः। व्यक्तमत्र पाठभ्रंशः। ऊने द्वियोजने गत्वा प्रत्यतिष्ठन्त कौरवाः (भा० शल्य० ५।५०)। प्रत्यतिष्ठन्त न्यविशन्त। उक्तवानसि यद्वाक्यं धर्मार्थसहितं हितम्। न तु तन्निकृतिप्रज्ञे कौरव्ये प्रतितिष्ठति (भा० उ० १५४।७) ।। न प्रतितिष्ठति न पदं कुरुते, नास्पदं लभते। राज्यं मृत्युभयं त्यक्त्वा प्रत्यतिष्ठन् परान् युधि (भा० द्रोण० २५।७)। प्रत्यतिष्ठन् प्रत्यवातिष्ठन्त व्यरुन्धत अयुध्यन्त। तद् यदेषामप्सु प्रविद्धानां प्रत्यतिष्ठत् (श० ब्रा० ६।२।१।८)। प्रत्यतिष्ठत् न्यषीदत्। सद्योजाताः पशवः प्रतितिष्ठन्ति, संवत्सरे पुरुषाः (मै० सं० ४।५।७)। प्रतितिष्ठन्ति चरणबलेन दृढं तिष्ठन्तीत्याह। मधुपर्कं प्रतिग्रहीष्यन्...इति प्रतितिष्ठन् व्रजेत् (खा० गृ० ४।४।६)। प्रतितिष्ठन् प्राङ्मुखः तिष्ठन्। यो वाऽप्रतिष्ठितो वज्रमुद्यच्छति (श० ब्रा० १।१।१।१८)। प्रतिष्ठितः (सन्) दृढं भूमौ पादावाधायेत्यर्थः। तपसि सर्वं प्रतिष्ठितम् (तै० आ० १०।६३।१)। प्रतिष्ठितं प्रतिबद्धम् आधृतम्। स्त्रीधनं दुहितॄणामप्रत्तानामप्रतिष्ठितानां च (गौ० ध० ३।१०।२२)। (याज्ञ० २।११७) इत्यत्र च मिताक्षरायां गौतमीय-

मित्युद्धृतम् । अप्रतिष्ठिता या ऊढा अनपत्या निर्धना भर्तृगृहे याभिः प्रतिष्ठा न लब्धा । प्रतिष्ठितेऽहनि सन्ध्यामुपासीत (कौ० अ० १।१६।१७)। प्रतिष्ठिते ऽवसिते । सूर्येऽस्ताचले विश्रमं गते सति । स शिक्षकाणां धुरि प्रतिष्ठापयितव्य एव (माल० १।१६) । स्थापनेन सत्कर्तव्य इत्यर्थः । पर्यङ्कमग्र्यास्तरणं नानारत्न-विभूषितम् । तदपीच्छति वैदेही प्रतिष्ठापयितुं त्वयि (रा० २।२२।६) ॥ प्रतिष्ठापयितुं निवेदयितुं प्रदेष्टुम् अर्पयितुम् । धर्मो बिम्बस्य जगतः प्रतिष्ठा (महाना० उ०) । आधार इत्यर्थः । अपौरुषेयप्रतिष्ठम् (मालती० ६) । उक्तोऽर्थः । लोकस्य नाभि र्जगतः प्रतिष्ठा (भा० शां० २४५।२७) । असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् (गीता० १६।८) । ‥ ‥ द्वे प्रतिष्ठे कुलस्य नः । समुद्रवसना चोर्वी सखी च युवयोरियम् (शा० ३।१८) । उदितचर एवार्थः । अप्रतिष्ठे रघुज्येष्ठे का प्रतिष्ठा कुलस्य नः (उत्तर० ५।२५) । प्रतिष्ठा स्थैर्यं सातत्यं नैरन्तर्यम्, अविच्छेदः । अगाध-सत्त्वो मगधप्रतिष्ठः (रघु० ६।२१) । प्रतिष्ठा निवासभूतो देशः । चलाचलेति द्विविधा प्रतिष्ठा जीवमन्दिरम् (भा० पु० ११।२७।१३)। प्रतिष्ठा संस्कार-पूर्विका स्थापना। अहोरात्राणि प्रतिष्ठा (बृह० उ० १।१।१) । प्रतिष्ठा पादः । द्विप्रतिष्ठो मनुष्यः । द्विपादित्यर्थः । औत्सुक्यमात्रमवसादयति प्रतिष्ठा (शा० ५।६) । प्रतिष्ठा सर्वोत्कृष्टं गौरवम् । अप्लवेऽम्भसि मग्नानामप्रतिष्ठे निमज्जताम् (भा० सभा० ७१।३) । अप्रतिष्ठेऽगाधे । वंशप्रतिष्ठानकराः सर्वभूतेषु विश्रुताः (पुत्राः) (रा० १।११।१८) । प्रतिष्ठानं प्रतिष्ठा स्थैर्यम् प्रबन्धोऽनुवृत्तिः सन्तानः ।

— स्ना (ष्णा शौचे)। सूत्रं प्रतिष्णातम् (पा० ८।३।९०) । शुद्ध-मित्यर्थः । सूत्रादन्यत्र प्रतिस्नातमित्येव । अपि सुस्नातो भवान् । बाढं प्रतिस्नातोऽस्मि ।

—स्मृ (स्मृ चिन्तायाम्) । प्रतिस्मृत्याथ जग्राह पात्री मूर्ध्नि कृताञ्जलिः (भा० अनु० ११८।१) । स्मृत्वेत्येवार्थः । अनर्थकः प्रतिः ।

—स्वन् (स्वन शब्दे) । स शब्दः ‥‥‥। प्रतिसस्वान तत्रैव कुरुपाण्डवयो-र्बले (भा० द्रोण० १०३।४७) । प्रतिसस्वान प्रत्यश्रूयत, प्रतिश्रुद्रूपेणा-ऽश्रूयत ।

— हन् (हन हिंसागत्योः) । खले न पर्षान् प्रतिहन्ति भूरि (ऋ० १०।४८।७) । यो वा हतो न प्रतिहन्ति धैर्यात् (भा० शां० २९९।१७) । प्रतिहन्ति प्रतिकुर्वाणो हन्तीत्यर्थः । न च प्रतिजघानास्य स गति पर्वतोत्तमः (भा० शां०

३३३।१२)। प्रतिजघान रुरोध। विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः प्रारब्धमुत्तमगुणा न परित्यजन्ति (भर्तृ० १।७२)। उक्तोऽर्थः। प्रतिघ्नानाऽश्रुमुखी (अथर्व० ११।६।७)। प्रतिघ्नानाः सं धावन्तूरः पटूरवाघ्नाना (अथर्व० ११।६।१४)। प्रतिहतममङ्गलम्। वारितमस्त्वित्यर्थः। कुतूहलगर्भः प्रतिहतो न मे तर्कः प्रसरति (शा०)। प्रतिहतो रुद्धः। इमास्ता मन्मथवतां हिताः प्रतिहता दिशः (रा० ४।२८।१३)। प्रतिहता उपहताः, मालिन्यमुपगताः, मेघै रुद्धा इत्यनर्थान्तरम्। ...द्युमन्तं रुक्मिणीसुतः। प्रतिहत्य प्रत्यविध्यत् (भा० पु० १०।७७।२)॥ प्रायश्चित्तं च वेत्थ त्वं प्रतिघातं च सर्वशः (भा० वन० १६८।६८)। परास्त्रेणाभिभूतस्य स्वास्त्रस्योद्दीपनं प्रतीघातः। श्रूयतां च प्रतीघातान्यै नं शक्नुम हिंसितुम् (भा० अनु० १३१।७)। प्रतीघाता रोधका अर्थाः। सापत्नं प्रतिघं त्यक्त्वा (स्कन्द० का० ४।१६।३०)। सापत्नः प्रतिघः सपत्ने वैरं क्रोधो वा।

—हर्य् (हर्य गतिकान्त्योः)। प्रति सूक्तानि हर्यतम् (ऋ० १।६३।१)। प्रतिहर्यतं प्रतिकामयेथाम्।

—हु (हु दानादनयोः)। अथ यदाधिगच्छेत् प्रतिजुहुयात् (गो० गृ० १।६।२२)। सायमादिकालं प्रतीक्ष्य जुहुयादित्यर्थः।

—हृ (हृञ् हरणे)। आज्ञां प्रत्यहरच्चापि कृतज्ञैः पुरुषैः सदा (भा० आश्रम० ३।४)। प्रत्यहरत् अवागणयत्। वृकोदरः कर्ता। अग्ने यत्ते हरस्तेन तं प्रतिहर (अथर्व० २।१६।२)। प्रतिहर संहर। अथ यत्प्रतिहर्ता प्रतिहरति (शां० ब्रा० १७।७)। स्वेनोच्चार्य शस्त्रं व्याहरति। राज्ञः प्रतिहारयामास श्रेष्ठी पुनर्द्रष्टुमिच्छति देवमिति (अवदा० जा० २०)। प्रतिहारयामास प्रतिहारेणात्मानं राज्ञे निवेदयामास। अमर्षवशमापन्ना वैरं प्रतिजिहीर्षवः (भा० स्त्री० ११।१४)। प्रतिजिहीर्षवः प्रतिचिकीर्षवः। स हतो भीमसेनेन वैरं प्रतिजिहीर्षता (भा० स्त्री० १३।१०)। इमानि भूतान्यन्नमेव प्रतिहरमाणानि जीवन्ति (छां० उ० १।११।६)। प्रतिहरमाणानि प्रत्याहरन्ति। तस्मादश्वो रश्मिना प्रतिहृतो भूयिष्ठं रोचते (श० ब्रा० १३।२।७।६)। प्रतिहृतो बद्धः। कः स्थितः प्रतिहारो मे कस्याज्ञां सम्प्रतीक्षते (रा० १।७३।१४)। प्रतिहारो द्वाःस्थो द्वारपालः। अत्र येन राजागमनं प्रतिबध्यत इति शेष इति तिलकः। तेन प्रतीयते प्रतिहरणं प्रविशज्जनवारणं भवति। स्वाम्यप्यानुकूलो यदाहामरोद्घाटने—प्रतिह्रियन्ते प्रतिरुध्यन्तेऽनेनेति प्रतीहारः। द्वारि तिष्ठ महाबाहो प्रतिहारं विसर्जय (रा० ७।१०३।१३)। उक्तोऽर्थः।

रैभ्यसगोत्रः काञ्चुकीयः प्राप्तः···वसुन्धरा नाम वासवदत्ताधात्री च प्रतीहार-मुपस्थितौ (स्वप्न० ६)। प्रतीहारो द्वारम्। प्रतिहाररक्षी (सुनन्दा) (रघु० ६।२०)। प्रतिहारो द्वारम्। आर्य, अप्रदेशकालः प्रतिहारस्य (स्वप्न० ५)। इह प्रतिहारस्य द्वाःस्थस्य कर्म प्रतिहार उक्तः। स चागन्तुकस्य राजानं दिदृक्षोरागमननिवेदनम्। सम्प्राप्यैते महात्मानो राघवस्य निवेशनम्। विष्ठिताः प्रतिहारार्थं हुताशनसमप्रभाः (रा० ७।१।७)॥ प्रतिहारार्थमागमो नो निवेद्यतामित्येतदर्थम्। व्यतिष्ठत तदा सुमन्त्रं पितुर्महात्मा प्रतिहारणार्थम् (रा० २।३३।३०)। महात्मा रामः। उक्तोऽर्थः। प्रतिहर्तर्या देवता प्रतिहार-मन्वायत्ता, तां चेदविद्वान् प्रतिहरिष्यसि (छां० उ० १।११।८)। प्रतिहर्ता उद्गातृनामकस्य ऋत्विजः सहायः। तेनोच्चार्यं शस्त्रं प्रतिहारः। प्रतिहारो मायाकारः। तस्य कर्म प्रातिहार्यम्। कुर्वन्निमं नृपमहं प्रातिहार्यं समाचरन् (राज० ८।११)। मायाकारस्तु प्रातिहारिक इत्यमरः। प्रतिहरणं (प्रतिहारः) व्याजः प्रयोजनमस्येति स्वामी। चराचरस्य स्रष्टारं प्रतिहारमेव च (भा० द्रोण० ८०।४६)। प्रतिहर्ता संहर्ता प्रतिसंहर्ता। दैवीनां मानुषीणां च प्रति-हर्ता त्वमापदाम् (रघु० १।६०)। प्रतिहर्ता वारयिता। एष वै तत्र वैदेह्या विहगः प्रतिहारकः (रा० ४।१।५६)। प्रतिहारकोऽपहारको वियोजकः।

### प्रत्यधि (प्रति+अधि)

—इ (इङ् अध्ययने)। वेदमत्रापि षडङ्गं प्रत्यधीयते (भा० वन० ४१८२)।

### प्रत्यनु (प्रति+अनु)

—ज्ञा (ज्ञा अवबोधने)। तद् सर्वं प्रत्यनुज्ञासीद्रामः सत्यपराक्रमः। क्षत्रधर्ममनुस्मरन्। (रा० २।८७।१६)। अङ्गीकृत्य पुनर्मह्यमेव दत्तवान्, सर्वं तत् प्रत्यार्पयत्। प्रत्यनुज्ञासीदित्यत्राडागमो न कृतः, छन्दोवत्कवयः कुर्वन्तीति।

—तप् (तप सन्तापे)। यदि दत्त्वा वरौ राजन्पुनः प्रत्यनुतप्यसे (रा० २।१२।३६)। अनुतप्यस इत्येवार्थः। प्रतिर्नान्तिरमर्थं करोति।

—नी (णीञ् प्रापणे)। स एवमुक्तः प्रत्युवाच एतत्प्रत्यनुनये भवन्ता-वश्विनौ (भा० आदि० ३।७२)। एतद्वां वचनं प्रत्यनुनये विरुणध्मि। प्रतिः प्रातिकूल्ये। भवताहमन्नस्याशुचिभावमालक्ष्य प्रत्यनुनीतः (भा० आदि० ३।१२४)। प्रतिकूलयन्ननुनीतः प्रसादितः। प्रत्यनुनीतः शप्तो वञ्चित इति तु

संस्कृतशार्मण्यकोषः । तदसत् । शब्दमर्यादया दुर्लभोऽयमर्थः प्रकरणविरोधश्च । न चैनमशकद् भानुरहं वा स्नेहकारणैः । पुरा प्रत्यनुनेतुं नेतुं वाप्येकतां त्वया (भा० शां० ६।७) । प्रत्यनुनेतुं शमयितुं मृदूकर्तुं वा ।

—भू (भू सत्तायाम्, भू प्राप्तावात्मनेपदी) । देशदिगन्तरैश्च प्रत्यनुभूतं पुनः पुनः प्रत्यनुभवति (प्रश्नोप० ४।५) । प्रत्यनुभवति प्रत्येकमनुभवति ।

### प्रत्यप (प्रति+अप)

—या (या प्रापणे, प्रापणमिह गतिः) । स वैक्लव्यं महत् प्राप्य...। तथा पुरुषमानी स प्रत्यपायाद् रथान्तरम् (भा० द्रोण० १३१।५८) ॥ स्वरथं विहायान्यं रथं प्रत्यपासरदित्यर्थः ।

—वह् (वह प्रापणे) ।...अष्टादश पदानि सः । प्रत्यपोवाह भगवान्... (भा० पु० १०।३६।११) ॥ प्रत्यपोवाह प्रत्यक् पराणुददित्यर्थः ।

### प्रत्यपि (प्रति+अपि)

—सृज् (सृज विसर्गे) । उल्मुकैकदेशमाहवनीये प्रत्यपिसृजति (आप० श्रौ० ७।६।१६।७) । विसृजतीत्यर्थः ।

### प्रत्यभि (प्रति+अभि)

—चर् (चर गतिभक्षणयोः) । प्रति तमभि चर योऽस्मान्द्वेष्टि यं वयं द्विष्मः (अथर्व० २।१।३) । परकृतां कृत्यां निवर्त्य तमपि नाशयेत्यर्थः ।

—ज्ञा (ज्ञा अवबोधने) । यतस्त्वं भिन्नजात्यन्वयसंस्कारं शरीरं जात्यन्वयवर्जितस्यात्मनः प्रत्यभिज्ञासीः (उप० सा० १।१५) । प्रत्यभिज्ञासीः= प्रत्यभ्यज्ञासीः=अज्ञासीः । स्मरणं तु नार्थः ।

—धा (डुधाञ् धारणपोषणयोः) । विश्वं......प्रत्यभिधास्यति (भा० पु० ३।७।४) । प्रतिसंहरिष्यतीत्यर्थः । प्रत्यपिधास्यतीति पाठान्तरम् । मया प्रत्यभिहिता (शा० ) । प्रतिवचनमुक्ता, प्रत्युक्ता । यथा च प्रत्यभिहितम् (भा० उ० १६१।४) । तदनुमतमित्यर्थः ।

—मृश् (मृश आमर्शने, आमर्शनं स्पर्शः) । यद्यु नीची स्रु‌क् स्यादपि वा भिद्येत किं तत्र कर्म का वा प्रायश्चित्तिरिति । तस्योक्तः प्रत्यभिमर्शः (जै० ब्रा० १।५४) । प्रत्यभिमर्शः शोधनम् । इत्यात्मनः प्रत्यभिमर्शः (ऐ० ब्रा० ७।३३) । हस्तेन सम्पूर्णः स्पर्शः प्रत्यभिमर्शः ।

—युज् (युजिर् योगे)। चित्राङ्गदोऽथ तं क्रोधाद् धावन् प्रत्यभियुक्तवान् (कथा० १०७।६६)। तं प्रत्यभियुक्तवान् तं प्रत्यवास्कन्दत्। अभियोगमनिस्तीर्य नैनं प्रत्यभियोजयेत् (याज्ञ० २।६)। न प्रत्यभियोजयेत्, अभियुज्यत इत्यभियोगोऽपराधः, तेन न प्रतीपं योजयेदित्यर्थः।

—नन्द् (टुनदि समृद्धौ)। अभिवाद्य····· विप्रांश्च तैश्च प्रत्यभिनन्दितः (भा० अनु० १६७।१६)। प्रत्यभिनन्दितः स्वागतव्याहारेणाऽऽसनादिदानेन च सभाजितः।

—वद् (वद व्यक्तायां वाचि)। प्रत्यभिवादेऽशूद्रे (पा० ८।२।८३)। अभिवादितेन गुरुणा प्रयुक्ताऽऽशीः प्रत्यभिवाद आयुष्मानेधि देवदत्त३ इत्यादिलक्षणः।

## प्रत्यव (प्रति+अव)

—इ (इण् गतौ)। तत्सर्वं दुःखमेव प्रत्यवैमि (यो० सू० ३।१८ भाष्ये)। प्रत्यवैमि जानामि। सार्वार्थ्याय प्रतिशब्दस्तत्सर्वमित्युक्तेर्नातीवापेक्ष्यते। तत्पराधं गत्वैक्षत कथं न्विमाँल्लोकान् प्रत्यवेयाम् (श० ब्रा० ११।२।३।३)। प्रत्यवेयामवतरेयम्, अवतीर्य प्राप्नुयामित्यर्थः। प्रतिराभिमुख्यमाह, अवो नीचैस्त्वं निम्नताम्। द्वेषादिना ऋतावनुपयन्प्रत्यवेयात् (गौ० ध० १।५।१ इत्यत्र हरदत्तः)। प्रत्यवेयात् दोषी स्यात्, पापभाग् भवेत्। तादृशं हि तेषां तेजः, यदेवंविधैरपि पाप्मभि नं प्रत्यवयन्ति (इति आप० ध० २।१३।८ सूत्र उज्ज्वलायां हरदत्तः)। न दुष्यन्ति, न पतन्तीत्यर्थः। ननु विहिताकरणात् प्रत्यवैतीति कुतोऽवसितम् (याज्ञ० ३।२१६-२२० मिताक्षरायाम्)। यथानुपासीनः सन्ध्यां प्रत्यवैति तथाऽनधीयानोपि व्याकरणम् (पदमञ्जरी)। स्वातन्त्र्येणेदृशं प्रयुञ्जाना अस्मदादयः प्रत्यवयन्त्येव (शब्देन्दु० पतिः समास एवेति सूत्रे)। हिंसाकृत् प्रत्यवेयात् (विश्व० च० २६।३६६)। सर्वत्र दोषभाक्त्वं समानोऽर्थः। नित्यनैमित्तिके कुर्यात् प्रत्यवायजिघांसया। मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः (बौ० ध० २।३।५।२३ इत्यत्र गोविन्दस्वाम्युद्धृतं वचनम्)। प्रत्यवायो विहितस्याकरणजो दोषः पापम्, तस्य जिघांसा तत्परीहारः। कुमारेण बहुप्रत्यवायेऽस्मिन्प्रदेशे कुतूहलिना न स्थातव्यम् (नागानन्दे ४)। प्रत्यवायो विघ्न उपद्रवो भयं वा। उत्तमानुत्तमान् गच्छन् हीनान् हीनांश्च वर्जयन्। ब्राह्मणः श्रेष्ठतामेति प्रत्यवायेन शूद्रताम् (मनु० ४।२४५)॥ प्रत्यवायो विपरीताचरणम्। नेहाभिक्रमनाशोस्ति प्रत्यवायो न विद्यते (गीता०

२।४०)। प्रत्यवायो विपरीतः परिणामः। एकप्रत्यवायं स्विष्टकृतः (का० श्रौ० १।६।६)। स्विष्टकृद्यागस्यावदानं प्रधानयागापेक्षया एकेनावदानेन प्रत्यवैति न्यूनो भवतीत्यर्थः। पुरस्ताद्योजने होता, इतरे क्रोशप्रत्यवायेन (का० श्रौ० २२।३।३३)। प्रत्यवायोऽपकर्षः।

—ईक्ष् (ईक्ष दर्शने)। सर्वांस्तान् कौरवो राजा विधिवत् प्रत्यवैक्षत (भा० उ० १६५।१६)। प्रत्यवैक्षत अवैक्षत, प्रत्यजागः। निर्धनो बहुपुत्रोस्मि राजपुत्र महायशः। उञ्छवृत्तिर्नित्यं प्रत्यवेक्षस्व मामिति (रा० २।३२।३४)॥ मां चिन्तय, माम्प्रतिविधेहि। इमां प्रत्यवेक्षमाणो जपति (श० ब्रा० ५।४।३।२०)। ईक्षमाण इत्येवार्थः। प्रत्यवेक्षिता वनभूमयः (शा० २)। प्रत्यवेक्षिताः परीक्षिताः शोधिताः। जायस्व विपुलश्रोणि प्रत्यवेक्ष्य च वासवम् (हरि० २।५१।२६)। प्रत्यवेक्ष्य अनुकम्प्येति नीलकण्ठः। अयं चार्थिकोऽर्थः। अनुकम्पाप्रयुक्ता ह्यवेक्षा भवतीत्यनुकम्पार्थमाह।' वर्णाश्रमप्रत्यवेक्षादर्शितादियुगोदयः (राज० १।३३६)। अवेक्षा प्रतिजागर इत्यमरः। प्रतिजागरोऽवधानम्। स एव प्रत्यवेक्षा। शब्दोपजनो नार्थोपजनः। तथा कायस्थभोज्या भूर्जाता तत्प्रत्यवेक्षया (राज० ५।१८१)। अवेक्षा प्रतिजागरः, तद्विरोधः प्रत्यवेक्षा प्रमादोऽनवधानम्। अत्रार्थेऽन्यत्र प्रयोगो मृग्यः।

—गम् (गम्लृ गतौ)। येन प्रत्यवगच्छेयुः कुलरूपविशेषणम् (भा० स्त्री० ३।७)। येन हेतुनाऽदृष्टरूपेण पृथक्त्वशो विशेषणं विशेषं वैशिष्ट्यं प्राप्नुयुः।

—ग्रह् (ग्रह उपादाने)। अभिसृज्याभिषेकं ते पुनः प्रत्यवगृह्णत (रा० गोरेसियो० २।२०।१५)। प्रत्यवग्रहणं प्रत्यादानम्, पुनर्ग्रहणम्।

—धा (डुधाञ् धारणपोषणयोः)। प्रक्षाल्यान्त्राणि प्रत्यवधायैनमाहरन्ति (जै० ब्रा० १।४७)। प्रत्यवधाय पुनरन्तर्निधाय। या च गोमृगे वपा भवति या चाजे तूपरे ते अश्वे प्रत्यवधायाहरन्ति (श० ब्रा० १३।५।२।१०)। प्रत्यवधाय उपरि निधाय।

—मृश् (मृश आमर्शने, आमर्शनं स्पर्शः)। दुर्लभो हि मनुष्येन्द्र नरः प्रत्यवमर्शवान् (भा० शां० २६५।१३)। प्रत्यवमर्शवान् सारासारविवेकवान्। स्मृतिः प्रत्यवमर्शश्च तेषां जात्यन्तरेऽभवत् (हरि० १।२१।१८)। प्रत्यवमर्शः स्वकृतकर्मानुसन्धानम्। सा च सम्प्रबोधे प्रत्यवमर्शात् प्रत्ययविशेषः (यो० सू० १।१० भाष्ये)। प्रत्यवमर्शः स्मरणम्।

—मृष् (मृष तितिक्षायाम्)। स्यात्स्वल्पः सङ्करः सपरिहारः सप्रत्यवमर्षः कुशलस्य नापकर्षायालम् (सां० त० कौ० उद्धृतं पञ्चशिखसूत्रम्)। प्रत्यवमर्षोऽकामेन सहनम्।

—रुह् (रुह बीजजन्मनि)। यथा श्रेयस्यायाति पापीयान् प्रत्यवरोहेत् (श० ब्रा० ४।१।२।६)। प्रकृष्टवयस्यागच्छति सत्यवरवयाः स्वासनादवतरतीत्यर्थः। क्षत्रियमायान्तमिमाः प्रजा विशः प्रत्यवरोहन्ति (श० ब्रा० ३।६।३।७)। प्रत्यवरोहन्ति स्वासनादवतरन्ति अभ्युत्तिष्ठन्ति वा। समारोपितोऽर्थः प्रत्यवरोपितो वा (कौ० अ० २।८।२६)। प्रत्यवरोपितोऽपकृष्टः, अवकलितः, व्यवकलितः। अप्रत्यवरोही स्यात् (का० श्रौ० २२।५।२७)। प्रत्यवरोहोऽभ्युत्थानम्। स्वासनादवतरणं वा पूज्यपूजार्थं।

—सृप् (सृप्लृ गतौ)। ताभिः प्रत्यवसृप्य पुरीतति शेते (मनः) (बृह० उ० २।१।१९)। प्रत्यवसृप्य प्रतिसंहृत्यात्मानम् (शां० भा०)।

—सो (षो अन्तकर्मणि)। गोमयेनालिप्यारण्योरग्नी समारोह्य प्रत्यवस्यति (श० ब्रा० १२।४।४।१)। प्रत्यवस्यति प्रतिनिवर्तते। ततः श्वोभूते गृहेषु प्रत्यवस्यति (आप० श्रौ० ६।१।१।२२)। सर्वत्र श्वोभूते श्वः प्रभाते गृहान्प्रत्यागच्छतीत्यर्थः। ये प्रत्यवसिताश्चैव ते वै निरयगामिनः (भा० अनु० २३।६७)। प्रत्यवसिता आरूढपतिता इति नीलकण्ठः। प्रव्रज्याप्रत्यवसितः प्रज्ञाशौचयुक्त उदास्थितः (कौ० अ० १।११।४)। प्रव्रज्याप्रत्यवसितः प्रव्रजितो भूत्वा पुनर्गार्हस्थ्यं प्रतिनिवृत्तः। संन्यासात्प्रच्युतो भ्रष्टः। ये प्रत्यवसिता विप्राः प्रव्रज्यादिबलात्तथा (अग्नि पु० १७०।३७)। यः प्रत्यवसितो विप्रः प्रव्रज्यातो विनिर्गतः (याज्ञ० ३।२८० मिताक्षरायां पराशरवचनम्)। भ्रष्ट इत्येवार्थः। प्रत्यवसिताः सर्वलोकबहिष्कृताः (यम० श्लो० २३)। उक्तोऽर्थः। गतिबुद्धिप्रत्यवसानार्थ० (पा० १।४।५२) इति सूत्रे प्रत्यवसानं भक्षणमाह। अयं चार्थोऽन्यत्र वाङ्मये प्रायो न दृष्टः। सोरवक्षेपणे (पा० ६।२।१९५)। अत्र वृत्ताविह खल्विदानीं सुस्थण्डिले सुस्फिताभ्यां सुप्रत्यवसित इति स्थितम्। तत्र सुप्रत्यवसित आशितसुतृप्त इत्यनर्थान्तरम्।

—स्कन्द् (स्कन्दिर् गतिशोषणयोः)। अर्थिना लेखितो योर्थः प्रत्यर्थी यदि तं तथा। प्रपद्य कारणं ब्रूयात्प्रत्यवस्कन्दनं स्मृतम् (याज्ञ० २।७ मिताक्षरायां नारदवचनम्)॥ प्रत्यवस्कन्दनं नाम सत्यं गृहीतं प्रतिदत्तं प्रतिग्रहेण वा लब्धमित्येवंरूपमुत्तरम्।

—स्था (ष्ठा गतिनिवृत्तौ)। शशंस शबरी वृद्धा रामाय प्रत्यवस्थिता

रा० ३।७४।१०)। प्रत्यवस्थिताऽभिमुखे स्थिता । धर्मी चानेकधर्मस्वभावः, तस्य चाध्वभेदेन धर्माः प्रत्यवस्थिताः (यो० सू० ४।१२ भा०) । प्रत्यवस्थिताः प्रत्येकमवस्थिताः । अत्र केचित्प्रत्यवतिष्ठन्ते (ब्र० सू० शां० भा०) । विरुन्धन्ति (उक्तमर्थम्) इत्यर्थः । दुष्टः प्रत्यवतिष्ठते तदधुना कस्मै किमाचक्ष्महे (भा० वि० १।७७) । उक्तोऽर्थः । अन्ये तु प्रस्थितास्तान्वै केचित्तान् प्रत्यवस्थिताः (मात्स्य० १४४।१४) । तान्प्रत्यवस्थितास्तेषां प्रतिपक्षे स्थिताः । अक्रुध्यत रणे भीमस्तैर्मृधे प्रत्यवस्थितैः (भा० शल्य० ३।२३) । प्रत्यवस्थितैः विरोधार्थं स्थितैः । अथ शक्यते प्रत्यवस्थातुं प्रत्यवस्थीयताम् (नि० १।१३।४ इत्यत्र दुर्गः) । प्रत्यवस्थातुं विरोद्धुम् । तं राजानं शक्तिमानपि प्रत्यवस्थातुम् (अवदा० शरभजा०) । उक्तोऽर्थः । स्थातुमप्रत्यवस्थित्या विदध्यां कोशसंविदम् (राज० ७।७४६) । अप्रत्यवस्थितिरविरोधः ।

—हृ (हृञ् हरणे) । तेभ्यो यथाधिकारमर्थान्प्रत्यवहृत्य धर्मव्यवस्था (गौ० ध० २।२।२२) । प्रत्यवहृत्य श्रुत्वाऽवधार्य । ततः प्रत्यवहारोऽभूत् सैन्यानां राघवाज्ञया (भा० वन० २८४।४१) । प्रत्यवहारः शिबिरं प्रति प्रतिसंहारः । मान्यः स मे स्थावरजङ्गमानां सर्गस्थितिप्रत्यवहारहेतुः (रघु० २।४४) । प्रत्यवहारः संहारः ।

## प्रत्याङ् (प्रति+आङ्)

—इ (इण् गतौ) । स ह क्षत्ताऽन्विष्य नाविदमिति प्रत्येयाय (छां० उ० ४।१।७) । प्रत्येयाय निववृते । तदुह शौनकः कापेयः प्रतिमन्वानः प्रत्येयाय (छां० उ० ४।३।७) । प्रत्येयाय उपजगाम । अरण्यं गत्वा न प्रत्येयात् (का० श्रौ० २१।१।१७) । न प्रत्यागच्छेत्, गृहितां न प्रत्यापद्येतेत्यर्थः । करो वर्षोपले रश्मौ पाणौ प्रत्यायशुण्डयोरिति मेदिनी । प्रत्यायो बलि र्भागधेयः, [राजदेयः शुल्कः ।

—कल् (कल गतौ संख्याने च) । प्रत्याकलितस्वदुर्नयः (दशकु०) । प्रत्याकलितः परिगणितः, सुविचिन्तितः ।

—काङ्क्ष् (काक्षि काङ्क्षायाम्) । मृगं हरिरिवादृश्यः प्रत्याकाङ्क्षत कीचकम् (भा० वि० २२।३८) । प्रत्याकाङ्क्षत= प्रत्याकाङ्क्षत्, प्रत्यपालयत्, प्रत्यैक्षत ।

—क्रुश् (क्रुश आह्वाने रोदने च) । आक्रुष्टः पुरुषः सर्वं प्रत्याक्रोशेदनन्तरम् (भा० वन० २९।२७) । प्रत्याक्रोशेत् प्रतिशपेत् ।

**—ख्या** (ख्या प्रकथने, चक्षिङ आदेशो वा)। यदि त्वं भजमानां मां प्रत्याख्यास्यसि मानद। विषमग्निं जलं रज्जुमास्थास्ये तव कारणात् (भा० वन० ५६।४)॥ **प्रत्याख्यास्यसि प्रत्यादेक्ष्यसि, न प्रतिपत्स्यसे।** वार्तिककारस्तु न क्वादेरित्यादि प्रत्याचख्यौ (पा० ७।३।५९ इत्यत्र सि० कौ०)। **प्रत्याचख्यौ निराकृतवान्।** एवमेवाब्रवीद् राजा प्रत्याख्यातश्च तैरपि (हरि० १।३०।३०)। (तुर्वस्वादिभिर्) **नेत्युक्तः।** अस्मात् प्रभवतो वैमनस्यादुत्सवः प्रत्याख्यातः (शा० ६)। **प्रत्याख्यातः प्रत्यादिष्टः, आदेशेन प्रतिवारितः।** प्रत्याख्यातविशेषकं कुरबकं श्यामावदातारुणम् (माल० ३।५)। **प्रत्याख्यातमतिक्रान्तमतिशयितम्।** को हि त्वैवं ब्रुवन्तमर्हति प्रत्याख्यातुम् (श० ब्रा० १४।६।१।११)। **प्रत्याख्यातुम् प्रतिवक्तुम् प्रतिवदितुम्, त्वदुक्तं निरसितुम्।** अनभिप्रेतमापन्नः प्रत्याख्यातुमनीश्वरः (भा० पु० ३।३१।२५)। **प्रत्याख्यातुं नेति वक्तुम्।** प्रत्याख्यायं देवताभ्य आहुतिं जुहोति (श० ब्रा० १३।३।४।१)। **प्रत्याख्याय प्रत्येकम् आमन्त्र्य।** प्रत्याख्येयस्त्वया तात कुण्डलार्थे सुरेश्वरः (भा० वन० ३०१।१३)। **प्रत्याख्येयः=नेति वक्तव्यः।**

**—गम्** (गम्लृ गतौ)। स्नेहः प्रतिहतो न प्रत्यागच्छति (सुश्रुत० २।२००।१०)। **स्पष्टोऽर्थः।** उर्वशी प्रत्यागच्छति (विक्रम० १)। **प्रत्यागच्छति प्रकृतिं प्रत्यापद्यते, प्रतिबुध्यते, चेतनां प्रतिलभते।** अत एव प्रत्यागतः संजीवितः प्रत्यागतप्राणः, व्यपेतमोहो भवति। मण्डलानि विचित्राणि गतप्रत्यागतानि च (भा० शल्य० ५७।१७)। **प्रत्यागतम् आभिमुख्यमत्यजतोपराङ्मुखस्य सत एवापसरणम्।**

**—गॄ** (गॄ शब्दे)। गृणाति ह वा एतद्धोता यच्छंसति। तस्मा एतद् गृणते प्रत्येवाध्वर्युरागृणाति तस्मात्प्रतिगरो नाम (श० ब्रा० ४।३।२।१)। **निगदव्याख्यातम्।** अध्वर्युस्तस्मिंस्तिष्ठन् प्रत्यागृणाति (शां० श्रौ० १७।४।६)। **प्रत्यागृणाति प्रतिवक्ति।**

**—चक्ष्** (चक्षिङ् व्यक्तायां वाचि)। दीयमानं प्रत्याचक्षीत (का० श्रौ० २२।१।३२)। **नाङ्गी कुर्यादित्यर्थः।** न संनिपतितं धर्म्यमुपभोगं यदृच्छया। प्रत्याचक्षते······(भा० शां १७६।२४)। **उक्तोऽर्थः।** न कञ्चन वसतौ प्रत्याचक्षीत (तै० उ० ३।१०।१)। **निवासं याचितो निषेधं मा वोचदित्यर्थः।** गुरुपुत्रीति कृत्वा प्रत्याचक्षे न दोषतः (भा० आदि० ७७।१७)। **उदीरितचर एवार्थः।** प्रत्याचष्टात्मभूर्देवान् (भा० पु० ३।१५।११)। **प्रत्याचष्ट प्रत्युवाच। अप्रसिद्धिदूषितोऽयमर्थः। प्रसिद्धिं प्रति चास्य कवेरनादरः प्रसिद्धः।**

—चरण् (चरण गतौ, कण्ड्वादिः)। प्रति वां जिह्वा घृतमाचरण्यात् (अथर्व० ७।३०।१)।

—दा (डुदाञ् दाने)। शुभाशुभं कर्म कृतं यदन्यत्तदेव प्रत्याददते स्वदेहे (भा० शां० ७४१५)। प्रत्याददते पुनराददते पुनराप्नुवन्ति। प्रत्यादित्सु त्रिविष्टपम् (भा० पु० १।३।१६)। न चाहं शक्तः शापं प्रत्यादातुम् (भा० आदि० ३।२२)। प्रत्यादातुं प्रतिसंहर्तुम्, प्रतिनिवर्तयितुम्। उत्तमं पादं प्रत्यादाय (शां० श्रौ० ७।२५।६, ऋक् प्रा० १०।१।८)। प्रत्यादाय=आवर्त्य। यत्र खल्वेकः प्रत्यादेयं ददाति द्वितीयश्च प्रतिदेयं गृह्णाति तत्रास्य दृष्टत्वात्प्रधानगुणशब्दः (न्यायभा० ४।१।६०)। प्रत्यादेयं पुनर्ग्राह्यम्।

—दिश् (दिश अतिसर्जने, दिशिरुच्चारणक्रिय इति भाष्यम्)। त्वत्सन्निधौ यत् कथयेत्पतिस्ते यद्यप्यगुह्यं परिरक्षितव्यम्। काचित्सपत्नी तव वासुदेवं प्रत्यादिशेत् तेन भवेद् विरागः (भा० वन० २३४।८)॥ वासुदेवं प्रत्यादिशेत् वासुदेवं कथयेत्। संजीवकः प्रत्यादिश्यताम् (हितोप० सुहृद्० कथा ८)। आहूयतामित्यर्थः। कष्टमेते सुहृद्व्यसनेषु परवदुदासीनाः प्रत्यादिश्यामहे (मुद्रा० ६)। तिरस्क्रियामहे। अथ बोधिसत्त्वस्तदस्याः समुदाचारधाष्ट्र्यं तेजस्विनिभृतेन वचसा प्रत्यादिदेश (अवदा० जा० १६)। जगर्ह इत्यर्थः। ऋजुप्रणामादिक्रिययैव तन्वी प्रत्यादिदेशैनमभाषमाणा (रघु० ६।२५)। प्रत्यादिदेश निराचकार। राजा कालस्य कारणम्। तत् किमहमेतं जलधरसमयं न प्रत्यादिशामि (विक्रम० ४)। तत्-प्रत्यावृत्तिं नाज्ञापयामि। राजा कालस्य कारणमित्युक्तम्। अन्तः शरीरेष्वपि यः प्रजानां प्रत्यादिदेशाविनयं विनेता (रघु० ६।३९)। प्रत्यादिदेश निषिषेध। यस्य यदकुशलं पश्यसि तत् तदानीमेव प्रत्यादिशेति (कौ० अ० १।११।३)। प्रत्यादिश प्रतिक्रियतामित्यादिश आज्ञापय। तव मन्त्रकृतो मन्त्रैर्दूरात्प्रशमितारिभिः। प्रत्यादिश्यन्त इव मे दृष्टलक्ष्यभिदः शराः (रघु० १।६१)॥ प्रत्यादिश्यन्ते प्रतिनिवर्त्यन्ते, प्रयोगाद् वार्यन्ते। प्रागपि सोऽस्माभिरर्थः प्रत्यादिष्ट एव (शा० ५)। प्रत्यादिष्टः परित्यक्तः परिहृतः। प्रत्यादिष्टविशेषमण्डनविधिः (शा० ६।६)। प्रत्यादिष्टः परिहृतः। कामं प्रत्यादिष्टां स्मरामि न परिग्रहं मुनेस्तनयाम् (शा० ५।३१)। प्रत्यादिष्टां निराकृताम्। महावंशप्रदीपेन......। रक्षागृहगता दीपाः प्रत्यादिष्टा इवाभवन् (रघु० १०।६९)। प्रत्यादिष्टाः प्रतिबद्धाः, अभिभूताः। महाप्रदीपसमीपे नाल्पाः स्फुरन्तीति भावः। मन्यमानः स तं राजन्प्रत्यादेशमिवात्मनः (भा० भीष्म० ९८।२८)। प्रत्यादेशो निराकरणम्। प्रत्यादेशं

मन्यमानो महात्मा (भा० भीष्म० ८५।२६)। प्रत्यादेशो भर्त्सनम्। प्रत्यादेशो रूपगर्वितायाः श्रियः (विक्रम० १)। प्रत्यादेशो निराक्रिया। प्रत्यादेशादभिहितं धारयिष्ये कथं बत (रा० २।१३।६)। प्रत्यदेशात् तिरस्क्रियापूर्वम्। प्रत्यादेशादपि च मधुनो विस्मृतभ्रूविलासम् (मेघ०२।३५)। प्रत्यादेशः परिहारः। प्रत्यादेशान्न खलु भवतो धीरतां कल्पयामि (मेघ० २।५४)। प्रत्यादेशो निषेधोऽनङ्गीकारः। मल्लिस्तु प्रत्यादेशः प्रतिवचनमित्येवं विववार, कोषं च प्रमाणमुदाजहार। नायमर्थः प्रसिध्यतीति नेममितरे रोचयन्ते। येन येन यथाङ्गेन स्तेनो नृषु विचेष्टते। तत्तदेव हरेत्तस्य प्रत्यादेशाय पार्थिवः (मनु० ८।३३४)॥ प्रत्यादेशाय प्रसङ्गनिवारणायेति कुल्लूकः। दत्तः स्वमांसं दहता कपोतेन महात्मना। नृशंसस्य ममाद्यायं प्रत्यादेशो न संशयः (भा० शां० १४७।४)॥ प्रत्यादेशो धिक्कारपूर्वक उपदेश इति नीलकण्ठः। प्रत्यादेष्टुं स तद्वैरं मामिदानीं प्रतीक्षते (प्रतिज्ञा० ४।१४)। प्रत्यादेष्टुं निर्यातयितुम्।

—दृ (दृङ् आदरे)। कथं नु नो दूतश्चरन्न प्रत्यादृथाः (श० ब्रा० ३।५।१।१९)। न प्रत्यादृथाः सादरं नैक्षथाः।

—धा (डुधाञ् धारणपोषणयोः)। यो ह वै शिशुं साधान मप्रत्याधानं सस्थूणं सदामं वेद (बृ० उ० २।२।१)। प्रत्याधीयते पुनः पुनराधीयतेऽत्रेति प्रत्याधानं स्थूलशरीरम्।

—नह् (णह बन्धने)। तयोरन्यतरत् प्रत्यानह्यति (श० ब्रा० ३।३।४।८)। प्रत्यानह्यति अवलम्बयति। तयोः कृष्णमृगचर्मणोः।

—नी (णीञ् प्रापणे)। यदपः प्रत्यानयति (श० ब्रा० २।३।१।१६, ११।६।१।११)। (अग्निहोत्रपयसि) पश्चादासिञ्चति जलमित्यर्थः। ये नयन्ति परं पारं सिद्धान् प्रत्यानयन्ति च (रा० ४।४४।७६)। प्रत्यानयन्ति प्रत्याहरन्ति। प्रत्यानेष्यति शत्रुभ्यो बन्दीमिव जयश्रियम् (कु० २।५२)। तूर्णं प्रत्यानयस्वैतान् कामं व्यध्वगतानपि (भा० सभा० ७४।२४)। उक्तोऽर्थः। दुर्योधनेन यदेतत् पापं तेषु पुरा कृतम्। त्वया तत्कुलवृद्धेन प्रत्यानेयं नरेश्वर (भा० उ० ३६।३१)। प्रत्यानेयमपनोद्यम्, प्रतिविधेयम्।

—पद् (पद गतौ)। प्रत्यापन्नेन्द्रियस्मृति (भा० पु० ८।११।४०)। प्रत्यापन्ना प्रत्यागता प्रतिलब्धा। प्रत्यापत्तिमपश्यन्ती द्विजस्याचिन्तयत्तदा (भा० पु० १०।५३।२२)। प्रत्यापत्तिं प्रत्यावृत्तिं प्रत्यागमनम्। आचार्यमातृ-

पितृहन्तारस्तत्प्रसादाद्भयाद्वा, एषां तेषां प्रत्यापत्तिः (व० ध० शा० १५।१९)। प्रत्यापत्तिः प्रायश्चित्तम् । प्रसादादपयाप्याद्वेति पाठान्तरम् । नास्यास्मिँल्लोके प्रत्यापत्तिर्विद्यते (आप० ध० १।६।२४।२५)। प्रत्यापत्तिः शुद्धिः । पुत्रादिभावेन सम्बन्ध इति केचित् । अशक्योऽयं व्याधिरस्याः । विनष्टा नामेयमिति मन्तव्यम् । नास्याः प्रतिपत्तिरस्ति (तन्त्रा० ४ उपक्रमे) । प्रत्यापत्तिः प्राणप्रतिलम्भः, संजीवनमुज्जीवनम् । संन्यस्य दुर्मतिः कश्चित् प्रत्यापत्तिं व्रजेद्यदि (याज्ञ० ३।२८० मिताक्षरायां संवर्तवचनम्) । प्रत्यापत्तिर्गार्हस्थ्यं प्रति पुनर्गमनम्, गृहीभावः । अ अ (पा० ८।४।६८) इत्यनेन संवृतत्वप्रत्यापत्तिः क्रियते (काशिका) । संवृतत्वप्रत्यापत्तिः संवृतत्वप्रतिलब्धिः । प्रत्यापत्तिश्च यस्येह बालिशस्य न जायते (भा० शां० २९१।६) । प्रत्यापत्तिर्वैराग्यम् ।

—भू (भू सत्तायाम्) । ओषधयो वै प्रजाः प्रभवन्तीः प्रत्याभवन्ति (तै० सं० १।७।२।३) । प्रत्याभवन्ति सन्निहिता हस्तगता उपयोग्या वा भवन्तीत्यर्थः ।

—म्ना (म्ना अभ्यासे) । यद्यपि (तत्पित्रुपामन्त्रणम्) अप्रत्याम्नातव्यम् (आसीत्) (भा० पु० ५।१।६) । अप्रत्याम्नातव्यमप्रत्याख्येयमिति श्रीधरस्वामी । त्रेयणापि निवर्तन्ते सिद्धया प्रतिषेधेन प्रत्याम्नायेन (भा० श्रौ० ६।१५।६) । प्रत्याम्नायः प्रत्यादेशः, आदिष्टस्य पुनरादेशेन निवर्तनम् । यद्यनाढ्योऽग्नीनादधीत काममेवैकां गां दद्यात्सा गवां प्रत्याम्नायो भवति (आप० श्रौ० ५।६।२०।१८) । गवां प्रत्याम्नायो बह्वीनां गवां दानस्य निवर्तिका भवति । न रथादीनन्यजातीयान्निवर्तयतीति भाष्यम् । गवां प्रत्याम्नाय इति वचनादन्यत् सर्वं दातव्यमिति रुद्रदत्तः ।

—या (या प्रापणे) । दिव्यमस्त्रं प्रकुर्वाणः प्रत्यायाद्रथसत्तमः (भा० वि० ५५।३) । प्रत्यायात् प्रातिकूल्येनाभिमुखोऽयादित्यर्थः । सोऽति विद्धो बलवता प्रत्यपायाद्रथान्तरम् (भा० कर्ण० २५।११) । प्रत्यपायात् प्रत्यपाक्रामत् ।

—रभ् (रभ राभस्ये) । नह प्रत्यारम्भे (पा० ८।१।३१) । चोदितस्यावधीरणे उपालिप्सया प्रतिषेधयुक्तः प्रत्यारम्भः क्रियत इति काशिका । प्रतिषेधयुक्त आरम्भः प्रत्यारम्भ इति तु दीक्षितः । संक्षेपरुचिर्दीक्षितो मिताक्षरतामिच्छति न विशदताम् ।

—लभ् (डुलभष् प्राप्तौ) । प्रत्यालब्धामङ्गुष्ठेनाभिसंगृह्य (आश्व० श्रौ०

१।७।५) । प्रत्यालब्धामन्यतः स्पृष्टाम् । पराञ्चमावृत्तं संपिष्यादप्रत्यालभमानम् (श० ब्रा० १।६।३।३३) । अप्रत्यालभमानम् प्रतिनिवृत्यापरिवेष्टितारमनाक्रामन्तमविरुन्धानम् ।

—ली (लीङ् श्लेषणे) । तं मृत्युः प्रत्यालीयत (शां० ब्रा० १५।५) । समाश्लिष्यदित्यर्थः ।

—वप् (डुवप बीजसन्ताने) । श्रमव्यायामाभ्यां प्रतिविहिततन्त्रस्य नृपतेः । परं प्रत्यावापः फलति कृतसेकस्तरुरिव (बा० रा० १।२४) ॥

—व्रज् (व्रज गतौ) । येनेतो गच्छेयुरन्येन प्रत्याव्रजेयुः (लाट्या० श्रौ० ४।४।१७) । प्रत्याव्रजेयुः प्रत्यावर्तेरन् ।

—श्रु (श्रु श्रवणे) । ऋत्विजः सम्प्रदायं चरन्ति । यत्प्रत्याश्रावयति यज्ञ एवैतदुपावर्तते (श० ब्रा० १।५।२।७) । यत्प्रत्याश्रावयति यदुत्तरं ब्रवीति (आग्नीध्रः) ।

—श्वस् (श्वस प्राणने) । प्रत्याश्वसिहि साध्वस्यां (शय्यायाम्) राजपुत्र यथासुखम् (रा० २।५९।२) । प्रत्याश्वसिहि विश्रान्तो भव । एकश्चाप्यगणः सङ्ख्ये प्रत्याश्वासमरोचयम् (भा० शल्य० ३१।३६) । प्रत्याश्वासो विश्रमः । स तु दीर्घेण कालेन प्रत्याश्वस्तो नराधिपः (भा० शल्य० १।४८) । प्रत्याश्वस्तो लब्धसंज्ञः ।

—सञ्ज् (षञ्ज सङ्गे) । अथ प्रत्यासङ्गः कमपि महिमानं वितरति । प्रत्यासङ्ग एकस्थानसहासिकादिसंसर्गविशेषः ।

—सद् (षद्लृ विशरणगत्यवसादनेषु) । मुक्तिस्त्वां प्रत्यासीदति (कि० ११।३६) । त्वां प्रत्यासीदति त्वामुपस्थिता तव संनिहिता भवति । विद्यां श्रुत्वा ये गुरुं नाद्रियन्ते प्रत्यासन्ना मनसा कर्मणा वा (भा० शां० १०८।२३)। प्रत्यासन्ना अवसन्ना विशीर्णा विनष्टाः । यः पापं कुरुते राजा काममोहबलात्कृतः प्रत्यासन्नस्य तस्यर्षे किं स्यात्पापप्रणाशनम् (भा० शां० १२३। १३) ॥ प्रत्यासन्नस्य पश्चात्तप्तस्य ।

—सृ (सृ गतौ) । सुप्यजातौ णिनिस्ताच्छील्ये (पा० ३।२।७८) इत्यत्र उत्प्रतिभ्यामाङि सर्तेरुपसंख्यानम् इति वार्तिकं पठितम् । उदासारिण्यः प्रत्यासारिण्य इति चोदाहरणे स्थिते । प्रत्यासारो व्यूहपार्ष्णिरित्यमरः ।

—हृ (हृञ् हरणे) । तातस्य यदतिक्रान्तं प्रत्याहरतु तद्भवान् (रा० २।१०६।१४) । प्रत्याहरतु निवर्तयतु । अतिक्रान्तमतिक्रमणम् । नपुंसके भावे

त्तः । तत एकाक्षरं नादं भोरित्येव समीरयन् । प्रत्याहरज्जगत्सर्वमुच्चैः स्थावर-जङ्गमम् (भा० शां० ३३३।२५) ॥ प्रत्याहरत् प्रत्यवाहरत् समहरत् । प्रत्या-हरन्ति क्रव्यादा गृध्रगोमायुवायसाः (भा० सभा० ८०।३०) । प्रत्याहरन्ति नगरसमीपे प्रेतमांसास्थ्यादीन्यानयन्ति प्रतिकूलं भषन्ति क्रोशन्ति वेति नील-कण्ठः । द्वितीयस्मिन्नर्थे क्लिष्टं कल्पयति टीकाकारः । केवलमाहरणं विशब्दासहचरितं शब्दक्रियां नाह । ब्रूयाच्चेत्कामं प्रतिशब्दयुक्तं प्रतिकूलं भषणं ब्रुवीत । किं च । भषणेऽर्थेऽङ्गीकृते क्रव्यादा इति विशेषणमर्थवन्न स्यात् । दिवसे दिवसे ह्यस्या गतिजल्पितचेष्टितम् । प्रत्याहरंश्च मे युक्ताः स्थिताः प्रियहिते सदा (भा० उ० १८६।१४) ॥ गत्यादिविषयां प्रवृत्तिं माम-हारयन्नित्यर्थः । ततो बाष्पाकुलां वाचं दमयन्ती शुचिस्मिता । प्रत्याहरन्ती शनकैर्नलं राजानमब्रवीत् (भा० वन० ५६।१८) ॥ प्रत्याहरन्ती संज्ञां लभ-माना, मोहान्निर्गता सती । दृषदं प्रक्षाल्य ब्रह्मचारी व्रतवती वा ब्रह्मबन्धुः कुमारी वाऽऽप्रत्याहरन्ती पिनष्टि (गो० गृ० २।६।६) । प्रत्याहरणं पिष्टस्य पश्चादानयनं तदकुर्वती । उच्छ्रितशिलापुत्रकेणाहत्याहत्य पेषणमप्रत्याहरण-मिति वा । सकृत् प्रयोगेणैव यथा पेषणं निर्वहति तथा कर्तव्यं तदेवाप्रत्या-हरणं भवतीति वा । किं शेषे ऽद्य निराकृताः किमरयः प्रत्याहृता वा प्रिया (हनुमन्नाटके १३।२८) । प्रत्याहृता प्रत्यानीता प्रत्यागमिता । स्वविषया-संप्रयोगे चित्तस्य स्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः (यो० सू० २।२५) । प्रत्याहारं तु वक्ष्यामि शर्वर्यादौ गतेऽहनि (भा० शां० २३३।१) । प्रत्याहारः संहारः । प्रत्याहार उपादानमिति वैजयन्ती ।

## प्रत्युद् (प्रति + उद्)

—इ (इण् गतौ) । कथं न प्रत्युदेत्यद्य स्मयमाना यथा पुरा (भा० अनु० २।६३) । प्रत्युदेति प्रत्युद्गच्छति । तं जानतीः प्रत्युदायन्नुषासः (ऋ० ३।३१।४) । उक्तोऽर्थः । स सूर्यं प्रति पुरो न उद्गाः (ऋ० ७।६२।२) । अस्माकं समक्षमुदक्रमीरित्यर्थः । यस्तं प्रतीपस्तरसा प्रत्युदीयात् (भा० उ० २२।२६) । प्रत्युदीयात् प्रतिकूल उन्मुखो गच्छेत् । अहं चैनं प्रत्युदियामाचार्यो वा धनञ्जयम् (भा० उ० १६६।२४) । उक्तोऽर्थः ।

—ईक्ष् (ईक्ष दर्शने) । मा स्मैनं प्रत्युदीक्षेथाः (रा० २।६।२३) । उच्च-क्षूभूय मैनमीक्षिष्ठाः, चक्षुषी उन्नमय्य एनं प्रति मा व्यापीपरः ।

—ऊह् (ऊह् वितर्के) । दक्षिणतः पुरीषं प्रत्युदूहति (श० ब्रा० १।२।५।१७) । प्रत्युदूहति समूहति समुच्चिनोति ।

—क्रम् (क्रमु पादविक्षेपे)। प्रत्युत्क्रान्तजीवितः=अर्धमृतः। प्रत्युत्क्रमः प्रयोगार्थं इत्यमरः। युद्धार्थः प्रकृष्टो योगः प्रयोगः।

—गम् (गम्लृ गतौ)। प्रत्युज्जगामातिथिमातिथेयः (रघु० ५।२)। सच्चिकीर्षयाऽतिथिं प्रति स्वस्थानादुत्थाय गतवानित्यर्थः। प्रत्युज्जगाम सहसा विनयेन समन्वितः (रा० १।५०।७)। उक्तोऽर्थः। प्रत्युज्जगाम तं भ्राता (रा० २।६६।३३)। उचितपूर्व एवार्थः। प्रत्युज्जगाम तेजस्वी गृहानेव महातपाः (भा० वन० १८५।३६)। उत्थाय गृहान्प्रति चचालेत्येवार्थः। सत्क्रियायै स्वस्थानादुच्चल्य सत्कार्यं प्रति गमनं नार्थः। स्नेहेनादरः। स्निग्धेन भोजनेन माम्प्रत्युद्गच्छति (स्वप्न० ४)। अत्र सत्क्रियाऽऽराद् द्योत्यत इति नापलाप्यम्। तमापतन्तं सम्प्रेक्ष्य केशिनं हयदानवम्। प्रत्युज्जगाम गोविन्दः···(हरि० २।२४।१६)॥ प्रतिग्रहीतुमभिययौ, विरोद्धुं प्रससार। पौरैः प्रत्युद्गतो दूराद् (रा० १।७७।८)। प्रत्युद्व्रज्य सत्कृत इत्यर्थः। प्रत्युद्गतो मां भरतः ससैन्यः (रघु० १३।६४)। कर्तरि क्तः। अर्थस्तु पूर्वेण समानः। प्रत्युद्गताः केकयान् (भा० भीष्म० ७६।५६)। विरुरुत्सया केकयान्प्रति प्रस्थिताः। तमागतमभिप्रेक्ष्य प्रत्युद्गम्य···। प्रणिपत्याभिवाद्यैनं तस्थुः प्राञ्जलयस्तदा (भा० आदि० १६६।२)॥ प्रत्युद्गम्य सचित्रकीर्षयाऽग्रतः प्रक्रम्य। प्रत्युद्गम्य रथं रिपोः। विध्वंसयितुमिच्छामि (रा० ६।६०।६)॥ प्रत्युद्गम्य विरोधभावनयाऽग्रतः प्रसृत्येत्यर्थः। तत्र सम्बन्धिजामातृमुखान् प्रत्युद्गमादिना। प्रह्वस्तान् पूजयामास··· (कथा० ४४।१३०)॥ प्रत्युद्गमः सत्कारार्थमभिगमः। प्रत्युद्गमनीयं वस्त्रयोर्धौतयोर्युगम् इत्यमरः।

—गै (कै गै शब्दे)। प्रत्युद्गीतस्तु खल्वेषां तथोद्गाता भवति (लाट्या० श्रौ० ७।८।१६)। प्रत्युद्गीतो गानेन प्रत्युत्तरितः।

—ग्रह् (ग्रह उपादाने)। प्रत्यवेतस्वराणां तु प्रत्युद्गृह्णीयात् (लाट्या० श्रौ० ७।८।१)। प्रत्याचक्षीत, पराकुर्यात्।

—चरण् (चरण गतौ कण्ड्वादिः)। प्रति ते जिह्वा घृतमुच्चरण्यत् (वा० सं० ८।२४)। उच्चरण्यत् उच्चरतु। जिह्वा ज्वाला। महीधरस्तु उत्पूर्वाच्चरतेर्लोडर्थे ण्यत्प्रत्यय औणादिक इत्यभिमन्यते। तद्विचारासहम्।

—जीव् (जीव प्राणधारणे)। ददौ तस्यै तदैवार्धं निजायुषः। प्रत्युज्जिजीव सा तेन (कथा० १४।८१)॥ प्रतिलब्धजीविता बभूवेत्यर्थः।

—तॄ (तॄ प्लवनतरणयोः)। मन्दाकिनीतीरं प्रत्युत्तीर्य (रा० २।१०३।२८)। प्रत्युत्तीर्य=उपगम्य।

—**पद् (पद गतौ)**। तत्र मे प्रत्युत्पन्ना मतिः (तन्त्रा०)। **प्रत्युत्पन्ना तत्कालमुत्पन्ना, सद्यः संजाता।** इदं तत् प्रत्युत्पन्नमति स्त्रैणमिति यदुच्यते (शा० ५)। **तात्कालिकी तु प्रतिभा प्रत्युत्पन्नमतिः स्मृता।** यस्य बुद्धिः परिभवेत् तमतीतेन योजयेत्। अनागतेन दुर्बुद्धिं प्रत्युत्पन्नेन पण्डितम् (भा० आदि० १४०।७४)॥ **प्रत्युत्पन्नेन वर्तमानेन धनादिना। योजयेदित्यस्य स्थाने सान्त्वयेदिति पाठान्तरम्।** अतीतानागतं हित्वा प्रत्युत्पन्नेन वर्तय (भा० शां० २२७।६६)। अवाप्यान्कामयन्नर्थान्नानवाप्यान् कदाचन। प्रत्युत्पन्नाननुभवन् मा शुचस्त्वमनागतान् (भा० शां० १०४।२८)। **प्रत्युत्पन्नांस्तत्कालमुपस्थितान्।**

—**यम् (यम उपरमे)**। तमेकादशिन्या पुरस्तात्प्रत्युद्यच्छति (पञ्च० ब्रा० २०।२।४)। **समानोन्मानं करोतीत्यर्थः।** क्षत्रायैव तद् विशं प्रत्युद्यामिनीं कुर्युः (ऐ० ब्रा० ६।२१)। **प्रतिकूलोद्योगयुक्ताम्, विरोधायोत्तिष्ठमानाम्, अभ्युत्थिताम् इत्यर्थः।** नैनं शत्रुः प्रत्युद्यामी भवति (जै० ब्रा० १।६५)। **उदीरितचर एवार्थः।** यद् द्वे इव ब्रूयाद्यजमानाय द्विषन्तं भ्रातृव्यं प्रत्युद्यामिनं कुर्यात् (श० ब्रा० १।५।२।२)। ते यजमानलोके द्विषन्तं भ्रातृव्यं प्रत्युद्यामिनं कुर्वन्ति (श० ब्रा० ८।४।४।८)। **प्रतिद्वन्द्विनं कुर्वन्तीत्यर्थः।**

—**या (या प्रापणे, प्रापणमिह गतिः)**। अर्जुनं वासुदेवं च को वा प्रत्युद्ययौ रथी (भा० शल्य० २।६४)। **प्रत्युद्ययौ प्रातिभटचेनाभिमुखं ययौ, विरुरुत्सयाऽभिमुखं जगाम।** ये चापि त्वां महाबाहो प्रत्युद्यान्ति नराधिपाः। तैर्विग्रहो यथा न स्यात्... (भा० आश्व० ७२।२३)॥ प्रत्युद्ययुरमृष्यन्तो राजानः पाण्डवर्षभम् (भा० आश्व० ७७।२)। न कश्चिदेनं समरे प्रत्युद्याति महारथः (भा० भीष्म० ११६।७६)। **उक्तोऽर्थः।** प्रत्युद्ययौ हरिं रौद्रः स्वबाहुबलमास्थितः (मात्स्य० १५२।१७)। **प्रत्युद्ययौ अभ्यद्रवत् उपाद्रवत्।** प्रोष्यागच्छतामाहिताग्नीनामग्नयः प्रत्युद्यान्ति (रघु० १।४९ टीकायां मल्लिनाथेनोद्धृतं वचनम्)। **सच्चिकीर्षयाऽभिमुखं प्रसरन्तीत्यर्थः।** खाण्डवे येन भगवान् प्रत्युद्यातः सुरेश्वरः (भा० द्रोण० १८५।१५)। **प्रत्युद्यातः प्रतिगृहीतः, प्रतिरुद्धः।** तस्माद्रणे द्वैरथे मां प्रत्युद्यातारमच्युत। वृतवान् परमं कृष्ण प्रतीपं सव्यसाचिनः (भा० उ० १४१।१६)॥ **प्रत्युद्यातारं विरोधायोद्योक्तारम्।**

—**श्रि (श्रिञ् सेवायाम्)**। त (देवाः) एतद्दक्षिणतः प्रत्युदश्रयन् (श० ब्रा० १।४।४।८)। **उच्छ्रिता उन्नता उन्नतकायाः स्थिता इत्यर्थः।**

—स्था (ष्ठा गतिनिवृत्तौ)। न्याय्ये प्रत्युत्थाने प्रत्युत्थितं कश्चित् कञ्चित् पृच्छति (लुङ् ३।२।११० सूत्रे वसेर्लुङ् रात्रिशेष इति वार्त्तिके भाष्ये)। प्रत्युत्थितः प्रबुद्धः। शय्यात उत्थितः। यस्ततः पुत्रो जायते स लोकः प्रत्युत्थायी (श० ब्रा० ११।६।२।१०)। प्रत्युत्थायी पुनरुदित्वरः, पुनरभ्युदयशीलः। मङ्गलाद्यप्रयोगं च प्रत्युत्थानं च सर्वतः (भा० सभा० ५।१०८)। सर्वतः प्रत्युत्थानं सर्वेण विरोधः।

—हा (ओहाङ् गतौ)। असृग्रमिन्द्र ते गिरः प्रति त्वामुदहासत (ऋ० १।६।४)। प्रत्युदहासत उद्गत्य प्रापन्।

### प्रत्युदाङ् (प्रति+उद्+आङ्)

—हृ (हृञ् हरणे)। सर्वत्र कुशलं राजा वसिष्ठं प्रत्युदाहरत् (रा० १।५२।१०)। प्रत्युदाहरत् प्रत्यवोचत्। वलीपलित एजत्क इत्यहं प्रत्युदाहृतः (भा० पु० ६।६।४१)। प्रत्युदाहृतः प्रत्याख्यातो निराकृतः। अन्यत्र दुर्लभोऽर्थः।

### प्रत्युप (प्रति+उप)

—कृ (डुकृञ् करणे)। न हि सन्त आत्मानं प्रत्युपकृतमिच्छन्ति, आपद्गत एव प्रत्युपकारमपेक्षते यतः (इति वयम्)।

—दिश् (दिश अतिसर्जने, दिशिरुच्चारणक्रिय इति भाष्यम्)। कर्म व्याधिं प्रति प्रत्युपदेक्ष्यामः (सुश्रुत० १।१४।१७)। विशेषैः सहोपदेक्ष्याम इत्यर्थः। यद्यत्प्रयोगविषये भाविकमुपदिश्यते मया तस्यै। तत्तद्विशेषकरणात् प्रत्युपदिशतीव मे बाला (माल० १।५)। प्रत्युपदिशति कृतस्योपदेशस्य कृते स्वयमुपदेशं वितरति। सा राजहंसैः···व्यनीयत प्रत्युपदेशलुब्धैरादित्सुभिर्नूपुरशिञ्जितानि (कु० १।३४)। उक्तोऽर्थः।

—धा (डुधाञ् धारणपोषणयोः)। ताम्नेष्टकया पुरस्तात् प्रत्युपदध्यात् (श० ब्रा० ७।४।२।३६)। प्रत्युपदध्यात्=अपिदध्यात्।

—या (या प्रापणे, प्रापणमिह गतिः)। प्रत्युपायां पुनर्गृहम् (भा० आदि० २३१।८)। प्रत्युपायां न्यवर्ते।

—वद् (वद व्यक्तायां वाचि)। तेनो श्रीः प्रत्युपोदिता (पञ्च० ब्रा० १०।७।२)। प्रत्युपोदिता=अपोदिता=वाचा निन्दिता, तिरस्कृता।

—विश् (विश प्रवेशने)। आर्यं प्रत्युपवेक्ष्यामि यावन्मे न प्रसीदति (रा० २।१११।१३)। प्रत्युपवेक्ष्यामि अभिमुख एकपार्श्वेनोपविष्टो रोत्स्यामी-

त्यर्थः। तदिदमनुनेतुमनुकूलयितुं भवति मनोरथसिद्धये। स चार्थ इह यावन्मे न प्रसीदतीत्यनेनोक्तः। किं मा भरत कुर्वाणं तात प्रत्युपवेक्ष्यसे (रा० २।१११। १६)। न तु मूर्धाभिषिक्तानां विधिः प्रत्युपवेशने (रा० २।१११।१७)॥ उक्तोऽर्थः। मत्त उन्मत्तो बद्धोऽणिकः प्रत्युपविष्टो यश्च प्रत्युवेशयते तावन्तं कालम् (आप० ध० १।१९।१)। प्रत्युपविष्ट ऋणादिना कारणेनाधमर्णादिकं निरुध्य तत्पार्श्वं उपविष्टः।

—श्लिष् (श्लिष आलिङ्गने)। मासे ह्यतीते योऽनन्तरो दिवसः स मासं प्रत्युपश्लिष्टो भवति (पा० २।१।४३ सूत्रे न्यासे)। मासं प्रत्युपश्लिष्टः= मासेन संसक्तः।

—स्था (ष्ठा गतिनिवृत्तौ)। प्रत्युपस्थितकालस्य कार्यस्यानन्तरो भव (भा० वि० २१।१९)। प्रत्युपस्थित उपस्थितः। बुद्धिर्व्यावर्तते चास्य विनाशे प्रत्युपस्थिते (भा० आश्व० १७।७)। उक्तोऽर्थः। प्रत्युपस्थिते च का गतिः (शा० )। प्रतीपेऽर्थं उपस्थिते। श्रेयसा योजयन्त्याशु श्रेयसि प्रत्युपस्थिते (भा० शां० २८७।५७)। प्रतीपत्वेनोपस्थिते हीयमान इत्यर्थः।

—स्पृश् (स्पृश संस्पर्शने)। अन्ततः प्रत्युपस्पृश्य शुचिर्भवति (द्रा० गृ० १।१।१२, गो० गृ० १।२।२८)। प्रत्युपस्पृश्य पुनरुपस्पृश्याऽऽचम्य।

### प्रत्युपाङ् (प्रति+उप+आङ्)

—धा (डुधाञ् धारणपोषणयोः)। प्रलयपयसि धातुः सुप्तशक्तेर्मुखेभ्यः श्रुतिगणमपनीतं प्रत्युपाधत्त (भा० पु० ८।२४।६१)। प्रत्युपाधत्त प्रत्यलभत।

### प्रतिनि (प्रति+नि)

—अस् (असु क्षेपे)। तथैवायुधजालानि भ्रातृभ्यां कवचानि च। रथोपस्थे प्रतिन्यस्य (रा० २।४०।१६)। प्रतिन्यस्य प्रत्येकं न्यस्य। प्रविन्य-स्येति पाठान्तरम्।

—क्षिप् (क्षिप प्रेरणे)। प्रतिनिक्षिप्य तं वीरं कृत्या समभिपूज्य च (वन० १५१८४)। आनीतं पुनस्तत्र स्थापयित्वेत्यर्थः।

—गद् (गद व्यक्तायां वाचि)। प्रतिनिगद्य होमः (का० श्रौ० ६।१०। २६)। देवतापरं चतुर्थ्यन्तमुच्चार्येत्यर्थः।

—ग्रह् (ग्रह उपादाने)। आदित्यपात्रेण द्रोणकलशात् प्रतिनिगृह्णीते (श० ब्रा० ४।३।५।६)। प्रतिनिगृह्णीते=उद्धरति।

—धा (डुधाञ् धारणपोषणयोः)। इत्यपात्तं प्रतिनिदधाति (आप० श्रौ० १०।४।१३।२२)। प्रतिनिदधाति पुनर् निदधाति। सप्तधा वितृण्णां वल्मीकवपां प्रतिनिदधाति (तै० सं० ५।१।८।३६)। वल्मीकमृदं शिरःस्थाने प्रतिनिधिं करोतीत्यर्थः। द्रव्येऽविद्यमाने यत्सामान्यतमं मन्येत तत् प्रतिनिदध्यात् (शां० श्रौ० ३।२०।६)। तत्स्थानापन्नं कृत्वा तेन व्यवहरेदित्यर्थः। सोमस्तृणविशेषः। तदसंनिधौ पूतीकतृणानि प्रतिनिधीयन्ते (स्थानिवत्सूत्रे प्रदीपे)। देवता नाम यदर्थं किं चिच्चोद्यते। अन्या तस्याः स्थाने प्रतिनिधीयमाना न देवता स्यात् (मी० ६।३।१६ सूत्रे शा० भा०)। निगदव्याख्यातम्। विहितस्य छागादेरभावे तत्सदृशद्रव्यान्तरे मेषे प्रतिनिहिते (का० श्रौ० १।४।८ टीकायाम्)। प्रतिनिहिते=(छागादेः) स्थाने स्थापिते तद्वदाचरिते। सा सवर्णामन्यां प्रतिनिधायाश्वं रूपं कृत्वा प्रदुद्राव (नि० १२।१०।२)। प्रतिनिधाय स्वस्य स्थाने स्थापयित्वा। तं गुणाश्रयविशेषं प्रतिनिधाय प्रति प्रतिगुणाश्रयविशेषपरिणामात् प्रवर्तते व्यक्तम् (साङ्ख्यका० १६ गौड० भा०)। उद्घाटनीयान्येतानि कुण्डानीति च सौबलीम्। इत्युक्त्वा भगवान्व्यासस्तथा प्रतिनिधाय च। जगाम तपसे (भा० आदि० ११५।२३-२४)॥

—यम् (यम उपरमे)। प्रतिनियतविषयाः शब्दाः। समाने रक्ते वर्णे गौर्लोहित इति भवत्यश्वः शोण इति (भाष्ये)। प्रत्येकं नियतो विषयो येषां ते।

—विश् (विश प्रवेशने)। न तु प्रतिनिविष्टमूर्खजनचित्तमाराधयेत् (भर्तृ० २।५)। प्रतिनिविष्टः प्रत्यभिनिविष्टः, साभिनिवेशः, आग्रहग्रहिलः। प्रतिनिविष्टे च किं श्रेयो मन्यते भवान् (भा० शां० १०४।५४)। प्रतिनिविष्टे दैवे प्रतिकूले। भर्तुः प्रतिनिवेशेन या भार्या स्कन्दयेद्दतुम् (बौ० ध० ४।१।२२)। प्रतिनिवेशः प्रतिकूलता, अनिच्छा वेति गोविन्दस्वामी।

—वृत (वृतु वर्तने)। अत्येति रजनी या तु सा न प्रतिनिवर्तते। न प्रत्यागच्छतीत्यर्थः। सूर्योपस्थानात् प्रतिनिवृत्तः (विक्रम० ५)।

### प्रति+निस् (प्रति+निर्)

—दिश् (दिश अतिसर्जने, दिशिरुच्चारणक्रिय इति भाष्यम्)। तदिति कृच्छ्रं प्रतिनिर्दिशति (बौ० ध० २।१।२।२२ इत्यत्र गोविन्दस्वामिकृते

विवरणे)। प्रतिनिर्दिशति प्रत्यवमृशति। तदिति प्रकृतं युक्तवद्भावलक्षणं प्रतिनिर्दिश्यते (पा० १।२।५३ इत्यत्र वृत्तौ)। उक्तोऽर्थः। उद्दिश्यमान-प्रतिनिर्दिश्यमानयोरेकत्वमापादयन्ति सर्वनामानि पर्यायेण तल्लिङ्गमुपाददते (पस्पशायां भाष्ये कैयटः)। प्रतिनिर्दिश्यमानं विधीयमानम्।

—या (या प्रापणे, प्रापणमिह गतिः)। न जीवन्प्रतिनिर्याति महतोऽस्माद्रथव्रजात् (भा० भीष्म० १११।१६)। प्रतिनिर्याति निवर्तमानो निर्याति।

## प्रतिपरा (प्रति+परा)

—इ (इण् गतौ)। ते वै पत्नीः संयाजयिष्यन्तः प्रतिपरायन्ति (श० ब्रा० १।६।२।१)। प्रतिपरायन्ति (गार्हपत्यं) प्रतिनिवर्तन्ते। अथ प्रतिप्रस्थाता प्रतिपरैति (श० ब्रा० २।५।२)। उक्तोऽर्थः।

—हृ (हृञ् हरणे)। अथ पत्न्यै पदं प्रतिपराहरन्ति (श० ब्रा० ३।३।१।१०)। एवं एवरज उपहरन्तीत्याह।

## प्रतिपरि (प्रति+परि)

—इ (इण् गतौ)। उल्मुकं त्रिः पुनः प्रतिपर्येति (भा० श्रौ० ७।१७।७, का० श्रौ० ५।८।३०)। अप्रदक्षिणं सव्यं परिक्रामतीत्यर्थः। उदकुम्भेनाग्नि त्रिः परिषिच्य त्रिः प्रतिपर्येति (वाराह श्रौ० २।२।३।११)। उक्तोऽर्थः।

—व्ये (व्येञ् संवरणे)। ऊर्गसि इति नाभिं प्रतिपरिव्ययति (आप० श्रौ० १०।३।६।१४)। प्रतिपरिव्ययति सन्नह्यति।

## (प्रतिप्र (प्रति+प्र)

—ईक्ष् (ईक्ष दर्शने)। शूद्रायां तु प्रेक्षणप्रतिप्रेक्षणयोरेवानध्यायः (आप० ध० १।३।६।११)। प्रतिप्रेक्षणं मिथो विलोकनम्।

—दा (डुदाञ् दाने)। राज्यं प्रतिप्रदास्यामि (भा० उ० ) प्रतिनिर्यातयिष्यामि, प्रत्यर्पयिष्यामि। इयं हैवैनं वधाय प्रतिप्रददावनया हैवैनं प्रतिप्रत्तं जघ्नुः (श० ब्रा० २।५।४।७)। उक्तोऽर्थः।

—दा (दाण् दाने)। तस्मादपि वध्यं प्रपन्नं न प्रतिप्रयच्छन्ति (तै० सं० ६।५।८।२९-३०)। न प्रतिप्रयच्छन्ति न प्रत्यर्पयन्ति।

—मुच् (मुच्लृ मोक्षणे)। तदेषैव व्रतचर्या यत्पूर्वेद्युर्दुग्धं दधिहविरातञ्चनं तत्कुर्वन्ति प्रतिप्रमुञ्चन्ति वत्सांस्तान्पुनरपाकुर्वन्ति (श० ब्रा० ११।१।४।१)। वत्सान्बन्धनान्मुक्त्वा धेनुभिर्मातृभिर्योजयन्ति प्रस्नवायेत्यर्थः।

—या (या प्रापणे, प्रापणमिह गतिः)। एवमुक्तो मतङ्गस्तु प्रतिप्रायाद् गृहं प्रति (भा० अनु० २७।१८)। प्रतिप्रायात् प्रतिन्यवर्तत प्रतिप्रातिष्ठत।

—युज् (युजिर् योगे)। बृहद्रथन्तरे वै श्यैतनौधसे यद्रथन्तराय नौधसं प्रतिप्रयुञ्जन्ति बृहदेवास्मै तत् प्रतिप्रयुञ्जन्ति (पञ्च० ब्रा० ७।१०।८)। प्रतिप्रयुञ्जन्ति प्रतिनिधित्वेन योजयन्तीत्यर्थः।

—वच् (वच परिभाषणे)। यो वै ब्रह्मणे देवेभ्यः प्रजापतयेऽप्रतिप्रोच्याश्वं मेध्यं बध्नाति (तै० ब्रा० ३।८।३।१)। अप्रतिप्रोच्य = अनुक्त्वा तदनुज्ञाम-लब्ध्वा।

—सू (षूङ् प्राणिगर्भविमोचने, षूङ् प्राणिप्रसवे)। पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः (यो० सू० ४।३४)। प्रतिप्रसवः स्वकारणे प्रधाने लय इति तत्ववैशारदी।

—सू (षु प्रसवैश्वर्ययोः, प्रसवोऽभ्यनुज्ञानम्, षू प्रेरणे)। प्रतिप्रसवः प्रतिषिद्धस्य पुनरभ्यनुज्ञानम्।

—स्था (ष्ठा गतिनिवृत्तौ)। अध्वर्यु वै श्रेयान् पापीयान् प्रतिप्रस्थाता (पा० ५।३।५५ सूत्रे भाष्ये)।

—हि (हि गतौ वृद्धौ च)। प्रत्यक् प्रतिप्रहिण्मो यथा कृत्याकृतं हनत् (अथर्व० १०।१।५)। अत्र प्रतिशब्दस्य प्रत्यक्छब्देन गतार्थता नाति-तिरोहिता। अन्यत्रापि च्छन्दस्येवंविधा शैली दृश्यते।

—हृ (हृञ् हरणे)। तस्मिन्प्रतिप्रहरति क्षिप्रं प्राहरतां ततः (राज० ८।२३२६)। प्रतिप्रहरति प्रहारं प्रतिकुर्वाणे।

## प्रतिवि (प्रति+वि)

—ईक्ष् (ईक्ष दर्शने)। न शेकुः सर्वभूतानि पाण्डवं प्रतिवीक्षितुम् (भा० द्रोण० १४६।४१)। प्रतिवीक्षितुमभिमुखं प्रेक्षितुम्। पाण्डवे दृशं पातयितुम्। तस्य दुष्प्रतिवीक्ष्यं तद्भ्रुकुटिसंहितं तदा (रा० २।२३।३)। दुष्प्रतिवीक्ष्यं संमुखतया द्रष्टुमशक्यम्।

—ऊह् (ऊह वितर्के)। सम्भूयैनं प्रतिव्यूहेदधिकं सर्वसम्पदा (का० नी० सा० ११।१६)। प्रतिव्यूहेत् विरुन्ध्यात्। प्रतिबलयेदित्युपाध्यायनिरपेक्षा। वीर्यविषयं द्वन्द्वं प्रतिव्यूहते (प्रतिमा० ६।३)। प्रतिव्यूहते रुणद्धि, वारयति। प्रतिव्यूढशोकदुःखावेगः (अवदा० जा० व्याघ्रो० १)। प्रतिव्यूढो विनीतो विहतः सान्तरायः। मेघनादप्रतिव्यूहैर्नादितास्तु समन्ततः। प्रतिव्यूहैः प्रतिश्रुद्भिः, प्रतिशब्दैः, प्रतिध्वनिभिः।

**—चक्ष् (चक्षिङ् व्यक्तायां वाचि, वेदे दर्शनेऽपि)**। शिरः शिरः प्रति सूरी विचष्टे (तै॰ सं॰ ४।२।५।४)। **प्रतिविचष्टे प्रतिकूलं वीक्षते।**

**—ज्ञा (ज्ञा अवबोधने)**। सन्तः प्रतिविजानन्तो लब्धसंभावनाः स्वयम् (भा॰ सभा॰ ७३।६)। **कृतस्य प्रतीकारं जानन्त इत्यर्थः।**

**—धा (डुधाञ् धारणपोषणयोः)**। देवदत्तस्य समाशं शरावैरोदनेन च यज्ञदत्तः प्रतिविधत्ते (येन विधिस्तदन्तस्य १।१।७२ सू॰ भा॰)। **प्रतिविधत्ते सज्जीकरोति, प्रकल्पयति, उपकल्पयति।** चतुर्विधबला चमूः। राघवस्यानुयात्रार्थं क्षिप्रं प्रतिविधीयताम् (रा॰ २।३६।२)। **उक्तोऽर्थः।** योप्येकान्ते तूष्णीमासीनो भक्तबीजबलीवर्दैः प्रतिविधत्ते स उच्यते पञ्चभिर्हलैः कृषतीति (हेतुमति चेति सूत्रे पदमञ्जर्याम्)। **प्रतिविधत्ते संविधत्ते संभारान् संबिभर्ति।** क्षिप्रमस्मिन्नरव्याघ्र चारः प्रतिविधीयताम् (रा॰ ५।६०।१४)। **प्रेष्यतां नियुज्यतामित्यर्थः।** दोषं तु मे कञ्चित् कथय येन स प्रतिविधीयेत (उत्तर॰ १)। **प्रतिविधीयेत प्रतिक्रियेत।** क्षिप्रमेव कस्मान्न प्रतिविहितमार्येण (मुद्रा॰)। **प्रतिविहितं प्रतिकृतम्।** धर्मः प्रतिविधातव्यो बुद्धया राज्ञा ततस्ततः (भा॰ शां॰ १४२।६)। **प्रतिविधातव्यश्चिकित्सनीयः।** तस्माद्यान्येतस्याः परिभाषायाः प्रयोजनानि तदर्थमेषा परिभाषा कर्तव्या, प्रतिविधेयं दोषेषु (१।१।६ सूत्रे न वा सन्निपातेति वार्तिके भाष्ये)। **दोषा अपनेया इत्यर्थः।** तस्माद्यस्मिन् पक्षेऽल्पीयांसो दोषास्तमास्थाय प्रतिविधेयं दोषेषु (पा॰ १।३।११ सू॰ भाष्ये)। **उक्तोऽर्थः।** सर्वे यथा मां रक्षन्ति तथा प्रतिविधातव्यम् (रा॰ ५।६४।१६)। **तथा प्रतिविधातव्यम्=तथोपाया आस्थातव्याः। निर्णयसागरमुद्रिते रामायणेऽत्र स्थले नायं श्लोक उपलभ्यते, श्लेगलप्रतिसंस्कृते तु स्थितः।** पुत्रदारमप्रतिविधाय प्रव्रजतः पूर्वसाहसदण्डः (कौ॰ अ॰ २।१।२९)। **अप्रतिविधाय संविधामप्रकल्प्य, योगक्षेममकल्पयित्वा।** तस्य प्रतिविधानं च विहितं पूर्वमेव हि (भा॰ आदि॰ २५।१६)। **प्रतिविधानं प्रतीकारः।** यत्र प्रतिविधानार्थः पचिस्तत्रात्मनेपदम् (वा॰ प॰ उपग्रह॰ ३।२०)। **प्रतिविधानं संविधानं संभारसंघटनम्।** न तत्प्रतिविधिं यत्र विदुरिन्द्रादयो नृप (भा॰ पु॰ ८।१०।५३)। **प्रतिविधिः प्रत्युपायः।** ब्रह्मास्त्वं हि विषं प्रोक्तं नास्य प्रतिविधिर्भुवि (भा॰ पु॰ १०।६४ ३३)। **प्रतिविधिः प्रतीकारः, प्रायश्चित्तम्, निष्कृतिः।**

**—श्वस् (श्वस प्राणने)**। प्रतिविश्वसन्तु छन्दांसि (लौ॰ गृ॰ ६।१०)।

### प्रतिव्याङ् (प्रति+वि+आङ्)

**—दा (डुदाञ् दाने)**। यदिद्वाश्नाति यत्पिबति यस्मै कस्मैचन प्रतिव्याददाति (जै॰ ब्रा॰ १।२७)।

## प्रतिसम् (प्रति+सम्)

—ग्रस् (ग्रसु क्षेपे)। तदस्त्रं द्रोणपुत्रस्य तस्मिन्प्रतिसमस्यति। अवर्धत महाराज यथाग्निरनिलोद्धतः (भा० ) ॥ यथास्थानं पुनर्निधानं प्रतिसमसनम्।

—आस् (आस उपवेशने)। एकैकशश्चौघबलानिमान्। कोऽन्यः प्रतिसमासेत कालान्तकयमादृते (भा० वन० ३१३।२७) ॥ प्रतिसमासेत=प्रतिसमासीत, संमुखे तिष्ठेत्। द्रोणकर्णप्रभृतयो येन प्रतिसमासिताः (भा० आश्व० ६।१।२२)। संमुखीभूय पर्यवस्थिताः। न च सर्वे रणे शक्ता रामं प्रतिसमासितुम् (रा० ५।६०।२०)। प्रतिसमासितुं प्रतिमुखे स्थातुम्, प्रतिपक्षतया स्थातुम्, प्रातिभट्येनाभिमुखे स्थातुम्। शक्ष्यन्ति हि महाबाहो पाण्डवाः सृञ्जयैः सह। धार्तराष्ट्रं बलं घोरं क्रुद्धं प्रतिसमासितुम् (भा० उ० ८२। ११) ॥ न......भीष्मद्रोणादयो युद्धे शक्याः प्रतिसमासितुम् (भा० वन० ४६।२६) ॥ उक्तोऽर्थः।

—क्रम् (क्रमु पादविक्षेपे)। तावन्न संसृतिरसौ प्रतिसङ्क्रमेत (भा० पु० ३।६।६)। प्रतिसंक्रमेत=प्रतिसङ्क्रामेत्=निवर्तेत=विरमेत्=प्रलीयेत। भूतानां स्थितिरुत्पत्तिरहं वै प्रतिसङ्क्रमः (भा० पु० ११।१६।३५)। प्रतिसङ्क्रमः प्रलयः। चितिशक्तिरपरिणामिन्यप्रतिसङ्क्रमा (यो० सू० १।२ भाष्ये)। प्रतिसङ्क्रमः संचारः। पञ्चशिखेनाप्युक्तम्—अपरिणामिनी हि भोक्तृशक्तिरप्रतिसङ्क्रमा च परिणामिन्यर्थे प्रतिसङ्क्रान्तेव तद्वृत्तिमनुपतति। प्रतिसंक्रम उपरागः विकारहेतुभूतः संयोग इति यावत्।

—ख्या (ख्या प्रकथने)। स्यादत्र मे यः प्रतिकूलवर्ती दर्पोद्भवादप्रतिसंख्यया वा (अवदा० जा० २१, ११)। अप्रतिसंख्याऽज्ञानम्। आज्येनैता देवताः प्रतिसङ्ख्याय यजेत (आप० श्रौ० ६।४।१५।४३)। प्रतिसंख्यानं ध्यानम्।

—ग्रह् (ग्रह उपादाने)। व्रतोपवासैर्विविधैः प्रतिसङ्गृह्यते हरिः (मात्स्य पु० २४६।२०)। प्रतिसंगृह्यते वशे क्रियते। इत्युक्त्वा राघवः क्रुद्धो भार्गवस्य वरायुधम्। शरं च प्रतिसंगृह्य हस्तात्...(रा० १।७६।४) ॥ प्रतिसंगृह्य बलवदादाय, आच्छिद्य। प्रतिजग्राहेति पाठान्तरम्। तमब्रवीत् स्वागतमित्यनन्तरं राजा प्रहृष्टः प्रतिसंगृहाण च (भा० वि० ७।६)। प्रतिसंगृहाण गृहाण प्रतीच्छ। विषयान् प्रतिसंगृह्य संन्यासं कुर्वते यदि (भा० शां० १७।१०)। प्रतिसंगृह्य परित्यज्य।

—चर् (चर गतिभक्षणयोः)। यो यः स्म समरे पार्थं प्रतिसंचरते नरः (भा० द्रोण० १६।२०)। प्रतिसंचरते = प्रतिसंचरति = प्रतिगच्छति = प्रतिसमास्ते। यदा तु प्रकृतौ याति लयं विश्वमिदं जगत्। तदोच्यते प्राकृतोऽयं विद्वद्भिः प्रतिसंचरः (मार्क० पु० ४६।३)॥ निगदव्याख्यातम्। ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसंचरे। परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् (कूर्म० पू० ख० १२।२६६)॥ प्रतिसंचरः प्रतिसङ्क्रमः प्रतिसर्गः प्रलयः। ब्राह्मो नैमित्तिको नाम तस्यान्ते प्रतिसंचरः (वि० पु० १।३।२२)। उक्तोऽर्थः। शृङ्गवांस्तु महाराज देवानां प्रति-संचरः (भा० भीष्म० ६।५२)। प्रतिसंचरो व्यवहारस्थानमिति नीलकण्ठः।

—ज्ञा (ज्ञा अवबोधने) प्रति हि स्वः संजानीते (श० ब्रा० १।१।४।५)। स्वः स्वमात्मीयं स्वीकरोतीत्यर्थः।

—दिश् (दिश अतिसर्जने, दिशिरुच्चारणक्रिय इति भाष्यम्)। इति स एवं प्रतिसन्दिश्य वेदः प्रवासं जगाम (भा० आदि० ३।८४)। प्रतिसन्दिश्य उपदिश्य, अनुशिष्य। प्रतिसन्दिश्यतां तावद् भर्तुः शार्ङ्गस्य मैथिलि (भट्टि० ८।१२३)।

—धा (डुधाञ् धारणपोषणयोः)। वि वा एतद्यज्ञस्य पर्व स्रंसते•••तया देवतया यज्ञं प्रतिसन्दधाति (श० ब्रा० १२।६।१।२)। प्रतिसन्दधाति पुनर्योजयति। वृषस्य नष्टांस्त्रीन् पादान्••••••प्रतिसन्दधे (भा० पु० १।१७।४२)। उक्तोऽर्थः। यद्यात्मानमेव प्रतिसन्धत्ते (प्र० च० )। सङ्कोचयति प्रतिसंहरति। सौहृदं प्रतिसन्दध्याद् विशीर्णं स्त्री विचक्षणा। प्रतिसन्दध्यात् पुनः सन्दध्यात्। धीमानधीतमपि न प्रतिसन्दधाति (प्र० च० २।२६)। न प्रतिसन्दधाति न स्मरति। प्रतिसन्धाय चास्त्राणि तेऽन्योन्यस्य विशांपते। युयुधुः पाण्डवाश्चैव कौरवाश्च महाबलाः (भा० भीष्म० ७५।३७)॥ प्रतिसन्धाय = सन्धाय (धनुःषु)। प्रतिसंवार्येति पाठान्तरम्। यन्मे व्यवसितं कान्त यच्च मे हृदि वर्तते••••••तत्सर्वं प्रतिसन्धातुमर्हसि (हरि० )॥ प्रतिसन्धातुमवगन्तुम्। अन्वयानुपपत्तिप्रतिसन्धानं च लक्षणाबीजम् (प० ल० मञ्जूषा० लक्षणानिरूपणे)। प्रतिसन्धानं स्मरणमवबोधोऽनुभवः। प्रतिसन्धानं हि यमहमद्राक्षं तमहं स्मरामीत्यादिरूपम् (स्याद्वाद० ८ हेम०)। प्रक्षीणेषु रागद्वेषमोहेषु प्रवृत्ति र्न प्रतिसन्धानाय। प्रतिसन्धिस्तु पूर्वजन्मनिवृत्तौ पुनर्जन्म (४।१।६४ न्यायसू० भा०)। विवरणानपेक्षं वचः। देहेन्द्रियबुद्धिवेदनासन्तानोच्छेदप्रतिसन्धानाभ्यां निरात्मकः प्रेत्यभावः (१।१।२ न्यायसू०

भा०)। प्रतिसन्धानं परस्परसम्बन्धः। सोऽयं प्रयत्न एकमनेकार्थदर्शिनं दर्शन-प्रतिसन्धातारमन्तरेण न स्यात् (१।१।१० न्या० सू० भा०)। प्रतिसन्धातारं स्मर्तारम्। अस्त्रमप्रतिसन्धेयं तदद्भुतमिवाभवत् (भा० उ० ६६।३१)।

—यत् (यती प्रयत्ने)। ते होचुः। स्वैदायन त्वया वीरेणेमं प्रतिसंयतामहा इति (श० ब्रा० ११।४।१।३)। अनेन संयतामहै इमं प्रतिसमासामहै, स्पर्धामहै विवदामहै। संयतिरकर्मकः। प्रतिसंयतिः सकर्मकः। स्वैदायन त्वं वै नो ब्रह्मिष्ठोसीति त्वयेमं वीरेण प्रतिसंयतमहा इति (गो० ब्रा० पूर्वा० ३।६)। उक्तोऽर्थः। बाह्लीकः प्रतिसंयत्तः पराक्रान्तमवारयत् (भा० द्रोण० ५६।४४)। प्रतिसंयत्तः सन्नद्धः।

—रभ् (रभ राभस्ये)। यो यः स्म समरे पार्थं प्रतिसंरभते (भा० द्रोण० ८६।२०)। प्रतिसंरभते वेगेन प्रतिगच्छति आस्कन्दति, प्रतिगृह्णाति। प्रति-संचरत इति पाठान्तरम्।

—विद् (विद ज्ञाने)। इत्येवं बुद्धिप्रतिसंवेदिनं पुरुषमपलपद्भिर्वैना-शिकैः सर्वमेवाकुलीकृतम् (यो० सू० ४।२१ भा०)। बुद्धिप्रतिसंवेदी बुद्धि-ग्राहकः, बुद्धेरवधारकः।

—वेष्ट् (वेष्ट वेष्टने)। अथ संत्यजतो धर्ममधर्मं चानुतिष्ठतः। प्रति-संवेष्टते भूमिरग्नौ चर्माहितं यथा (भा० उ० ३४।२६)॥ प्रतिसंवेष्टते सङ्कुचति।

—सृज् (सृज विसर्गे)। अटव्यन्तपालपुरराष्ट्रमुख्यैश्च प्रतिसंसर्गम् (कौ० अ० २।१६।२१)। प्रतिसंसर्गः संसर्गः। प्रतिरर्थे नान्तरं करोति। प्रति-संसृज्यमानाश्च ......यत्तन्निःसत्तासत्तं निःसद् सन्निरसद् व्यक्तमलिङ्गं प्रधानं तत् प्रतियन्ति (यो० सू० २।१६ भा०)। प्रतिसंसृज्यमानाः प्रलीय-मानाः।

—स्कृ (डुकृञ् करणे ससुट्कः)। तडागभेदकं हन्यात्......यद्वापि प्रतिसंस्कुर्यात् (मनु० ६।२७६)। प्रतिसंस्कुर्यात् पुनः साधु कुर्यात्, समाद-ध्यात्। प्रतिः पुनरर्थे। तत्र कृशमन्नपानप्रतिसंस्कृताभिः क्रियाभिश्चिकित्सेत् (सुश्रुत० २।७७।२)। प्रतिसंस्कृताः समवेताः।

—हृ (हृञ् हरणे)। स्नातस्तु काले यथाविध्यभिहृतमाहृतोऽभ्येतो वा न प्रतिसंहरेत् (आप० ध० १।२।८।१७)। न प्रतिसंहरेत् न मुञ्चेत् न परिहरेत्। तत् साधुकृतसन्धानं प्रतिसंहर सायकम् (शा० १।११)। प्रतिसंहर निषङ्गे